दृष्टातिक्रमश्च देहादिषु तुल्यः । यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः । साधीयश्चैव मुक्तस्य चैकात्म्यं कल्पितं भवतीति । "उपपत्तिविरुद्धमिति" चेत् समानम् । देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानम् । सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति ।

आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः । यद्यपि कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते । दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोके इति ।

नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात् । यद्ययं मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखरागेण[3] मोक्षाय घटमानो न मोक्षमधिगच्छेत्, नाधिगन्तुमर्हतीति । बन्धनसमाज्ञातो हि रागः । न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति ।

प्रहीणनित्यसुखरागस्याप्रतिकूलत्वम् । अथास्य नित्यसुखरागः प्रहीयते तस्मिन्प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति । यद्येवं, मुक्तस्य नित्यं

१ दृष्टातिक्रम इति । स्यादेतत्—"लोकः क्षणिकं सुखं परित्यज्य बुद्धिपूर्वकारी स्थायि सुखमादत्ते । स्थायितमं च सुखमेव मोक्षः" इति । एवं तु शरीरेन्द्रियाद्यपि प्रति वक्तुं शक्यम्— क्षणिकं नश्वरशरीरादि त्यक्त्वा स्थायितरं तदासादयितुं पुरुषा अभिलषन्ति—अतः स्थायितरशरीरेन्द्रियादिरूप एव मोक्षः" इति ।

२ साधीय इति । सोल्लुण्ठवचनम् । शरीरादिरूपत्वमात्मनः परिकल्प्य सुष्ठु साधितो वेदान्ताभिमत एकात्म्यादिसिद्धान्त इति परिहासार्थः ।

३ नित्यसुखे यदि मुमुक्षूणां प्रवृत्तिः रागादेव भवति तर्हि रागनिवृत्तेरभावात् तत्साध्यस्य मोक्षस्याप्यनुपपत्तिरिति तत्राह नित्यसुखरागेणेति ।

४ ननु मोक्षस्य दुःखनिवृत्तिरूपत्वात् तं प्रति प्रवृत्तौ द्वेष एव कारणं भवितुमर्हति—द्वेषश्च बन्ध एवेत्यत आह प्रहाणेति । यस्य सुखानुरागः प्रहीणः न तस्य किमपि वस्तु प्रति प्रतिकूलताबुद्धिर्द्वेषो वा । अनुकूलनिषोधत्वेन हि द्वेषो भवति ॥ प्रहीणरागो यदा मोक्षे प्रवर्तते तदा सुखं लभ्यते न वेति सन्देहं न विचारयति । अथ च निर्धूतसकलप्रतिबन्धकभूतरागद्वेषात्मकस्य मोक्षः सम्पद्यत एव । तथा च तात्पर्यकाराः — एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रमत्तस्य यदि नित्यं सुखं

*सुखं भवति । अथाऽपि न भवति नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्प्यत इति ॥ २२ ॥*

इति प्रमेयलक्षणप्रकरणम् ।

## ४ न्यायपूर्वाङ्गप्रकरणम् ।

स्थानवत एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति । स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्वि-

---

भवति, कामं भवतु, मा वा भूत् । उभयोरपि पक्षयोः वीतरागप्रवृत्तौ मोक्षाधिगमो न विकल्प्यते—न सन्दिग्धो भवतीति' ।

१ पूर्वेषां प्रमाणाधीनत्वात् प्रमेयस्य बुभुत्सितत्वात् ताभ्यां संशयादीनामपकर्षः । साङ्गोपाङ्गे न्याये व्युत्पाद्ये प्रकरणान्तरेभ्यः संशयादीनामुत्कर्षः । तत्रापि सन्दिग्धे प्रयोजनादिचिन्ता न च प्रयोजनमनु संशय इति संशयस्य प्राथम्यम् । प्रथमं चोद्देशसूत्रे प्रमेयानन्तरं संशयस्योद्दिष्टत्वादस्यैवावसर इत्याह स्थानवत इति । सूत्रे तृतीयस्थानस्थितस्येति यावत् ।

२ समानेत्यादिसूत्रम् । अत्र 'विमर्शः संशयः' इति संशयसामान्यलक्षणम् । एकस्मिन्धर्मिणि विरोधिनानार्थावमर्शो 'विमर्शः' 'किंस्वित्' इति ज्ञानम् । तदनेनासमानजातीयेभ्यः प्रमाणादिभ्यः समानजातीयेभ्यश्च विपर्ययादिभ्यः संशयो व्यवच्छिन्नो भवति । समानस्यादि तु त्रीणि विशेषलक्षणानि । तेषु विमर्शः संशय इत्यनुवर्तनीयम् । अत्र 'समानधर्मोपपत्ते' 'अनेकधर्मोपपत्ते' 'विप्रतिपत्ते'—इति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानि । यद्यप्युपपत्तिशब्दः सत्तामात्रवचनस्तथापि पदान्तरसमभिव्याहारादवगम्यते यत्सत्तामात्राभिधानेऽपि तदुपलब्धिर्विवक्षितेति । विषयविषयिणोरभेदविवक्षया सामानाधिकरण्यम्—'उपपत्तिरुपलब्धिरिति'—इत्यादि तात्पर्यं स्पष्टम् ।

वार्तिकानुसारि चेतद्व्याख्यानम् । भाष्यमतेन त्वत्र सूत्रे पञ्च संशयभेदा लक्षिताः, न त्रय एव । 'उपलब्ध्यव्यवस्थातः' 'अनुपलब्ध्यव्यवस्थातः' इत्येतद्द्वयमपि स्वतन्त्रयोरेव संशयभेदयोर्लक्षकमिति भाष्यकारस्य मतम् । एतत्पदद्वयमुक्तसंशयभेदत्रयस्यैव विशेषणमिति वार्तिककृतात्पर्यमतम् । भाष्यमते वार्तिककाराशयश्च स्पष्टं प्रदर्शितः तात्पर्ये—ना खलु समानानेकधर्मोपलब्धौ सत्यां, सत्यां च विशेषस्मृतौ, साधकबाधकप्रमाणासद्भावे संशयो भवतीति न 'उपलब्ध्यनुपलब्ध्यव्यवस्थे' पृथक् संशयकारणे—इति ।

दित्यन्यतर नावधारयति । तदनवधारण ज्ञानं सशय । समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धि "अपेक्षा" सशयस्य प्रवर्तिका वर्तते, तेन विशेषापेक्षो विमर्शो सशय ।

अनेकधर्मोपपत्तेरिति । समानजातीयमसमानजातीयं च 'अनेकम्' । तस्यानेकस्य धर्मोपपत्ते –विशेषस्योभयथा दृष्टत्वात् । समानजातीयेभ्योऽसमान जातीयेभ्यश्चार्था विशिष्यन्ते । गन्धवत्त्वात्पृथिव्यबादिभ्यो विशिष्यते गुणकर्म भ्यश्च । अस्ति च शब्दे विभागजन्यत्व विशेष । तस्मिन्द्रव्य गुण कर्म वेति सन्देह –विशेषस्योभयथा दृष्टत्वात् । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेष, आहोस्विद् गुणस्य सत इति, अथ कर्मण सत इति । विशेषापेक्षा 'अन्य तमस्य व्यवस्थापक धर्मं नोपलभ' इति बुद्धिरिति ।

१ अपेक्षेति । अपेक्षाशब्दो यद्यपीच्छाया वर्तते तथापीह निवृक्षापरो वाच्य, वाक्यसामर्थ्यात् । न च सा सशयस्य हेतु सशये सति तस्या भावात् । तस्माद्वि शेषापेक्षया निवृक्षालक्षणयेह विशेषयो पुरावर्तिनो सादृश्यात्स्मरण सत्यग्रहण लक्षणीयम् । एव च साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिविनश्य दवस्था विशेषस्मृत्या सहाविनश्यदवस्थैकस्मिन् क्षणे सती सशयज्ञानस्य हेतुरिति सिद्धम् ।

२ अनकेति–द्वितीय सशयभेद लक्षयति । समानजातीयेति । समानजातीयम समानजातीयक च–( तस्माद् विशेषका ) धर्म । अथवा समानजातीयमसमानजातीय तस्य धर्म –निवर्तकतया । पूर्वस्मिन् व्याख्याने 'तस्माद् विशेषक' इत्यनया पदयोरध्याहार कल्पनीय ।

३ अबादिभ्य –द्रव्यत्वेन समानजातीयेभ्य । गुणकर्मभ्य '–अद्रव्यत्वाद् समानजातीयेभ्य ।

४ ननु सहचरित समानधर्म सशयकारण भवति न पुनर्विशेषो व्यावृत्त इ यत आह–विशेषस्योभयथेति । यत् खलु सदादिरूपसम्पन्न विशेषवत् तत् समानजातीय भ्योऽसमानजातीयेभ्यश्च व्यावृत्तम् । यथा पृथिवीद्रव्यमबादिद्रव्यतेभ्यो गुणकर्म भ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तम् । तथा शब्द सदादिरूपसम्पन्न विभाग जत्वेन विशेषेण समानासमानजातीयेभ्यो विशिष्यते । तस्माद् भवति द्रव्य गुण कर्म वा इति सशय ।

एतत्तु भाष्यकारीयमुपपादनम् । वार्तिकाभिमतमुपपादन भिन्नप्रकारकम् । तद्यथा । यद्यपि विभागजत्व न द्रव्यादौ क्वचिद् दृष्टम् तथापि तद्व्यतिरेक प्रत्येक द्रव्यादौ दृष्ट इति विभागजत्वेन सदादिविशेषवान् शब्द ( १ ) द्रव्यकर्मभ्या

[1]विप्रतिपत्तेरिति । व्याहतमेकार्थदर्शनं विप्रतिपत्ति । व्याघात विरोधोऽसहभाव इति । अस्त्यात्मेत्येक दर्शनम्–नास्त्यात्मेत्यपरम् । न च सद्भावासद्भावौ सहैकत्र सम्भवत । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारण संशय इति ।

[2]उपलब्ध्यव्यवस्थात खल्वपि । सचोदकमुपलभ्यते तडागादिषु–मरीचिषु चाविद्यमानमुदकमिति । अत कचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धे कि सदुपलभ्यतेऽथासदिति संशयो भवति ।

[3]अनुपलब्ध्यव्यवस्थात । सच्च नोपलभ्यते मूलकीलकोदकादि–असच्चानुत्पन्नं निरुद्ध वा । तत कचिदनुपलभ्यमाने संशय, कि सन्नोपलभ्यते उतासदिति संशयो भवति । विशेषापेक्षा पूर्ववत् ।

[4]पूर्वे समानोऽनेकश्च धर्मो ज्ञेयस्थ, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे । एतावता विशेषेण पुनर्वचनम् ।

[5]समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ॥ २३ ॥

स्थानवता लक्षणमिति समानम् ।

## [6]यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥

---

व्यावर्तमान कि 'गुण' ( २ ) गुणकर्मभ्या व्यावर्तमान कि 'द्रव्यम्', ( ३ ) गुणद्रव्याभ्या व्यावर्तमान कि 'कर्म' इति व्यतिरेकमुखेन तत्तत् स्मारयन् साधारणो धर्मो भवति संशयकारणम् ।

१ विप्रतिपत्तेरिति तृतीय संशयभेद लक्षयति । यद्यपि विरुद्धा प्रतिपत्ति ज्ञान 'विप्रतिपत्ति' तथापि तस्य वादिप्रतिवादिगताया अत्यन्तपरोक्षत्वात् ( अपरेषा ) संशयकारणत्वानुपपत्ते स्वकार्यं प्रवाद लक्षयति । विप्रतिपत्तेर्बहुजनप्रसिद्धत्वमावश्यकम् ।

२ उपलब्धीति–चतुर्थं संशयभेद लक्षयति ।

३ अनुपलब्धीति–पञ्चम संशयभेद लक्षयति ।

४ अत्र भाष्यकार उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्व मत्वा 'समानधर्मोपपत्ते' इत्यनेन गतार्थता परिहरन्नाह पूर्व इति ॥

५ अत्र त्रिविध एव तत्त्वत संशय इति सिद्धान्त प्रदर्श्यते ॥

६ अत्र सूत्रेऽर्थशब्दो गौणमुख्यप्रयोजनावबोधार्थ । तत्र मुख्यम्–सुखस्य प्राप्तिर्दुःखस्य परिहारश्च । गौण तु तत्साधनम् ।

यमर्थमाप्तव्यं हातव्यं वा [1]व्यवसाय [2]तदाप्तिहानोपायमनुतिष्ठति, प्रयोजनं तद्वेदितव्यम् प्रवृत्तिहेतुत्वात्। इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकार । एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

[4]लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥२५॥

[5]लोकसामान्यमनतीता लौकिका, [6]नैसर्गिकं [7]वैनयिकं बुद्ध्यतिशयमप्राप्ता । तद्विपरीता परीक्षका, तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोऽर्थो दृष्टान्त । [8]दृष्टान्तविरोधेन हि प्रतिपक्षा प्रतिषेद्धव्या भवन्तीति दृष्टान्तसमाधिना च स्वपक्षा स्थापनीया भवन्तीत्यवयवेषु चोदाहरणाय कल्पत इति ॥ २५ ॥

इति न्यायपूर्वाङ्गप्रकरणम् ।

१ व्यवसायेति तात्पर्यमस्मत. पाठ. । सूत्रस्थस्य 'अधिकृत्येति' पदस्य व्याख्यानं 'व्यवसाय' निश्चित्येति ।

२ तदाप्तीति। ससाधनौ च सुखदु खप्राप्तिपरिहारौ 'अर्थ '। न च सुखदु खप्राप्तिपरिहारौ स्वरूपेण प्रवृत्तिनिवृत्तिगोचराविति तदुपायप्रवृत्त्यैव तन्नप्रवृत्तिगोचरा विति दर्शयति ।

३ ननु सूत्रे 'अधिकृत्ये' त्यस्मि भाष्ये व्यवसायेति तत्कृता नासमञ्जसम्-इत्यत आह व्यवसाय एवार्थस्य 'अधिकार' इति ।

४ संशये प्रयोजने च सति क पुनरेतत्साध्यसम्बद्ध साधनमुपलभ्येय यदुपादायैतत् साधयेयमिति जिज्ञासाक्रमानुरोधेन दृष्टान्तस्यायमवसर ।

५ लौकिकेति लौकिका परीक्षकाश्च पृथग् गृह्यन्ते । तेनाकाशादरपि दृष्टान्तत्व सम्भवति ।

६ नैसर्गिकमिति स्वाभाविकमयत्नसिद्धमिति यावत् ।

७ वैनयिकमिति शास्त्रादिपरिशीलनोपलब्धमित्यर्थ ।

एतदुभयरहिता 'लौकिका ' प्रतिपाद्या, उभयसहिताश्च 'परीक्षका ' प्रतिपादका इति भाष्यम् । तदनेन वादिप्रतिवादिनावुक्तौ वेदितव्यौ ।

८ दृष्टान्तेति लक्षणप्रयोजनमाह ।

## ५ न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ।

अथ सिद्धान्त । इदमित्थंभूतं चेत्यभ्यनुज्ञायमानमर्थजातं ' सिद्धम् ' सिद्धस्य ' संस्थिति ' सिद्धान्त । संस्थितिरित्थंभावव्यवस्था धर्मनियम । स खल्वयम्—

### तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥

तन्त्रार्थसंस्थिति तन्त्रसंस्थिति । तन्त्रमितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेश शास्त्रम् । अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थिति । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रह , तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्त ॥ २६ ॥

*तन्त्रभेदात्तु खलु स चतुर्विध —*

---

१ अथ सिद्धान्त इति । अत्र भाष्यकार सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्ट अथ सिद्धान्त इत्यादिनेति तात्पर्योक्त्याधारेण– सामान्यलक्षणसूत्र किमप्यासीदित्यस्त्वेऽपि न तदप्युपलभ्यते ' इति केषाचित् कल्पनम् । तदसमञ्जसम् तन्त्राधिकरणेत्यादे षड्विंशसूत्रस्य सिद्धान्तसामान्यलक्षणस्वरूपत्वात् । वस्तुतस्तु ' सूत्रपाठात् प्रागेव तत्तात्पर्यमुपोद्घातरूपेणैव वर्णितम् इत्यतावदत्र तात्पर्योक्तस्तात्पर्यम् ।

२ इदमिति सामान्यतोऽवगममाह, इत्थंभूत चेति विशेष ।

३ संस्थितिरिति । सामान्योपक्रमस्याभ्युपगमस्य प्रमाणत विशेषपर्यन्तता परिसमाप्तिरित्यर्थ ।

४ तन्त्रेत्यादिसूत्रम् । तन्त्रम् अधिकरण यथासम्भवम् ते तन्त्राधिकरणा तेषामभ्युपगमसंस्थिति इत्थं भावव्यवस्था धर्मनियम सिद्धान्तो भवतीति सूत्रार्थ । तन्यन्ते व्युत्पाद्यन्ते प्रमेयाण्यनेनेति तन्त्रम् ' प्रमाणम् । तदवाधिकरणमाश्रया ज्ञापकत्वेन येषामर्थाना ते तथोक्ता ।

५ षड्विंशसूत्रान्तरस्था भाष्यपङ्क्तयो यदि तत्सूत्रव्याख्यारूपेण गृह्यन्ते तद् तन्त्रस्य संस्थिति , अधिकरणस्य संस्थिति अभ्युपगमस्य संस्थिति –इत्यवरूप समास प्राप्तः । तत्तु नोचितमिव प्रतिभाति । एव सति षड्विंशसूत्र विभागपर भवति । तथा च सप्तविंशस्यापि सूत्रस्य तथात्वात्पुनरुक्तता स्यात् ।

पूर्वोक्त सर्व विचार्यैव तात्पर्यकारेण तन्त्रार्थसंस्थितिरित्यादिषड्विंशसप्तविंश सूत्रमध्यपठिता भाष्यपङ्क्तय सप्तविंशसूत्रव्याख्यारूपेण गृहीता । उक्त च व्याख्यान पूर्वकमेव विभागसूत्र ( २७ ) पठति तन्त्रार्थसंस्थितिरिति । तन्त्रग्रहणेन च सर्व तन्त्रप्रतितन्त्रयोरुपादानम् , तयोरपि तन्त्रत्वादिति ।

६ अनवधारितेति । साक्षात्सूत्रे नोक्त । यथा मनस इन्द्रियत्वम् ।

## ६ न्यायस्वरूपप्रकरणम् ।

अथावयवा —

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥

" दशावयवानेके नैयायिका वाक्ये सञ्चक्षते । जिज्ञासा संशय शक्यप्राप्ति प्रयोजन संशयव्युदास इति । ते कस्मान्नोच्यन्त " इति ।

---

अथापत्ति '-वाक्यानुपपन्ना (ननु तद्विरुद्धो) याऽथ साऽधिकरणसिद्धान्त इति मन्दस्य सुस्पष्टत्वात् । अत्र सर्व सिद्धान्ता साक्षात् स्वमुखेनार्थापत्त्या वाऽभिधीयन्ते तन्नास्ति प्रयोजनमत्र नानाप्रभेदविवचनाया इति-बाह्यनैयायिकस्य दिङ्नागस्याक्षेप । परिहृतश्चाय सविस्तर वार्तिककारेण ।

१ प्रतिज्ञेत्यादि सूत्रम् । अवयवसामान्यलक्षणमन्तरेणाशक्या विभागोद्देशस्त द्विशेषलक्षण चेति केचिदाक्षिपन्ति । तत्परिहार उक्तस्तत्पय-विभागपरमप्येतत् सूत्र सूचयत्येवावयवसामान्यलक्षणम् । अवयवपदादेव सामान्यलक्षणमवगम्यते । अवयव त्वनेकवाक्यता द्योतता । सा च पदानां परस्परप्रत्यायितापेक्षिता सम्बन्धयाथार्थ्य यत्र भवति । तस्मात्तथाविधार्थप्रत्यायनमेव प्रतिज्ञादीनामवयवसामान्यलक्षण सिद्ध मिति । त्रयोऽवयवा इति मीमांसका । दशावयवा इति केचिन्नैयायिका स्वयूथ्या एव भाष्यकारेण निर्दिष्टा । जैननैयायिकभद्रबाहुमतेनापि दशावयवा । ते यथा । (१) प्रतिज्ञा (अहिंसा परमो धर्म ) (२) प्रतिज्ञाविभक्ति (जैनशास्त्रानुसारेण अहिंसा धर्म )-(३) हेतु (अहिंसकाना देवप्रियत्वात् )-(४) हेतुविभक्ति (अहिंसकेभ्योऽन्य धर्मलोकेषु वस्तु न लभन्ते )(५) विपक्ष (यान्निकहिंसापरायणा अपि स्वर्ग वसन्तीति वचनम् )-(६) विपक्षप्रतिषेध (अहिंसका कदापि देवप्रिया न भवन्ति ) (७) दृष्टान्त (अर्हन्तो हिंसाभयादन्न न पचन्ति )-(८) आशङ्का (अन्ये पुरुषा यदन्न पचन्ति तदन्नमर्हन्तोऽपि भुञ्जन्ति, अतस्तेऽपि हिंसादोषेण दुष्यन्त एव -(९) आशङ्काप्रतिषेध (अर्हदुद्देशेनैव यन्न पच्यते तद्गतहिंसादोषेण ते न दुष्यन्ति )-(१०) निगमनम्-(अतोऽहिंसा परमो धर्म )।

भाष्योक्ताना दशानां मध्ये संशयसंशयव्युदासयो स्थाने भद्रबाहूक्ताशङ्काप्रतिषेधाविन्येतावदेव सादृश्यमत्र ।

एतेषामतनिराकरणार्थमेवैतत्सूत्रम् । परप्रतिपादका शब्दा ये वाक्य सम्भूयेतरेतरप्रत्यायितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति त अवयवा ' । यत एत सहैव वाक्यार्थं निष्पादयन्त्यतोऽवयवा इत्युच्यन्ते । भाष्ये दशावयवोक्ता जिज्ञासादयस्तु परप्रतिपादका न भवन्ति अतो न तेऽनुमानवाक्यस्यावयवा भवितुमर्हन्ति । अपरं च-निश्चित एव साधयिता भवति-जिज्ञासासंशयौ तु न निश्चितौ । प्रयोजनमपि साधनादेवावगम्यते, शक्यप्राप्तिश्च । अत एते अपि नानुमानवाक्यस्यावयवौ ॥

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

तत्रैताश्चतस्रः संस्थितयोऽर्थान्तरभूताः ॥ २७ ॥

तासाम्[1]—

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

यथा घ्राणादीनीन्द्रियाणि[2], गन्धादय इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य ग्रहणमिति ॥ २८ ॥

समानतन्त्रसिद्धः[3] परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥

यथा नासत आत्मलाभः न सत आत्महानम्, निरतिशयाश्चेतनाः[4], तन्त्रसिद्धदेहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु[5] च विशेष इति साङ्ख्यानाम्। पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते उत्पन्नं निरुध्यत इति योगानाम्[6] ॥ २९ ॥

यत्सिद्धावन्यप्रकरणसिद्धिः[7] सोऽधिकरणसिद्धान्तः ॥ ३० ॥

---

१ तासामिति संस्थितीनामिति यावत्।

२ घ्राणादीनीति। यद्यपि घ्राणादिष्वपि भौतिकत्वादौ विप्रतिपत्तयस्तथाऽपीन्द्रियत्वे नास्ति विप्रतिपत्तिरिति।

३ समानेत्यादि सूत्रम्। समानशब्द एकपर्यायः। नैयायिकानां 'समानतन्त्रम्' न्यायशास्त्रम्।

४ निरतिशया इति। अपरिणामिन इत्यर्थः। परिणामश्चोपचयापचयरूपो धर्मः।

५ तत्कारणेष्विति। प्राकृतेषु तत्कारणेषु च महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु विशेषोऽतिशय इत्यर्थः।

६ योगानामिति। प्रसिद्धयोगशास्त्रेऽसदुत्पत्तेरनभ्युपगमाद् योगशब्देनात्र वैशेषिका एवाभिप्रेता इति कश्चित्। तत्त्वतस्तु योगशब्देनात्र नैयायिका एवाभिप्रेताः। एतस्मिन्नर्थेऽस्य प्रयोगो बहुशो लभ्यते प्राचीनग्रन्थेषु।

७ यत्सिद्धाविति सूत्रम्। यस्यार्थस्य साध्यस्य हेतोर्वा सिद्धौ—इति विषयसप्तमी। तेन यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भावेण गम्यन्ते सोऽर्थः साक्षादधिक्रियमाणस्तदनुषङ्गिणां चाधारः—तत्सिद्धः सपक्षो वा भवतु हेतुर्वा—अनेन रूपेण अधिकरणसिद्धान्तः। पक्षस्तावत्—विवादाध्यासितम् उपलब्धिमत्कारणम्। उत्पत्तिमत्त्वात् वस्त्रवदिति। अत्र हि पृथिव्यादिगतेन उत्पत्तिमत्त्वेन उपलब्धिमत्पूर्वकत्वम् तद्गतं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वाद्युपेतमेव सिध्यति, नान्यथेहोपलब्धिमत्पूर्वकत्वस्य सिद्धिरिति। भाष्ये हेतुप्रतिसन्धाने सिध्यत् स्वानुषङ्गयथान्तरान्वितं सिध्यतीत्युदाहृतम्।

यस्यार्थस्य सिद्धावन्येऽर्था अनुपज्यन्ते न तैर्विना सोऽर्थे सिद्धयति, तेऽर्था यदधिष्ठाना सोधिकरणसिद्धान्त । यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति । अत्रानुपङ्गिणोऽर्था –इन्द्रियनानात्व, नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्त द्रव्य गुणाधिकरणम् , अनियतविषयाश्चेतना इति । पूर्वार्थसिद्धावेतेऽर्था सिद्धयन्ति न तैर्विना सोऽर्थ सम्भवतीति ॥ ३० ॥

**अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥**

यत्र किञ्चिदर्थजातमपरीक्षितमभ्युपगम्यते —अस्ति द्रव्य शब्द , स तु नित्योऽथानित्य इति, द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेष परीक्ष्यते, सोऽभ्युगमसिद्धान्त स्वबुद्धयतिशयचिख्यापयिषया परबुद्धयवज्ञानाच्च प्रवर्तत इति ॥ ३१ ॥

इति न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ।

---

अत्र परिशुद्धि• । एतद् भूषणादयो द्विधा व्याचक्षते । ( १ ) यस्यार्थस्य सर्वज्ञत्वादिविशेषितस्य सिद्धौ क्षित्यादि सकर्तृकत्वस्य प्रक्रियमाणस्य सिद्धि स सर्वज्ञत्वादिविशेषोऽधिकरणसिद्धान्त । ( २ ) अथवा-यस्य सकर्तृकत्वाद सिद्धावन्तर्भूता अन्येऽभिप्रायकान्ता सर्वज्ञत्वादयो विशेषा सिध्यन्ति सोऽधिकरण सिद्धान्त । तदत्र पक्षद्वयेऽपि फलतो न कश्चिद्विशेष इति ।

अत्राद्य सिद्धान्तद्वय वाचनिकमन्यद्वय चाभिप्रायिकमिति विवेक ।

१ पूर्वार्थेति । 'पूर्व अर्थ' य साक्षादधिकृत., तस्य सिद्धौ अन्तर्गत इत्यर्थ ।

२ अपरीक्षितेत्यादि सूत्रम् । अपरीक्षितोऽसूत्रित ( सूत्रितस्य प्राय परीक्षा सम्भवात् )। योऽर्थ सूत्रेषु नोपनिबद्ध शास्त्रे चाभ्युपगत सोऽभ्युपगमसिद्धान्त इति वार्तिकम् । तदयश्च–असूत्रिताभ्युपगमात् इतो यतस्तद्विशेषपरीक्षण क्रियते तस्माद् विशेषपरीक्षणात् ज्ञायते–असूत्रितमप्यभ्युपगत सूत्रकारेणेति–तात्पर्यं स्पष्टम् ।

परीक्षा-विचार-विनैव सुस्पष्टतया य पक्ष स्वीक्रियते स एव 'अपरीक्षित' इत्येवार्थ समधान प्रतिभाति । यत्र शास्त्रे सूत्राणि न सन्ति तत्रासूत्रितत्वस्या प्रसिद्ध प्रसिद्धेश्च तत्राप्यभ्युपगमसिद्धान्तानाम् ।

३ परबुद्धयवज्ञानादिति । एतद् वार्तिककाराय न रोचते । तथा चोक्त वार्तिक-परबुद्धयवज्ञानाच्च प्रवर्तत इति न युक्तम्, परावज्ञानस्यायुक्तत्वात् ।

अत्र–' अथापत्तरधिकरणसिद्धान्तस्य न कोऽपि भेद ' इति केचित् । तदसत् । वाक्यार्थप्रतिपत्तौ तद्विपरीतवाक्यार्थप्रतिपत्तिरर्थापत्ति –यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यस्य दिवाभोजननिषेध ' अर्थ , तस्मात् तद्विपरीतरात्रिभोजनविधि

उदाहरणवैधर्म्याच्च साध्यसाधन हेतु । कथम् ? अनित्य शब्द – उत्पत्तिधर्मकत्वात्–अनुत्पत्तिधर्मक नित्य यथा आत्मादि द्रव्यमिति ॥ ३५॥

**साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥**

साध्येन साधर्म्यं समानधर्मता । साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इति। तस्य धर्मस्तद्धर्म । तस्य साध्यस्य। साध्य च द्विविध धर्मिविशिष्टो

---

१ हेतावुक्ते नाप्यासोऽसौ साध्यधर्मेण हेतुभावे व्यवतिष्ठते न च व्याप्तिदर्शनमुदाहरणमन्तरेणेति हेतुलक्षणानन्तर क्रमप्राप्तमुदाहरणलक्षणमाह साध्येत्यादि सूत्रम् । ‘साध्येन’ धर्मिणा ( शब्देन ) ‘साधर्म्य’ दृष्टान्तस्य स्थाल्यादे ( कृतकत्वम् ) तद्वयनित्यत्वेन साध्ये ( शब्द ) दृष्टान्ते च ( स्थाल्यादौ ) समानम् । ‘तस्मात्’ कारणात् प्रयोजकात्—‘तद्धर्मभावी’ तस्यैव साध्यस्य ( शब्दस्य ) ‘धर्म’ धर्मान्तरम्—येन विशिष्ट. शब्द. सिषाधयिषित ( अनित्यत्वेन ) तत् अनित्यत्व धर्म, स एव भाव ‘तद्भाव’ ( तस्य भाव ‘तद्भाव’ इति तु भाष्ये )। सोऽस्यास्तीति ‘तद्धर्मभावी’ स्थाल्यादि अनित्यत्वधर्मवानिति यावत्। तेन तादृशा दृष्टान्तेनोपलक्षित तद्विशेषवचनमुदाहरणम् । ( तात्पर्यम् )

अत्र प्रकरणे साध्यपद पक्षपर वदितव्यम् । अत्र चाक्षेपो ( वार्तिके )। “उदाहरणमित्यत्र करणकारकपरिग्रहाद् वचन ( वाक्यरूपम् ) उदाहरणम्, दृष्टान्तश्चार्थ । न च अर्थवचनयो सामानाधिकरण्य युज्यते। न च विषाणादिभि द्वित्वभिधान गवा समानाधिकरण भवति” इति।

तत्रैव च तत्परिहारोऽप्युक्त । वचनविशेषणत्वेन दृष्टान्तस्योपादानाच्च स्वतन्त्रो दृष्टान्त उदाहरणम्, अपि तु साध्यसाधर्म्यात् तद्धर्मभावित्वे सति अभिधीयमान इति। दृष्टान्तानुरूप नोदाहरणस्य वचनात्मकस्य स्वरूपतो लक्षण सम्भवति। तस्मात् स्वाभिधायकवचनोपलक्षकत्वेन लक्षणत्व सामानाधिकरण्य भाते इति तात्पर्यम्।

भाष्यवार्तिकतात्पर्यानुसारिणी चैषा सूत्रव्याख्या। अपरा तु व्याख्या स्पष्टतरा प्रतिभाति। ‘साध्येन’ धर्मेणानित्यत्वेन ‘साधर्म्यात्’ साधारण्यात् सामानाधिकरण्यात्–साध्यसमानाधिकरण धर्मान्तरमुत्पत्तिधर्मकत्वमवलम्ब्य–‘तद्धर्मभावी’ साध्यधर्मवान् ‘दृष्टान्त उदाहरणम्’ इति। धर्मिरूपस्य दृष्टान्तस्य धर्मरूपेण साध्येन साधर्म्यासम्भवाद्वैतद्व्याख्यान परित्यक्तमाचार्यैरिति प्रतिभाति। किन्तु भाष्य एवाग्र उक्तमुपलभ्यते यदत्र साधर्म्यपदेन “एकस्मिन् द्वयोर्धर्मयोर्व्यवस्थानमेव” विवक्षितम्, न च सादृश्यमेव। तथा चापेक्षित सामानाधिकरण्य कृतकत्वानित्यत्वयोर्दृष्टान्ते सिद्धमेव।

आचार्यदृशोयानामत्र दृष्टान्तलक्षणसूत्रे नानापाठकल्पन तद्दूषणमार्षस्यैव लक्षणस्य व्यवस्थापन च वार्तिकादनुसन्धेयम्॥

साधर्म्योक्ते[1] वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्ति-धर्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम्। निगम्यन्ते–समर्थ्यन्ते–सम्बध्यन्ते।

तत्र साधर्म्योक्ते तावद्धेतौ वाक्यमनित्यः शब्द इति प्रतिज्ञा, उत्पत्ति-धर्मकत्वादिति हेतुः, उत्पत्तिधर्मकं स्थाल्यादिद्रव्यमनित्यमित्युदाहरणम्, तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः, तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। वैधर्म्योक्तेऽपि–अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम्, न च तथानुत्पत्तिधर्मकः शब्दः, तस्मादुत्पत्ति-धर्मकत्वादनित्यः शब्द इति।

अवयवसमुदाये च वाक्ये संभूयेतरेतराभिसम्बन्धात्[2] प्रमाणान्यर्थान् साधयन्तीति। सम्भवस्तावत्[3]–शब्दविषया प्रतिज्ञा। आप्तोपदेशस्य[4] प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादनृषेश्च स्वातन्त्र्यानुपपत्तेः। अनुमानं[5] हेतुः उदाहरणे

---

रूपेषु हेतावविनाभावः परिसमाप्यते। तस्मात् अबाधितत्वासत्प्रतिपक्षितत्वरूपद्वयसूचनाय निगमनमपेक्षितम्। अन्यथा बाधने सत्प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति। सोऽयं प्रसङ्गः प्रतिज्ञाविषयस्यार्थस्यादोषप्रमाणमूलावयवापवर्त्ता सत्या प्रतिज्ञेयस्यार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिपिध्यते। न च प्रतिज्ञावचनादेव तत्सिद्धिः, तस्य साध्यपरत्वात्।

१ साधर्म्योक्ते वा वैधर्म्योक्त इति। साधर्म्यानुसारेण वैधर्म्यानुसारेण वा हेतावुक्ते सतीत्यर्थः।

२ सम्भूयेति। अनुमानवाक्येऽनेकप्रमाणानि 'सम्भवन्ति' समेत्य भवन्ति–सम्मिलन्तीति यावत्। अथ च इतरेतरमभिसम्बद्धा भवन्ति।

३ सम्भवतरेतराभिसम्बन्धयोः प्रथमं सम्भवं प्रदर्शयति–सम्भव इति। 'समेत्य भवः' सम्भवः–सम्मिश्रणमिति यावत्।

४ शब्देति। प्रतिज्ञावाक्यं शाब्दप्रमाणस्वभावमनुभवति। ननु प्रतिज्ञा यदि शाब्दं प्रमाणरूपं कथं तर्हि तत्रानुमानवाक्येन साधनापेक्षेत्यत आह आप्तोपदेशस्येति। 'अनृषेराप्तोपदेशस्य स्वातन्त्र्यानुपपत्तेः प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादिति' सम्बन्धः। य आप्तोपदेशः साक्षादृषिमुखाद्य श्रूयते तत्र स्वतन्त्रं प्रामाण्यं नास्ति, तादृशस्य च साधकत्वेन प्रत्यक्षानुमानयोरस्त्येवापेक्षेति भावः।

५ अनुमानं हेतुरिति। साध्यसाधनयोर्व्याप्तिमुदाहरणे दृष्ट्वैव हेतौ हेतुत्वनिश्चयः। 'उदाहरणे सादृश्यप्रतिपत्तेरनुमानं हेतुरिति' सम्बन्धः।

सादृश्यप्रतिपत्ते । [1]तत्रोदाहरणभाष्ये व्याख्यातम् । प्रत्यक्षविषयमुदाहरण[2]दृष्टेनादृष्टसिद्धे । उपमानमुपनय , [3]तथेत्युपसंहारात् , [4]न च तथेति चोपमा धर्मप्रतिषेधे विपरीतधर्मोपसहारसिद्धे । [5]सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्श निगमनमिति ।

[6]इतरेतराभिसम्बन्धोऽपि । असत्या प्रतिज्ञायामनाश्रया हेत्वादयो प्रवर्तेरन् । असति हेतो कस्य साधनभाव प्रदर्श्येत । उदाहरणे साध्ये च कस्योपसहार स्यात्कस्य चापदेशात्प्रतिज्ञाया पुनर्वचन निगमन स्यादिति । असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत कस्य वा साधर्म्यवशादुपसहार प्रवर्तेत । उपनय चान्तरेण साध्येऽनुपसहृत साधको धर्मो नार्थं साधयेत् । निगमनाभावे चानभिव्यक्तसम्बन्धाना प्रतिज्ञादीना मेकार्थेन प्रवर्तन तथेति प्रतिपादनं कस्येति ।

[7]अथावयवार्थ । साध्यस्य धर्मस्य धर्मिणा सम्बन्धोपादान प्रतिज्ञार्थ । उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचन हेत्वर्थ ।

---

१ तत्रेति। 'साऽयमेकस्मिन्द्वयोधर्मयो साध्यसाधनभाव साधर्म्याद् व्यवस्थित उपलभ्यते, त दृष्टान्त उपलभमान शब्दऽप्यनुमिनातीति' पञ्चत्रिंशत्सूत्रभाष्यवाक्य स्यानुसन्धानमत्र विवक्षितम् ।

२ दृष्टेनेति । दृष्टेन ( प्रत्यक्षेण उदाहरणेन ) अदृष्टस्य ( निगमनस्य ) सिद्ध सुप्रसिद्धत्वादिति शेष ।

३ तथेत्युपसहारादिति। 'यथा दृष्टान्तो हेतुप्रतिबद्धस्तथा पक्षोऽपीति' उप मानवाक्यमन्वयिन्यनुमाने ।

४ न च तथेतीति—उपमानवाक्यस्वरूप व्यतिरेकिण्यनुमाने ।

५ सर्वेषामिति। निगमनवाक्य सकलोक्तप्रमाणसम्प्लवसाधितमर्थं निरूपयति प्रतिज्ञादीनामुपनयान्तानाम् 'एकाऽर्थं' स्वभावप्रतिबद्ध लि‌ङ्ग वा अनुमेय वा— तस्य प्रतिपत्ति , तस्या 'सामर्थ्यप्रदर्शन' निगमनमिति । तदनेनैकार्थत्व दर्शितम् ॥

६ प्रमाणानामनुमानवाक्येति 'सम्भव'—सम्भूयकारित्व—प्रदर्श्याधुना तपा मितरेतराभिसम्बन्ध प्रदर्शयति–इतरेतराभिसम्बन्धोऽपीति । अस्तीति शेष । द्विविध मनुमानवाक्यप्रयोजनम् । तत्रावान्तर स्वभावप्रतिबद्धलिङ्गप्रतीति , परम च साध्य प्रतीतिरिति । सम्प्रति विभागे साकाङ्क्षत्व दर्शयति ।

७ अथावयवार्थ इति । अवयवाना प्रातिस्विकमुक्तमपि प्रयोजन शिष्यहिततया भाष्यकार प्रतिपादयति ।

वा धर्म—शब्दस्यानित्यत्वं, धर्मविशिष्टो वा धर्मी—अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणेन गृह्यत इति। कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मस्तस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यात्तद्धर्मभावी भवति, स चोदाहरणमिष्यते। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम्। तच्च भूत्वा न भवति, आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यम्। सोऽयमेकस्मिन्द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते। तं दृष्टान्ते उपलभमानः शब्देऽप्यनुमिनोति—शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति। उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम्॥ ३६॥

## तद्विपर्ययाद्वा विपरीतम्॥ ३७॥

दृष्टान्त उदाहरणमिति प्रकृतम्। साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति। अनित्यः शब्दः उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकं नित्यमात्मादि। सोऽयमात्मादिर्दृष्टान्तः। साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन् न भवतीति। अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति—उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति।

साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्। पूर्वस्मिन्

१ इहोत्तरमिति। धर्मविशिष्टो धर्मीत्यर्थः।

२ पृथगिति। यस्मात् धर्मः पृथगेव धर्मशब्देनोक्तोऽतो न स एव तत्पदेनापि व्यपदेष्टुं शक्यत।

३ तत्रेति। शब्दोऽनित्य उत्पत्तिधर्मकत्वादित्यस्मिन्ननुमाने।

४ न भवति स्वस्य स्वात्मानमात्मानं जहाति निरुध्यत इति च।

५ तद्विपर्ययादिति। अत्र वा शब्दः समुच्चये वेदितव्यः।

६ अनित्यः शब्द इति। अत्र भाष्यकारेणान्वयव्यतिरेकी पूर्वसूत्रोदाहृतोऽप्युदाहृतः साधनधर्माभावप्रयुक्तत्वं च साध्यधर्माभावस्योक्तम्। तच्चायुक्तम्। अन्वयव्यतिरेकिणि हेतौ सत्यपि वैधर्म्ये साधर्म्योदाहरणमेवोचितम्, तत्र तत्पूर्वकत्वादेव वैधर्म्यप्रतीतेः। अनुमानेन सिध्यतोऽप्यस्य वक्रेण साधनायोगादित्यादि भाष्योक्तोदाहरणेऽरोच प्रदर्श्य तात्पर्यकारेणोदाहरणान्तरं प्रदर्शितम्। तद्यथा नावश्यं शरीरं निरात्मकम् अप्राणित्वप्रसङ्गात् घटादिवदिति।

दृष्टान्ते यौ तौ धर्मो साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति । उत्तरस्मिन् दृष्टान्ते तयोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्याभावादितरस्याभावं साध्येऽनुमिनोतीति ।

तदेतद्धेत्वाभासेषु न सम्भवतीत्यहेतवो हेत्वाभासा ।

तदिदं हेतूदाहरणयोः साधर्म्यं परमसूक्ष्मं दु खबोधं पण्डितरूपेवदनीयमिति ॥ ३७ ॥

उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

'उदाहरणापेक्ष' उदाहरणतन्त्र उदाहरणवश. । वश –सामर्थ्यम् । साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्य दृष्ट-तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसह्रियते । साध्यवैधर्म्य-युक्ते पुनरुदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मक नित्य दृष्टं–न च तथा शब्द इति–अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसह्रियते । तदिदमुपसहारद्वैतमुदाहरणद्वैताद्भवति ।

[illegible]

हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥

---

१ पण्डितरूपवेदनीयमिति । प्रशस्तपण्डितवेदनीयमित्यर्थः ।

२ तथात्वेनोपसहारस्य–अतथात्वेनोपसहारस्य–इत्यर्थाभ्यामुदाहरणसूत्रमुभय-मुपलक्षयति । अत्रापि उदाहरणापेक्ष साध्यस्योपसहार उपनय इति सामान्यलक्षणम् ।

३ वेदितव्य इति । वचनात्मके उपनये लक्षणसमन्वयार्थमिति शेष ।

४ द्विविधस्येति निगमनलक्षणावतारपर भाष्यम् । साधर्म्येण वैधर्म्येण द्विविधानामपि हेतूदाहरणोपनयानां समान निगमनलक्षणमित्यर्थ । अवतरणस्थ 'समानम्' इति पदम् सूत्रस्थेन 'निगमनम्' इत्यनेनसम्बध्यते ।

५ हेत्वित्यादि सूत्रम् । यद्यपि च सिद्धनिर्देशो निगमन, साध्यनिर्देशश्च प्रतिज्ञा, तथापि यस्यैव प्रतिज्ञायां साध्यत्वमासीत् तस्यैव निगमने सिद्धत्वमित्यव-स्थायन्तमेकमाश्रित्य समानविषयतया निगमन प्रतिज्ञेत्युपपद्यते । तथा च पुनर्वचन-मुपपन्नमिति । अत्र केचिदाहु –'निगमनमसाधनाङ्गम् , प्रतिज्ञया गतार्थत्वादिति' । अपाकृत च तन्मत वार्तिककारेण । तद्यथा—चतुर्भि स्त्ववयवैर्हेतोस्त्रीणि रूपाणि द्वे या रूपे प्रतिपादिते, न त्वबाधितविषयत्वासत्प्रतिपक्षितत्वे । पञ्चमु वा चतुर्षु वा,

धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थं । साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थं । उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम् ।

न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते । अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते । व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेनोपादानम्, न साधर्म्यमात्रस्य न वैधर्म्यमात्रस्य वेति ॥ ३९ ॥

इति न्यायस्वरूपप्रकरणम् ॥

## ७. न्यायोत्तराङ्गलक्षणप्रकरणम् ।

अत उर्ध्वं तर्को लक्षणीय इति । अथेदमुच्यते—

### अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥

---

१ निगमनमिति । साधने प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति सोऽयं प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिबध्यते । न च प्रतिज्ञावचनादेव तत्सिद्धम् । प्रतिज्ञा ह्यवयवान्तरसाधनसापेक्षा सन्दिग्धप्रायमेवार्थमुपन्यस्यति । निगमनं पुनस्सकलावयवसाधितं निस्संशयमेवार्थं सिद्धस्वरूपं ब्रवीतीति महान् भेदः ।

२ अत इति । अवयवानन्तरं तर्कस्यैवादरः, प्रतिपक्षनिराकरणेन चानुमानस्यापोद्बलकश्चायमतोऽधुनाऽयमेव क्रमप्राप्त इति ।

३ अविज्ञातेत्यादि सूत्रम् । यस्यां प्रतिज्ञायां प्रमाणं प्रवर्तितुमुद्यतं तद्विपर्ययाशङ्कायां तावन्न प्रवर्तते न यावदनिष्टापत्त्या विपर्ययाशङ्काऽपनीयते । तदपनय एव स्वविषये प्रमाणस्य 'सम्भव' इति 'उपपत्ति' इति चाख्यायते । यदि लाघवादरेण—'ऊहस्तर्कः' अथवा 'तत्त्वज्ञानार्थमूहस्तर्कः' इत्येतावन्मात्रमेव तर्कलक्षणमुच्येत, ततो विज्ञाततत्त्वेऽपि यदा पूर्वानुभवपरिच्छेदात्मक ऊहः क्रियते सोऽपि 'तर्कः' स्यात् । तन्निवारणार्थं 'अविज्ञाततत्त्वे'—इति निवेशितम् । लक्षणेनानेन समानजातीयात् संशयादसमानजातीयाच्चेच्छादेर्व्यवच्छेदस्तर्कस्य । यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वेऽर्थे प्रवर्तेते तथाऽपि न कारणोपपत्तित इति तयोर्व्यवच्छेदः ।

४ कारणोपपत्तित इत्यत्र कारणोपपत्त्येति भाष्यसम्मतः पाठः प्रतिभाति । 'कारणोपपत्तिस्तत' इति च पाठान्तरम् ।

[1]अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते–जानीयेममर्थमिति । अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन [2]विमृशति–किंस्विदित्थमाहो स्विन्नेत्थमिति । विमृश्यमानयोर्धर्मयोरेकं [3]कारणोपपत्त्याऽनुजानाति–सम्भवत्यस्मिन् कारण प्रमाण हेतुरिति–कारणोपपत्त्या स्यादेवमेतन्नेतरदिति ।

तत्र निदर्शनम् । योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं तत्त्वतो जानीयेति जिज्ञासते । स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्श । विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति । [4]यद्ययमनुत्पत्तिधर्मक तत स्वकृतस्य कर्मण फलमनुभवति ज्ञाता । दु खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तर पूर्वस्य पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्याता संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम् । उत्पन्न खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभि सम्बध्यत इति नास्येद स्वकृतस्य कर्मण फलम् । उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मण फलोपभोगो नास्ति । तदेवमेकस्यानेकशरीरयोग शरीरवियोगश्चात्यन्त न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति [5]तन्नानुजानाति । सोऽयमेवलक्षण ऊहस्तर्क इत्युच्यते ।

---

१ अविज्ञातेति ' न विशेषेण ज्ञात '–सामान्यतो ज्ञातमिति यावत् । तथा च वार्तिकम्–' यस्मादयमाहाविज्ञाततत्त्व इति तेन ज्ञापयति सामान्यमवगतमिति । यदि पुन सामान्यमपि नाधिगत स्यान्न ब्रूयादविज्ञाततत्त्व इति—अविज्ञात इत्येव ब्रूयादिति ' ।

२ विमृशतीति । जिज्ञासापश्चाद्भावी संशयोऽत्र विवक्षित । तर्कण तावद्द्वयो पक्षयोरेकतरनिषेधेनैकतर प्रमाणविषयतयाऽभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्ति प्रति साक्षाद्धेतुता संशयस्येत्यत्र सूचितम् ।

३ कारणोपपत्त्येति । ' कारणस्य ' प्रमाणस्य ' उपपत्त्या ' इतिकर्तव्यतया विषये विशोधिते प्रमाणमप्रत्यूह प्रवर्तते । उपपत्तेश्च स्वतन्त्राया आश्रयासिद्धतया न निश्चायकत्व सम्भवति ।

४ यद्ययमित्यादि । यद्ययमनुत्पत्तिधर्मक तदैव कर्मण फलमनुभवति, तदैव च दु खेत्याद्यपवर्गे इत्यन्ते वाक्ये यावुक्तौ संसारापवर्गौ तौ स्यातामिति सम्बन्ध ।

५ तन्नानुजानातीत्ययमेव पाठस्तात्पर्यसम्मत प्राचीनपुस्तके धृतश्च ।

"कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति ?"

अनवधारणात् । अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या, न त्ववधारयति, न व्यवस्यति, न निश्चिनोति "एवमेवेदमिति" ।

"कथं तत्त्वज्ञानार्थ इति ?"

तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्भावितात्प्रसन्नादनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति ।

सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादेऽपदिष्ट इति ।

अविज्ञाततत्त्वमनुजानाति—यथा सोऽर्थो भवति तस्य तथाभावस्तत्त्वमविपर्ययो याथातथ्यम् ॥ ४० ॥

एतस्मिंश्च तर्कविषये—

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

---

१ कथमिति । यदि 'एवमेतत्तत्त्वम्' इत्येवमाकारस्तर्कस्य तर्हि तत्त्वज्ञानमेव न पुनस्तत्त्वज्ञानार्थ इत्यर्थः ।

२ न निश्चिनोतीति । निश्चयरूपं च तत्त्वज्ञानमिति । अवधारयति, व्यवस्यति इत्यादिपर्यायैस्तर्कस्य निश्चयात्म्यमनेन उक्तम् ।

३ तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद् भावितादिति पाठस्तात्पर्यसम्मतः प्राचीनपुस्तके एतच्च । 'लक्षणानुग्रहभावितात्' 'लक्षणानुग्रहोद्भावितात्' इति च पाठान्तरे । तत्र तु 'भावितात्'–'प्रसन्नात्'–इतिविवरणस्य टीकायामभावात्पूर्व एव पाठः सम्यक् ।

४ भावितादिति । चिन्तितात् । 'प्रसन्नात्' निर्मलात् अबाधितादिति यावत् । प्रमाणसामर्थ्यादिति तर्कस्य स्वातन्त्र्यमपाकरोति ।

५ ननु यदि तत्त्वनिश्चयसाधनं प्रमाणमेव, न तर्कः, किमर्थं तर्हि वादेऽस्य समावेशः प्रमाणतर्कसाधनोपालम्भ इत्यादिसूत्रोक्त इत्यत आह सोऽयमिति । प्रमाणविषयविषयशङ्काविघटितानि प्रमाणानि यत उपोद्बलयति तर्कस्तत एवास्य प्रमाणेन सह सहितता वादे इति भावः । 'तथाभाव' इति वार्तिकसम्मतः पाठः । 'यथाभाव' इति पाठान्तरम् ।

६ विमृश्येत्यादि सूत्रम् । पक्षश्च प्रतिपक्षश्चेति पक्षप्रतिपक्षाभ्याम् । पक्षशब्देन पक्षविषयं साधनमुच्यते, प्रतिपक्षशब्देन च पक्षविषयस्य साधनस्योपालम्भः । अस्य चोपालम्भस्य निर्णयं प्रति कारणता पारम्पर्येणेत्यादि वार्तिके स्पष्टम् ।

स्थापना साधन, प्रतिषेध उपालम्भ । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते । तयोरन्यतरस्य निवृत्ति एकतरस्यावस्थानमवश्यम्भावि । यस्यावस्थान तस्यावधारण निर्णय ।

" [1]नेद पक्षप्रतिपक्षाभ्यामर्थावधारण सम्भवतीति । एको हि प्रतिज्ञातमर्थं हेतुत स्थापयति प्रतिषिद्ध चोद्धरति द्वितीयस्य । द्वितीयेन स्थापनाहेतु प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते । स निवर्तते । तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारण निर्णय इति । "

[2]उभाभ्यामेवार्थावधारणमित्याह । कया युक्त्या ? एकस्य सम्भवो द्वितीयस्यासम्भव । तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्तयत उभयसम्भवे । उभयासम्भवे त्वनिवृत्तो विमर्श इति ।

[3]विमृश्येति विमर्शं कृत्वा । सोऽयं विमर्श पक्षप्रतिपक्षाववद्योत्य न्याय प्रवर्तयतीत्युपादीयत इति ।

एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम् । यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुत सम्भवतस्तत्र समुच्चय । हेतुतोऽर्थस्य तथाभावोपपत्ते । यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य

---

१ अत्र, पक्षप्रतिपक्षप्रयोगाद् ' वाद सशयाऽस्ति ' इति भ्रान्त्या चोदयति नेदमिति । ( १ ) वादी प्रतिज्ञातमर्थं हेतुत स्थापयति । तदनन्तर ' द्वितीयस्य ' प्रतिवादिन –'प्रतिषिद्ध प्रतिषेध वाद्युक्तस्य हेतोर्दूषणम्–'उद्धरति दूषणाभासीकरोति । ( २ ) तत ' द्वितीयेन ' प्रतिवादिना वाद्युक्तस्य हेतो स्थापनहेतुत्व प्रतिषिध्यते । 'तस्यैव' वादिन प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैव ' उद्ध्रियते ' । ' स ' वादिनो वा प्रतिवादिनो वा हेतुश्चोपालम्भश्च—' निवर्तते ' । तस्मिन्निवृत्ते योऽवतिष्ठते तेनैव निर्णय । अवस्थातु च एकतरात्मक एव, न द्वावपि । ततश्चैकेनैव पक्षेणैव प्रतिपक्षेणैव वा निर्णयो, न द्वाभ्याम् । अतो न युक्त पक्षप्रतिपक्षाभ्यामिति वक्तुम् । इति चोदकस्य हृदयम् ।

२ अभ्युपेत्य परिहरति उभाभ्यामिति । वादिन साधनस्य ' सम्भव प्रतिवादिन उपालम्भस्य ' असम्भव ' । तावेतौ सम्भवासम्भवौ ' सह ' मिलित्वैव ' विमर्शं ' सशय ' निवर्तयत ', न प्रत्येकमिति ।

३ विमृश्येतीति—सूत्र विमृश्येतिपदस्य प्रयोजनमाह ।

४ अवधार्येति । नियमेन विषयीकृत्येत्यर्थ ।

नियायोगो हेतुत सम्भवति तत् क्रियावत्, यस्य न सम्भवति तदक्रियमिति। एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनो कालविकल्प । यथा तदेव द्रव्य क्रियायुक्त क्रियावत्, अनुत्पन्नोपरतक्रिय पुनरक्रियमिति ।

न चाय निर्णये नियम विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारण निर्णय इति । किन्तु इन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षेऽर्थावधारण निर्णय इति । परीक्षा विषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारण निर्णय । शास्त्रे वादे च विमर्शवर्जम् ॥ ४१ ॥

इति न्यायोत्तराङ्गप्रकरणम् ।

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथमाह्निकम् ।

---

१ अनुत्पन्नोपरतक्रियमिति । अनुत्पन्नक्रियम् उपरतक्रिय वा ।

२ न चेति । न निर्णयमात्रस्येद लक्षणमपि तु परीक्षाविषयस्यैवेत्यर्थ ।

३ इन्द्रियार्थेति । प्रत्यक्षविषये अर्थावधारण निर्णय' इत्येतावन्मात्रमेव निर्णय लक्षणम् ।

४ शास्त्र इति । ज्योतिष्टोमादीनां स्वर्गादिसम्बन्धनिर्णय आगमेन कर्तव्य विमर्शो नास्ति । नापि वादजल्पवितण्डासु निश्चितयोरेव वादिप्रतिवादिनोस्तत्र प्रवृत्त । उपलक्षण चैतत् । स्वार्थानुमानेऽपि न विमर्शापेक्षा ।

इति महामहोपाध्यायश्रीगङ्गानाथझामहोदयकृते खद्योते प्रथमाह्निकप्रसादः ॥

# द्वितीयाह्निकम्

## १ कथाप्रकरणम् ॥

तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति। तासाम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ 'पक्षप्रतिपक्षौ' प्रत्यनीकभावात्। अस्त्यात्मा नास्त्यात्मेति। नानाधिकरणस्थौ विरुद्धौ न पक्षप्रतिपक्षौ। यथा नित्य आत्मा अनित्या बुद्धिरिति। 'परिग्रहो' ऽभ्युपगमव्यवस्था। सोऽयं 'पक्षप्रतिपक्षपरिग्रहो' वादः।

तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः। प्रमाणतर्कसाधनः प्रमाणतर्कोपालम्भः। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। 'साधनं' स्थापना। 'उपालम्भः' प्रतिषेधः। तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च। यावदेको निवृत्त एकतरो व्यवस्थित इति। निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति।

जल्पे निग्रहस्थानविनियोगाद्वादे तत्प्रतिषेधः। कस्यचिदभ्यनुज्ञानार्थं 'सिद्धान्ताविरुद्ध' इति वचनम्। 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' (१, २,

---

१ तिस्रः कथा इति। निर्णयानुकूलतया यद्यपि प्रथमाह्निक एव वादः प्राप्तस्तथाऽपि कथान्तर्गततयाऽत्रास्य लक्षणम्। नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसन्दर्भिः कथा। तस्यां कथायामेव नियमस्तिस्र इति। इद च पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितम्। गुर्वादिभि सह वाद, विजिगीषुणा सह जल्पवितण्डे इति विवेकः।

२ प्रमाणतर्कसाधनोपालम्भ इति मध्यमपदलोपी समासः। प्रमाणतर्कसाधन प्रमाणतर्कसाधनोपालम्भश्चेत्यर्थः।

३ यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहोऽस्ति तथापि प्रतिपक्षसाधन नास्ति, तस्याः साधनहीनत्वात्। यद्यपि जल्पेऽपि पक्षप्रतिपक्षसाधनमस्ति तथाऽपि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डाभ्यां 'प्रमाणतर्कसाधनोपालम्भ' ग्रहणेन व्यवच्छेदः। प्रमाणैरेव यत्र साधनं तर्केण च यत्रोपालम्भ इत्यर्थः केश्चिद्दर्शितो न सम्यक्।

४ तत्प्रतिषेध इति। वादिना प्रतिवादिना वा नोपन्यसनीयानीत्यर्थः। न हि स्यात् सर्वाभूतानीतिवद् वादे सर्वनिग्रहस्थानप्रतिषेधे, अग्नीषोमीय पशुमालभेतेतिवद्

४७) इति हेत्वाभासस्य निग्रहस्थानस्यानुज्ञा वादे। पञ्चावयवोपपन्न इति 'हीनमन्यतमेनाप्यवयवेन न्यूनम्' 'हेतूदाहरणाधिकमधिकम्' (५, २, १२।१३) इति चैतयोरभ्यनुज्ञानार्थमिति।

अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ स्थापनाप्रवृत्तौ वाद इति स्यात्। अन्तरेणापि चावयवसम्बन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्। तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। 'छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः' इति वचनाद्विनिग्रहो जल्प इति मा विज्ञायि–छलनिग्रहस्थानसाधनोपालम्भ एव जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायि–इत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ १ ॥

---

सिद्धान्ताविरुद्ध इति विशेषविधिरित्यर्थः स्फुट प्रतीयते भाष्यस्य। वार्तिककारस्तु रागत सर्वपञ्चनखभक्षणप्राप्तिवत् उपालम्भग्रहणात् सर्वनिग्रहस्थानप्राप्तौ पञ्च पञ्चनखा भक्ष्या इतिवत् परिसङ्ख्यानार्थ उत्तरपदारम्भ इत्याह।

इह वादे चतुर्धा निग्रहस्थानगतिः। किञ्चिदसम्भावनीयमेव। यथा प्रतिज्ञाहानिः प्रतिज्ञान्तरम् अन्यानि निरर्थकमर्थान्तरमविज्ञातार्थमपार्थकमिति षट्कम्। किञ्चित् सम्भवदप्यनुज्ञाप्यम्। यथा प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमिति सप्तकम्। किञ्चिच्च कथावसानिकम्। यथा हेत्वाभासा निरनुयोज्यानुयोगश्चेति द्वयम्।

१ अवयवेष्विति। पूर्वस्मिन् प्रयोजने स्थिते भाष्यकारः प्रयोजनान्तरमन्वाचिनोति। यद्यपि प्रमाणं तदनुग्राहकश्च तर्कमन्तरेण पञ्चावयवोपपन्नो न भवति तथा च पञ्चावयवोपपन्नमित्यनेनैव प्रमाणतर्कयोराक्षेपः तथापि अनया प्रतिपदोक्त्यैतत्सूच्यते यत् वादिप्रतिवाद्युपन्यस्तानि साधनोपालम्भवाक्यानि परस्परसम्बद्धानि भवेयुरिति। अन्यथा यत्र वादी स्वस्थानस्थित एव प्रतिवाद्युक्तिनिरपेक्षः शब्दानित्यत्वं साधयति प्रतिवादी च तदुक्तनिरपेक्ष एव शब्दनित्यत्वसाधकानि वाक्यानि प्रयुङ्क्ते सोऽपि वादः स्यात्।

२ अन्तरेणापीति प्रयोजनान्तरमन्वाचिनोति।

३ प्रमाणतर्कयोर्द्विरभिधानस्य प्रयोजनान्तरमन्वाचिनोति छलजातीति।

४ विनिग्रह इति। वादगतनिग्रहस्थानरहित इत्यर्थः।

५ पृथक् प्रमाणेति। 'वादगतो निग्रहो न जल्पे जल्पगतश्च निग्रहो न वादे' इति मा विज्ञायि। इष्यते हि वादगतो निग्रहो जल्पे। सोऽयमिष्टोऽर्थो प्रमाणतर्कग्रहणाल्लभ्यते।

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प ॥ २ ॥**

'यथोक्तोपपन्न' इति प्रमाणतर्कसाधनोपालम्भ सिद्धान्ताविरुद्ध पञ्चावयवोपपन्न पक्षप्रतिपक्षपरिग्रह ।

'छलजातिनिग्रहस्थानसाधनोपालम्भ' इति । छलजातिनिग्रहस्थानै साधनमुपालम्भश्चास्मिन् क्रियत इति एवविशेषणो जल्प ।

" न खलु वै छलजातिनिग्रहस्थानै साधन कस्यचिदर्थस्य सम्भवति । प्रतिषेधार्थतैवैषा सामान्यलक्षणे विशेषलक्षणे च श्रूयते—' वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ' इति, ' साधर्म्यवैधर्म्याभ्या प्रत्यवस्थान जाति ', ' विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ' ( १। २। ५१–५९–६० ) इति । विशेषलक्षणेष्वपि यथास्वमिति । न चैतद्विजानीयात्प्रतिषेधार्थतयैवार्थं साधयन्तीति छलजातिनिग्रहस्थानोपालम्भो जल्प इत्यवमप्युच्यमाने विज्ञायत एतदिति । "

प्रमाणै साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्गभाव स्वपक्षरक्षणार्थत्वात् । न स्वतन्त्राणा साधनभाव । यत्तत्प्रमाणैरर्थस्य साधन तत्र छलजातिनिग्रहस्थानानामङ्गभाव, स्वपक्षरक्षणार्थत्वात् । तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्ष रक्षन्ति । तथा चोक्त 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ' (४, २, ५) इति । यश्चासौ प्रमाणै प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातात्सहकारीणि भवन्ति । तदेवमङ्गीभूताना छलादी

१ यथोक्तोपपन्न इति विशेषणं समस्तं वादलक्षणमतिदिशतीति भाष्यमतम् । प्रमाणतर्कसाधनोपालम्भ इत्येतावन्मात्रमतिदिश्यत इति वार्तिककृन्मतम् । सिद्धान्ताविरुद्ध ' 'पञ्चावयवोपपन्न ' इति पदद्वयं वादे नियमार्थमेव न च जल्पे नियमोऽस्य किञ्चिदस्तीत्येतदेव भाष्यमते वार्तिककारस्याप्यभिमतम् ।

२ प्रयुङ्क्ते न त्वविचार्यादि ।

३ परिहरति प्रमाणैरिति ।

अत्र भाष्यकारेण छलादीनां निषेधकतया साधनाङ्गभावमाक्षिप्य परपक्षविघातेन स्वपक्षरक्षणादङ्गभाव इति दर्शितम् । अत्रापि वार्तिककारस्यारुचि । अयुक्तानां छलादीनां साधनाङ्गभावोऽप्यनुपपन्न एवेति तद्बीजम् । परकीयसाधनविघातायैव छलादीनां प्रयोगो न स्वकीयसाधनाङ्गतयेत्याशय ।

नामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः । उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥ २ ॥

**स[1] प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥**

स जल्पो वितण्डा भवति । किंविशेषणः ? प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति पर[2]पक्षप्रतिषेधेनैव प्रवर्तत इति ।

"अ[3]स्तु तर्हि प्रतिपक्षहीनो वितण्डा ।"

य[4]द्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः, न त्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति । तस्माद्यथान्यासमेवास्त्विति ॥३॥

इति कथाप्रकरणम् ।

## २ हेत्वाभासप्रकरणम् ।

हेतु[5]लक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः । त इमे—

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥४॥**

तेषाम्—

**अ[6]नैकान्तिकः सव्यभिचारः ॥ ५ ॥**

---

१ स प्रतिपक्षेत्यादि सूत्रम् । पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीयः पक्ष एव 'प्रतिपक्षः' । तस्य 'स्थापना' साधनम् । तया 'हीनः' ।

२ परपक्षप्रतिषेधेनेति । परपक्षस्थापनाप्रतिषेधेनेत्यर्थः ॥

३ वाद्यभाष्यम्—अस्त्विति । स्थापनाया अभावे स्थाप्यः पक्षो नास्ति, न ह्यन्यथा ( स्थापनां विना ) पक्षस्य पक्षत्वमिति । ततश्च प्रतिपक्षस्थापनाहीनेत्यनेन प्रतिपक्षहीनत्वमेवोक्तं भवतीत्याशयः ।

४ परिहरति यद्वै खल्विति । वैतण्डिकोऽपि हि वादी 'परदोषात् मत्पक्ष एव सेत्स्यतीति' बुद्ध्या स्वपक्षमस्थापयन् परपक्षस्थापनामाहन्ति । तस्मात् परपक्षप्रतिषेधकं वाक्यमेवास्य 'पक्षः' इत्यौपचारिको व्यपदेशः । पक्षत्वं चेह योग्यतामात्रेण, ननु स्थाप्यमानतयेति तात्पर्यम् ।

५ समाख्यानिरुक्तिवशेन हेत्वाभासानां सामान्यलक्षणं प्रतिपादयति हेत्विति ।

६ 'एकस्य साध्यस्य साध्याभावस्य वा अन्ते' अधिकरणमात्रे यस्तिष्ठति स 'एकान्तः' । तदन्यः 'अनेकान्तः' । इति विवरणकाराः ।

व्यभिचार एकत्राव्यवस्था। सह व्यभिचारेण वर्तते इति सव्यभिचार। निदर्शनं–नित्यः शब्दोऽस्पर्शत्वात्, स्पर्शवान् कुम्भोऽनित्यो दृष्टो, न च तथा स्पर्शवान् शब्द, तस्मादस्पर्शत्वान्नित्य शब्द इति। दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते–स्पर्शवांश्चाणुर्नित्यश्चेति। आत्मादौ च दृष्टान्ते 'उदाहरणसाधर्म्यात्साध्यसाधनं हेतु ' ( १, १, ३४ ) इति अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति–अस्पर्शा बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात्साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति।

नित्यत्वमप्येकोऽन्त अनित्यत्वमप्येकोऽन्त एकस्मिन्नन्ते विद्यत इति ऐकान्तिक, विपर्ययादनैकान्तिक। उभयान्तव्यापकत्वादिति ॥ ५ ॥

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध ॥ ६ ॥

त विरुणद्धीति तद्विरोधी–अभ्युपेतं सिद्धान्त व्याहन्तीति। यथा–'सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्। अपेतोऽप्यस्ति विनाशप्रति

---

अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्यलक्षणवचनार्थस्थितौ। यस्य 'सव्यभिचार' इति हेत्वाभासविशेषसंज्ञा तस्य सव्यभिचारपदं लक्ष्यनिर्देशोऽनैकान्तिकपदं लक्षणम्। यस्य त्वनैकान्तिक इत्येव हेत्वाभासविशेषसंज्ञा तस्यानैकान्तिकपदं लक्ष्यनिर्देश सव्यभिचारपदं लक्षणमिति विवेक।

१ सव्यभिचार इति लक्षणपदं कक्षीकृत्याह व्यभिचार इति। यत् खलु साध्यसाध्याभावाभ्यां(?) तदन्यत्र च वर्तते तत् 'व्यभिचारि', तद्वृत्तिश्च व्यभिचार '।

२ न साध्येति। स्पर्शवत्त्वानित्यत्वयोर्मध्ये साध्यसाधनसम्बन्धो नास्ति। स्पर्शवत्त्वमनित्यत्वं न साधयति, न चानित्यत्वं स्पर्शवत्त्वमित्यर्थ।

३ नित्यत्वमिति। अनैकान्तिक इति लक्षणपदं कक्षीकृत्यैतत्।

४ एकस्मिन्निति। नित्ये ( साध्ये ) अथ वा अनित्ये ( साध्याभावे ), एकस्मिन्नेव अन्ते यो नियत स ऐकान्तिक। तद्विपर्ययात् 'अनैकान्तिक अनियत, अन्वयेन व्यतिरेकेण चोभयपक्षगामी ( साध्यसाध्याभाववृत्ति ) इति भाव'। न चैवंभूता अन्ये हेत्वाभासा इति भवति अनैकान्तिकस्य लक्षणम्।

५ व्याहन्तीति। असम्भवं करोतीत्यर्थ।

६ सोऽयमित्यादिवाक्य योगसूत्रव्यासभाष्यपादगततृतीयत्रयोदशसूत्रभाष्यस्थम्। तत्रत्याक्षराणि तु– 'तदेतत् त्रैलोक्यं विकार' इत्यादीनि–यथा वार्तिके एतानि। महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियपञ्चभूतसूक्ष्ममहाभूतानि विकार तस्य 'व्यक्ति' धर्मलक्षणावस्थापरिणाम –तस्मात् अपैति'।

षेधात्'। 'न नित्यो विकार उपपद्यते' इत्येवं हेतुः 'व्यक्तेरपेतोऽपि विकारोऽस्तीति' अनेन स्वसिद्धान्तेन विरुध्यते। कथम्? 'व्यक्ति'रात्मलाभः। 'अपायः' प्रच्युतिः। यद्यात्मलाभात्प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषेधो नोपपद्यते। यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेरुपपत्तिः। यदात्मलाभात्प्रच्यवते तदनित्यं दृष्टम्। यदस्ति न तदात्मलाभात्प्रच्यवते। अस्तित्वं चात्मलाभात्प्रच्युतिरिति च विरुद्धावेतौ धर्मौ न सह सम्भवत इति। सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति ॥ ६ ॥

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ 'प्रकरणम्'। तस्य 'चिन्ता' विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम्। सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः 'प्रकरणसमो' निर्णयाय न प्रकल्पते।

१ न नित्य इति। एतदेव 'नित्यत्वप्रतिषेधात्' इत्यनेन हेतुना सूचितम्। अपेतोऽप्यस्तीत्यनेन च सिद्धान्तः सूचितम्। एवमनयोर्विरोधः।

विरुद्धस्य हेत्वाभासस्य स्वरूपविषये प्राचीननवीनयोर्मतभेद इव दृश्यते। यो हेतुर्यं कञ्चिदभ्युपगतं सिद्धान्तं व्याहन्ति स 'विरुद्ध' इति भाष्यमत स्पष्टम्। अत एव नित्यत्वप्रतिषेधो हेतुर्नाम्यगतसिद्धान्तविरोधेन 'विरुद्ध' इति दृष्टान्तेनापि सूचितम्। यः साध्यसाधनायोपन्यस्तो हेतुस्तद्विरुद्धमेव यः साधयति स विरुद्ध इति नवीनमतम्। तथा च—'साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा शब्दोऽनित्यः कृतकत्वादिति' तर्कसङ्ग्रहे। वार्त्तिकेऽपि सूत्रस्य भाष्योक्तं व्याख्यानमुपवर्ण्य व्याख्यानान्तरमुपन्यस्तम्—'प्रतिज्ञाहेत्वोर्विरोधो विरुद्धो हेत्वाभास' इति। एतदेव नवीनमतस्य मूलमिवाभाति।

अस्य हेत्वाभासस्यापसिद्धान्ताद् भेदं प्रदर्शितं परिशुद्धौ—स्वमते मानान्तरसिद्धस्यान्यथावचनमपसिद्धान्तः, वाक्यार्थयोरेकार्थाभावभावविषयत्वं विरोध इति।

२ विमर्शाधिष्ठानाविति। 'विमर्शः' संशयः। तस्य विषयौ 'अनवसितौ' अनिर्णीतौ। तादृशावनिर्णीतयोरेव पक्षप्रतिपक्षयोरद्वावप्यत्वम्। प्रक्रियते साध्यत्वेनाधिक्रियते वादिप्रतिवादिभ्यामिति 'प्रकरणम्'। तस्य प्रकरणस्य 'चिन्ता' विमर्शात् प्रभृति प्राङ्निर्णयात् समीक्षणम् आलोचनम्, जिज्ञासा। सा खलु सत्त्वानुर-

प्रज्ञापन त्वनित्य शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्य दृष्ट स्थाल्यादि ।

यत्र समानो धर्म संशयकारण हेतुत्वेनोपादीयते स संशयसम स [illegible]

[illegible] ।

सेयमुभयपक्षविशेषानुपलब्धि प्रकरणचिन्ता प्रवर्तयति । कथम्? विपर्यये हि प्रकरणनिवृत्ते । यदि नित्यधर्म शब्दे गृह्यते न स्यात्प्रकरणम् । यदि वा अनित्यधर्मो गृह्यते एवमपि निवर्त्तेत प्रकरणम् । सोऽय हेतुरुभौ पक्षौ प्रवर्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते ॥ ७ ॥

## साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥

द्रव्य छायेति साध्यम् गतिमत्त्वादिति हेतु, साध्येनाविशिष्ट साधनीयत्वात्साध्यसम । अयमप्यसिद्धत्वात्साध्यवत्प्रज्ञापयितव्य । साध्य तावदेतत्—

---

लब्ध्या कृता । अत्र नित्यधर्मो नित्यत्वाविनाभाविनोऽनित्यधर्मानित्यत्वाविनाभाविनो नैवोपलभमान तत्र सन्दिग्ध । तदा जिज्ञासते । सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुपलब्धिर्वा वादिना निर्णयायापदिश्यमाना प्रकरणसमा हेत्वाभास । कुत ? उभयपक्षसाम्यात् । यथा नित्यत्वपक्षेऽनित्यधर्मानुपलब्धिस्तथाऽनित्यत्वपक्ष नित्यधर्मानुपलब्धि । सेय तत्त्वानुपलब्धिस्तथैवानिश्चायिका यथा प्रकरणम् ।

व्युत्पत्तिमात्र चैतत्प्रकरणसमपदस्य । प्रवृत्तिनिमित्त तु सत्प्रतिपक्षत्वम् । अन्यथाऽनैकान्तिकस्यापि 'प्रकरणसमत्व' स्यात्, अनिश्चायकत्वसाम्यात् ।

१ प्रज्ञापनमिति । निदर्शनमित्यर्थ प्रज्ञाप्यतेऽनेनेति व्युत्पत्त्या ।

२ सत्प्रतिपक्षस्यानैकान्तिकत्वशङ्का व्यवच्छिनत्ति यत्रेति ।

३ संशयसम इति । संशयेन सम, अनिश्चायकत्वात् । एतदुक्त भवति । नहि नित्यधर्मानुपलब्धिरुभयसिद्धे नित्येऽस्ति, येन सव्यभिचारो भवेत् । नाप्यनित्यधर्मानुपलब्धिरुभयसिद्धेऽनित्येऽस्ति, येन सव्यभिचारो भवेत् । अपि तु परस्परमनयोर्नित्यधर्मानुपलब्ध्यनित्यधर्मानुपलब्ध्यो सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति ।

४ साध्येत्यादि सूत्रम् । यथा साध्येऽनिश्चितस्तथा पक्षेऽप्यनिश्चितो हेतु 'साध्यसम' 'असिद्ध' इति यावत् ।

अनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धाना सङ्ग्रह, तेषामसिद्धत्वेन साध्याविशिष्टत्वात् । अत्र च 'असिद्ध साध्यसम' इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धे प्रागहेतुत्वज्ञापनार्थम् । अन्यथाऽत्यन्तासिद्ध एव

किं पुरुषवच्छायाऽपि गच्छति, आहो स्विदावरकद्रव्ये संसर्पत्यावरणसन्तानाद् सन्निधिसन्तानोऽयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासन्निधिरेवाविच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः ॥ ८ ॥

कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

कालात्ययेन युक्तो यदर्थस्यैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम् नित्यः शब्दः संयोगव्यङ्ग्यत्वाद् रूपवत् ।

---

साध्यसमो नान्यतरासिद्ध, तस्य कदाचित् सिद्धे इति भ्रान्तिः स्यात् । साध्यविशिष्टत्वेन तु सोऽपि सङ्गृहीतः ।

एवं चान्यतरासिद्ध एव गृहीत स्यात्तरेऽसिद्धाः, तेषामत्यन्तासिद्धत्वेन साध्याविशिष्टत्वाभावात् । अत एवोक्तं साध्यत्वादिति । यदि हि साध्यं नासिद्धं भवेत् साध्यत्वादेव च्यवेत । न खलु सिद्धं साध्यते । तस्मात् साध्यत्वादेवासिद्धता । सा च कस्यचित्सर्वदा, कस्यचित्कादाचित्की इति सर्वेषामविशिष्टत्वम् । अतो नाव्याप्तिः । नापि साध्यत्वस्यातिप्रसक्त्याऽतिव्याप्तिः, हेत्वाभाससामान्यलक्षणापेक्षित्वाद् विशेषलक्षणस्य इति सूत्रार्थः ।

१ किं पुरुषवदिति । अत्र भाष्यकारेण [१] स्वरूपासिद्धस्य [२] आश्रयासिद्धस्य [३] अन्यथासिद्धस्य च साधारणमुदाहरणमभिप्रेत्योक्तं द्रव्यं छाया गतिमत्त्वादिति । तेषां विभजनं यथा वार्त्तिके । [ १ ] यथैव द्रव्यत्वं छायायाः साध्यं तथा गतिमत्त्वमपीति स्वरूपासिद्धिः । [२] देशान्तरदर्शनाद्यदि कश्चिच्छायाया गतिमत्त्वं साधयेत्, तदा देशान्तरदर्शनमाश्रयासिद्धो हेतुः स्यात्-सत्येव द्रव्यत्वे छायाया देशान्तरे दर्शनं स्यात्, द्रव्यभावस्त्वसिद्धः । [३] छायाया यद्देशान्तरे दर्शनं तत् गतिमत्त्वादन्यथापि भवति । अतो नावश्यं गतिमत्त्वमेव साधयति । आवरके द्रव्येऽपसर्पति तेजसोऽसन्निधिविशिष्टं द्रव्यं यदुपलभ्यते तदेव छायेत्युच्यते इत्यादि वार्त्तिके स्पष्टम् । तत्र परिशुद्धिः—पक्षानिश्चयादाश्रयासिद्धिः, लिङ्गस्यैवानिश्चयात् स्वरूपासिद्धिः, व्याप्तेरनिश्चयाद् व्याप्यत्वासिद्धिः । एतेषां चानिश्चयः सन्देहाद्वाऽभावनिश्चयाद्वेति ।

२ कालात्ययेनेति । यस्य अपदिश्यमानस्य हेतुत्वेनोपन्यस्तस्य अर्थस्य धर्मिण एकदेशः कालात्ययेन युक्तः स कालात्ययापदिष्टः कालातीत इत्युच्यते इति सम्बन्धः ।

अस्यापि हेत्वाभासस्य विषये प्राचीननवीनयोर्भेद इवाभाति । तथाहि कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषणमिति यावत् स कालात्ययापदिष्टः । यथा 'नित्यः शब्दः संयोगव्यङ्ग्यत्वादि'त्यत्र शब्दस्योपलब्धिकाले संयोगो हेतुविशेषणत्वेनापात्त उपलब्धिकालमत्येति । यस्मिन् काले शब्द उपलभ्यते तस्मिन्

प्रागूर्ध्वं च व्यक्तेरवस्थित रूप प्रदीपघटसयोगेन व्यज्यते। तथा च शब्दोऽप्य वस्थितो भेरीदण्डसयोगेन व्यज्यते, दारुपरशुसयोगेन वा। तस्मात्सयोगव्यङ्ग्यत्वान्नित्य शब्द इति। अयमहेतु कालात्ययापदेशात्। व्यञ्जकस्य सयोगस्य काल न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति प्रदीपघटसयोगे रूपस्य ग्रहण भवति, न निवृत्ते सयोगे रूप गृह्यते। निवृत्ते दारुपरशुसयोगे दूरस्थेन शब्द श्रूयते विभागकाले। सेय शब्दस्य व्यक्ति सयोगकालमत्येतीति न सयोग

---

काले सयोगो नास्तीति भवत्यय कालात्ययापदिष्ट इति भाष्यवार्तिकयो स्पष्टम्। नवीनमतेन तु–यत्र प्रत्यक्षानुमानागमविरोध अनुष्णोऽग्निर्द्रव्यत्वादिति 'अश्राव ण शब्दो गुणत्वादिति शुचि नरशिर कपाल प्राण्यङ्गत्वादिति च सव प्रमाणता विपरीतनिर्णयेन सन्देहविशिष्ट कालमतिपततीति सोऽय कालात्ययनापदिश्य मान कालातीत इति तात्पर्य स्पष्टम्।

अनयोर्मतयोरसामञ्जस्य विभाव्य तात्पर्यकारो हेत्वादिव भाष्यपङ्क्तिमन्यथा व्याख्यातवान्। तद्यथा भाष्यकार सूत्र स्वपरमतसङ्क्षिप्त व्याचष्ट। (१) कालात्ययेन सशयकालात्ययेन युक्तो यस्यार्थैकदेश। धर्मविशिष्टो हि धर्मी हेतोरपदिश्यमानस्यार्थ। स ह्यपदिश्यते हेतुना। तस्यैकदेश साध्यधर्म। स हि धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णये उक्त सशयकालमतिपातित। स तादृशो हेतु कालात्ययापदिष्ट कालातीत इति स्वमतेनार्थ। अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्याभावादाहृतम्। (२) परमते तु कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषण स कालात्ययापदिष्ट इति योजना। परमतेनैव निदर्शनमाह निदर्शनमिति।

अत्रास्य स्वपरमतविभागस्य मूल मृग्यम्। उभयोश्च मतयो कतरद् भाष्य पङ्क्त्या स्पष्ट सूचित कतरच्च हेत्वादिव तत्रारोपितम्–स्वमतेनोदाहरणमनुपन्यस्य परमतेनैवोदाहरणमुपन्यस्तवान् भाष्यकार इति भाष्यकारस्यानुकूल न वत्यत्र च सुधिय एव प्रमाणम्। तात्पर्यमतेनार्थशब्द पक्षपर भाष्यमतेन तु हेतुपर इति विवेक। हेतुवद् यद् आभासते तदेव हेत्वाभासनामार्हति। नवीनाभिमत विरुद्ध हेतौ हेत्वाभासोऽपि नास्ति। भाष्याभिमते स्वाश्रयेवानुपपत्तिरिति भवत्ययाभासो हेतो।

भाष्यलक्षणे कैश्चिदाक्षिप्तम्–असिद्धविशेषणतयाऽय हेत्वाभासोऽसिद्ध एव स्यान्न हेत्वाभासान्तरमिति। परमतैराक्षेप्तृभिरिद विस्मृत यद् भाष्यकारादिभि र्बाधेभागासिद्धो हेत्वाभासत्वेन नाङ्गीकृत। अथ च भागासिद्धस्यैव भाष्योक्त कालातीतेऽन्तर्भावसम्भव।

निर्मिता भवति । कस्मात्? कारणाभावाद्धि कार्याभाव इति । एवमुदाहरण साधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति ।

स्यापि

सनात्को हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात्साध्यसाधनं हेतुलक्षणं न जहाति । अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति । 'अवयवविपर्यासवचनमप्राप्तकालम्' (५ २, ११) इति निग्रहस्थानमुक्तं तदेवेदं पुनरुच्यत इति । अतस्तन्न सूत्रार्थः ॥ ९ ॥

( ३ ) छललक्षणप्रकरणम् ॥

( भा० ) अथ छलम् ।

## वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

१ अत्र वाद्नैयायिकेन सूत्रम् यथा व्याख्याय दूषितम् । तद्यथा प्रतिज्ञानन्तरं हि हेतो काल । तमतीत्य हेतु पश्चादपदिश्यमानः कालातीतो भवति । यथा अनित्यः शब्दो घटादिवदित्युक्ते— कस्मात् इत्युक्ते ब्रूते— कृतकत्वात् इति । अयमेव हेतुः कालातीत इति ।

एवं सूत्रार्थमुपवर्ण्य तत्राक्षेपः कृतः । कस्मादिति यः प्रश्नः स किं निराकाङ्क्षे वादिन्युद्भवः युतः साकाङ्क्षे यदि निराकाङ्क्षे न्यूनम् एवास्य निग्रहस्थानम् न हेत्वाभासः हेतोः सर्वथाऽप्रयोगात् । प्रयुक्तो हि हेतुर्हेत्वाभासः स्यान्ना प्रयुक्तः । अथ साकाङ्क्षे वादिनि प्रतिवादिनः प्रश्नः तदा पश्चादपि प्रयुक्तोऽसौ हेतुरेव । न ह्यसौ तदा न साध्याविनाभूतोऽपक्षधर्मो वा । तस्मान्न कालातीतो नाम हेत्वाभासोऽस्ति ।

तदेतद् दूषणमतद्व्याख्यानानभ्युपगमेन परिहरति—अवयवेति ।

२ तदेवेदमिति । यद्युक्तार्थमेव सूत्रं स्यात्तदा यदेवाप्राप्तकालनिग्रहस्थानतया उक्तं तदेव कालातीताभिधहेत्वाभासत्वेन उक्तं स्यात्ततश्च पुनरुक्तिरेव स्यादित्यर्थः ।

३ अथ छलमिति । साधनवादी प्रमादी प्रतिवादी वा सदुत्तरसमाधानयोरस्फूर्तौ जिगीषुस्तदाभासमपि ब्रूयादिति तदाभासयुपादनावसरः । तत्रापि जाते स्वपक्षव्याघातापादकत्वेन जघन्यत्वात् छलस्य च तात्पर्यतः स्फुटत्वेऽपि वचनेन दुष्टत्वात् अस्फूर्तिदशायामपि तदेव प्रथमं प्रयोक्तव्यम् । तस्याप्यस्फूर्तौ जातिरिति जातेः पूर्वं छलादेशः ।

४ अर्थविकल्पेति । यथा वक्तुरभिमतस्ततो विरुद्धः अर्थः —तस्य विकल्पः कल्पना—सैव उपपत्तिः' तयेत्यर्थः ।

न सामान्यलक्षणे छलं शक्यमुदाहर्तुम् । विभागे तूदाहरणानि ॥ १० ॥
विभागश्च—

तत्त्रिविधम्—वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥११॥

तेषाम्—

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥१२॥

नवकम्बलोऽयं माणवक इति प्रयोगः । अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः । विग्रहे तु विशेषो, न समासे । तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति तावदभिहितं भवतीति कल्पयति कल्पयित्वा चासम्भवेन प्रतिषेधति—एकोऽस्य कम्बलः कुतो नव कम्बला इति । तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति ।

अस्य प्रत्यवस्थानम्—सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम् । नवकम्बल इत्यनेकार्थाभिधानम्—नवः कम्बलोऽस्येति नव कम्बला अस्येति । एतस्मिन्प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवताऽभिहितं तच्च न सम्भवतीति । एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः—यस्माद्विशेषो विज्ञायतेऽयमर्थोऽनेनाभिहित इति । स च विशेषो नास्ति । तस्मान्मिथ्याभियोगमात्रमेतदिति ।

प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः । अस्याभिधानस्यायमर्थोऽभिधेय इति समानः[3] सामान्यशब्दस्य विशेषो विशिष्टशब्दस्य । प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः । प्रयोगश्चार्थसंप्रत्ययार्थः । अर्थप्रत्ययाच्च व्यवहार इति । तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात्सामान्यशब्दस्य प्रयोगनियमः । अजां ग्रामं नय सर्पिराहर ब्राह्मणं भोजयेति

---

१ यस्मादिति—वचनादिति शेषः ।

२ अभिधानेति । अभिधानाभिधेययोः नियमः —अयमेवार्थोऽस्य शब्दस्य अयं शब्दो वाचकोऽस्यैवार्थस्येति—तत्र च पुरुषस्य नियोगः अस्मादयमर्थो बोद्धव्य इत्याकारः ।

३ *समान इति । सामान्यशब्दस्य समानः विशेषशब्दस्य च विशेषः नियोग इति योजना ।*

४ अर्थसंप्रत्यय इति । अर्थावगमार्थः—इति यावत् ।

सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते। सामर्थ्याद्यत्रार्थक्रियादेशना सम्भवति तत्र प्रवर्तन्ते। नार्थसामान्ये क्रियादेशना सम्भवेत्। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः सम्भवति नव कम्बलोऽस्येति तत्र प्रवर्तते। यस्तु न सम्भवति नव कम्बला अस्येति तत्र न प्रवर्तते। सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति ॥ १२ ॥

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥**

अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह सम्भवति ब्राह्मणे विद्याचरणसम्पदिति। अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसम्भूतार्थकल्पनया क्रियते—यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति व्रात्येऽपि सम्भवेत्, व्रात्योऽपि ब्राह्मणः, सोऽप्यस्तु विद्याचरणसम्पन्न इति।

यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति क्वचिदत्येति। सामान्यनिमित्तं छलं सामान्यच्छलमिति।

अस्य च प्रत्यवस्थानम्—अविवक्षितहेतुकस्य विषयानुवादः, प्रशंसार्थत्वाद् वाक्यस्य। तदत्रासम्भूतार्थकल्पनानुपपत्तिः। यथा सम्भवन्त्यस्मिन्क्षेत्रे शालय इति—अनिराकृतमविवक्षितं च बीजजन्म—प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते। सोऽयं क्षेत्रानुवादो नास्मिन् शालयो विधीयन्त इति। बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता। एवं सम्भवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वम्, न सम्पद्धेतुः। न चात्र हेतुर्विवक्षितः।

१ अर्थावयवेष्विति—अर्थविशेषेष्वित्यर्थः। विशेषा हि सामान्यस्यावयवा भवन्ति।

२ न कल्पत इति। न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कञ्चिदर्थं शृङ्गग्राहिकतया बोधयति। अपि तु सामान्यद्वारेणार्थप्रकरणादिसहकाराद् विशेषे वर्तते। तस्मान्न प्रतिपादयितुरपराधो यदविशेषशब्दैर्विशेषान्तरं प्रतिपादयति। किन्तु सङ्केतस्यैवायमपराधो यो विशेषमपहाय सामान्ये वर्तते। तस्माद्यथासङ्केतं बोधयन्नापराध्यः प्रयोक्तेति।

३ विषयानुवाद इति। सम्पद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः।

४ नास्मिन्निति। एतादृशं प्रशस्तं क्षेत्रं यदत्र बीजवपनमपि विना शालयो रोहन्त्येवेत्यर्थः।

विपयानुवादस्त्वय प्रशसार्थत्वाद् वाक्यस्य—सति ब्राह्मणत्वे सम्पद्धेत समर्थ इति । विपय च प्रशसता वाक्येन यथा हेतुत फलनिर्वृत्तिर्न प्रत्याख्यायते । तदेव सति वचनविघातोऽसम्भूतार्थकल्पनया नोपपद्यत इति ॥१३॥

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥**

अभिधानस्य धर्मो यथार्थप्रयोग । धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोग । तस्य निर्देशे धर्मविकल्पनिर्देशे । यथा मञ्चा क्रोशन्तीति—अर्थसद्भावेन प्रतिषेध मञ्चस्था पुरुषा क्रोशन्ति न तु मञ्चा क्रोशन्ति।

" का पुनरत्रार्थविकल्पोपपत्ति ? "

अन्यथा प्रयुक्तस्यान्यथाऽर्थकल्पनम् । भक्त्या प्रयोगे प्राधान्येन कल्पनमुपचारविषय छलमुपचारच्छलम्। उपचारो नीतार्थ सहचरणादिनिमित्तेन, अतद्भावे तद्वदभिधानमुपचार इति ।

१ धर्मेत्यादि सूत्रम् । वादी स्वाक्ता लक्ष्येऽर्थ पद प्रयुङ्क्ते प्रतिवादी तत्पदस्य वाच्यार्थतात्पर्येण लक्ष्य प्रतिषेधति । तदेतदुपचारच्छलमिति भाष्यानुसारी सूत्रार्थ । ' न तदर्थान्तरभावादिति ' षोडशसूत्रवार्तिके वाक्छलोपचारच्छलयोर्भेदवर्णनावसरे 'एकत्र ( वाक्छले ) धर्म प्रतिषिध्यते, एकत्र ( उपचारच्छले ) धर्मी ' इत्युक्तम् । तदनेनास्य सूत्रस्याक्षरानुसार्यन्य एवार्थ प्रतिभाति । 'धर्मविकल्पनिर्देशे ' यदा वादी धर्मपर वचन प्रयुङ्क्ते— ' अर्थसद्भावनिषेध ' प्रतिवादी तु अर्थस्यैव धर्मिण , न धर्मस्य, सद्भाव निषेधति—तदा उपचारच्छलम् इति ।

२ अभिधानस्येति । ' अभिधानस्य ' शब्दस्य ' धर्म ' प्रयोग । तस्य 'विकल्प ' द्वैविध्यम् । तस्य द्विविध प्रयोग , प्रधानो भाक्तश्च । तत्रापि प्रधान एव ' यथार्थ ' औत्सर्गिक इति भाव । तस्य तु क्वचिदपवादाद् भाक्तप्रयोगोऽप्याश्रियते ।

३ तस्येति । ' तस्य ' धर्मविकल्पस्य 'निर्देशे ' धर्मविकल्पनिर्देशे इति सूत्र समासविग्रह । किन्तु वाक्य गताऽर्थस्य निर्देशो न भवत्यतोऽत्रारचिस्तापर्यंकारस्य मतेन—' धर्मविकल्पेन निर्देशो ' इत्यव विग्रह । तत्र च ' निर्देश ' इत्यस्य वाक्ये ' इत्यर्थ । निर्दिश्यतेऽनेनेति व्युत्पत्त्या ।

४ का पुनरिति । अर्थविकल्पोपपत्त सर्वत्र छलत्वावश्यकत्वम् । यथाक्त छलसामान्यलक्षणे दशमे सूत्रे ।

५ ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगा हन्त सर्व सर्वत्र प्रयुज्येतत्यत आह नीतार्थ इति प्रापितार्थ इति यावत । अन्यत्र दृष्टस्यान्यत्र प्रयोग सम्बन्धान्व भवतीति नातिप्रसङ्ग इत्यर्थ ।

अत्र समाधिः[1] —प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरभ्यनुज्ञा प्रतिषेधो वा, न छन्दतः[2] । प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः । सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा, न छन्दतः । यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न छन्दतः । अथ गुणभूतं तदा गुणभूतस्य । यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ॥ १४ ॥

वाक्छलमेवोपचारच्छलं तदविशेषात्[3] ॥ १५ ॥

"न वाक्छलादुपचारच्छलं भिद्यते, तस्याप्यर्थान्तरकल्पनाया अविशेषात्। इहापि[4] स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति " ॥ १५ ॥

न, तदर्थान्तरभावात् ॥ १६ ॥

न वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात् । कुतः ? अर्थान्तरकल्पनातः । अन्या[5] ह्यर्थान्तरकल्पना अन्योऽर्थसद्भावप्रतिषेध इति ॥ १६ ॥

१ अत्र समाधिरिति—प्रतिविधानमुपचारच्छलस्येति शेषः ।

२ छन्दत इत्यस्य स्थाने छलत पाठ इति कश्चित् । छन्दतः स्वेच्छयेत्यर्थः । छलनमिति तात्पर्यकृत् ।

३ वाक्छलमिति सूत्रम् । परीक्षाप्रकरणसंनिधानात् तदर्थं लक्षणप्रकरणेऽपि सूत्रकारश्छललक्षणं परीक्षितुमुपक्रमते ।

४ इहापीति । यथा वाक्छले नवानाथो नवशब्दः संख्याभेदे विकल्पितस्तथोपचारच्छलेऽपि मञ्चस्थपुरुषार्थो मञ्चशब्दो मञ्चार्थ एव कल्पित इति साम्यम् ।

५ अन्येति । एकत्र—उपचारच्छले—वस्तुसद्भावः प्रतिषिध्यते अन्यत्र—वाक्छले—वस्त्वभ्यनुज्ञाय कम्बलयोगमप्यभ्युपगम्य कम्बलस्यानेकतारूपो धर्मः प्रतिषिध्यते । एकत्र धर्मः प्रतिषिध्यतेऽन्यत्र धर्मी । सोऽयमतिमहान् विशेष इति वार्तिकमतम् । भाष्यमतेन तु—उपचारच्छले भाक्तमर्थं विहाय प्रधानस्यार्थस्य कल्पना वाक्छले तु नवसंख्यारूपस्यार्थस्य सर्वथा प्रतिषेध एवेति विशेषः ।

अत्र तात्पर्यम् मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते मञ्चा इति त्वनूद्यते । अत एव गुणः स्वन्यायकल्पनेति मञ्चा इत्येतदप्रधानमनूद्यतया भाक्तम्, न तु

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते[1], किञ्चित्साधर्म्यात्। यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति। विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति। अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते त्रित्वमपि न निवर्त्स्यति ॥ १७ ॥

( ४ ) पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्।

अत ऊर्ध्वम्—

**[2]साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥**

[3]प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः। स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। '[4]उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः' इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानो[5]ऽर्थो जातिरिति ॥ १८ ॥

---

क्रोशनमेव वस्तु प्रतिषिध्यते 'नैव मञ्चाः क्रोशन्तीति' छलवाक्येन। 'नवकम्बलो देवदत्त' इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते। तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते, किन्तु तदेकदेशस्यानेकतायाः इति महान् भेद इति।

१ प्रतिषिध्यत इति—पञ्चदशसूत्रे शङ्केनेत्यर्थः।

२ साधर्म्येत्यादि सूत्रम्। व्याप्तिनिरपेक्षयत्किञ्चित्पदार्थसाधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम्' अनिष्टप्रदर्शनेन दूषणाभिधानं जातिः। यद्यपि साधर्म्यवैधर्म्यान्यतरप्रदर्शनं सर्वत्र जातौ नास्ति तथाऽपि व्याप्तिनिरपेक्षतया दूषणाभिधानं तात्पर्यमिति विवरणकाराः। अत एव—'असदुत्तरं जातिः' रित्येतावन्मात्रमेव जातिलक्षणं नव्यानामिति।

३ न छलं साधर्म्यवैधर्म्ये स्तः, न च सम्यग् दूषणं साधर्म्यवैधर्म्यमात्रात्, अपि तु प्रयोगादिति प्रयुक्ते हेतौ तदाभासे वा, यः प्रसङ्गः 'जायते स जातिरिति'।

जात्योत्तरं न सर्वत्रानुचितमेव। जल्पे हि वेदप्रामाण्यविद्वांसं प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते सदुत्तरं चास्य सहसा न स्फुरति, तदप्रसरणा माभूद्वेदप्रामाण्यशङ्केति जात्याऽपि प्रत्यवस्थेयम्। क्वचित्पुनर्बुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः सम्भवति।

४ उदाहरणेति। अत्रोदाहरणग्रहणमुपलक्षणार्थम्। अनुदाहरणसाधर्म्यवैधर्म्याभ्यामपि प्रत्यवस्थानं भवत्येव जातिरिति वार्तिकम्।

५ जायमान इति। जायत इति जातिरिति पदव्युत्पत्तिं दर्शयति ॥

[1]विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

[2]विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽप्यप्रारम्भः । परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति ।

[3]असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥

'[4]किं पुनर्[5]दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ सिद्धान्तवद्भेद' इत्यत आह—

[6]तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम् । तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम् । नानाकल्पो विकल्पः । विविधो वा कल्पो विकल्पः । तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम् । शेषस्तु विप्रतिपत्तिरिति ।

इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिता यथालक्षणं [7]परीक्षिष्यन्त इति त्रिविधा चास्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥ २० ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

## समाप्तश्चायं प्रथमोऽध्यायः ।

---

१ विप्रतिपत्तिरिति सूत्रम् । निग्रहस्थानेनैव समस्तकथामुद्रणमित्यस्य पश्चादभिधानम् । कथायां प्रवृत्तायां वादिप्रतिवादिनोरतत्त्वज्ञानज्ञापिका क्रिया निग्रहस्थानमिति सूत्रार्थः ।

२ विपरीतेति । सूक्ष्मविषया प्रतिपत्तिः 'विपरीता', स्थूलविषया च 'कुत्सिता' इति भेदेन निर्देशः ।

३ लाघवाय 'विप्रतिपत्त्यप्रतिपत्ती' इत्येव वक्तव्ये कस्मादसमासकरणमित्यत आह असमासादिति । विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम बहु निग्रहस्थानमस्ति, तदपि ग्रन्थाधिक्येनावरुध्यत इति भावः ।

४ किं पुनरिति । जातिनिग्रहस्थाने च प्रत्येकमेकविधमथवा नानाविधमिति प्रश्नार्थः ॥

५ दृष्टान्तवदिति । यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथाऽपि लक्षणाभेदाभिप्रायेणाभेद उक्तः ।

६ तद्विकल्पादिति सूत्रम् । एतेन तयोर्विभागकथनं कालविलम्बं सूचितं । 'नानाकल्प' इति स्वरूपतः, 'विविध' इति प्रकारतः ।

७ परीक्षिष्यन्त इति द्वितीयादिष्वध्यायेष्विति यावत् ।

# अथ द्वितीयाध्यायस्याद्यमाह्निकम् ।

## ( १ ) संशयपरीक्षाप्रकरणम् ।

अत ऊर्ध्वं प्रमाणादिपरीक्षा । सा च ' विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ( १. १. ४१ ) इत्यग्रे विमर्श एव परीक्ष्यते—

“[1]समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः” ॥१॥

“[2]समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममात्रात् । “अथ वा समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव इति । [3]अथ वा समानधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नः । न जातु

---

१ समानेत्यादि संशयलक्षणोक्तकारणमात्रोपलक्षणम् । अत्र पञ्चसूत्रात्मकः पूर्वपक्षः ।

२ समानस्येत्यादिभाष्यमसमञ्जसमिवाभाति । ' समानधर्माध्यवसायात् न संशयः ' इति सूत्राक्षराणां स्पष्टोऽर्थः । अतः ' समानस्य धर्मस्याध्यवसायात् संशयः' इति भाष्योक्तिः सूत्रविरुद्धेवाभाति । केचिदिदमसामञ्जस्यमेवं परिहरन्ति ' अज्ञायमानस्य धर्ममात्रस्य संशयप्रयोजकत्वात्तदवधारणे निश्चयस्य संशयविरोधित्वस्वाभाव्येन संशयहेतुत्वानुपपत्तिरिति भावः ''–इति । किन्त्वयमेव भावो भाष्योक्तचतुर्थविकल्पस्य स्पष्टः । अतः स एव भावः प्रथमकल्पस्य न भवितुमर्हति ।

इदमसामञ्जस्यं वार्तिककारेण तथा च तात्पर्यकारेणापि लक्षितम् । अत एवेमां पूर्वपक्षोक्तिं वार्तिककारो यथाश्रुत्युत्थानत्वेन निर्दिष्टवान् । तात्पर्यकारश्च 'समानधर्मोपपत्त्यादर्विशेषणमपश्यतः पूर्वपक्षः इत्युक्तवान् ।

अत्र सूत्रे त्रीणि वाक्यानि । ( १ ) प्रथमं तावत्—' समानधर्माध्यवसायात् न संशयः ' इति संशयलक्षणसूत्रस्थस्य ( १।१।२३ ) समानधर्मोपपत्तेः संशयः ' इत्यस्य वाक्यस्य प्रतिषेधरूपम् । एतस्यैव वाक्यस्य तात्पर्यं भाष्यकार उक्तिचतुष्टयेनाह । संशयलक्षणसूत्रस्थमुपपत्तिपदमस्तित्वपरं मन्वानस्यैवाद्योक्तिः–धर्ममात्रस्य सत्त्वान्न संशयः किन्तु तस्याध्यवसायादिति । अथवेत्यादिद्वितीयोक्तिरुपपत्तिपदं ज्ञानसामान्यपरं मन्वानस्य । पुनरथवेत्यादितृतीयोक्तिरुपपत्तिपदं निश्चयात्मकज्ञानपरं मन्वानस्य । पुनरथवेत्यादिचतुर्थ्युक्तिस्तृतीयाया एव प्रकारान्तरेणोपवर्णनम् । ( २ ) द्वितीयं सूत्रवाक्यम्–' अनेकधर्माध्यवसायान्न संशयः ' इति संशयलक्षणसूत्रस्थोपपत्तिपदप्रयोगमूलकम् । अत्रापि पूर्ववत्पूर्वपक्षोक्तिचतुष्टयस्य सम्भवः । ( ३ ) तृतीयं सूत्रवाक्यम्–' अन्यतरधर्माध्यवसायान्न संशयः ' इति ।

३ अथ वा समानधर्माध्यवसायादिति । धर्मिणोरर्थान्तरभावाद्वा न संशयः । न ह्यन्यस्मिन्नुपलब्धेऽन्यत्र संशयः ।

स्पर्शयार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशय इति। अथवा नाध्यव सायादर्थावधारणादनवधारणज्ञानं संशय उपपद्यते कार्यकारणयोः सारूप्या भावादिति।

'एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति। ततो ह्यन्यतरावधारणमेवेति" ॥ १ ॥

"विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च" ॥ २ ॥

' न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः। किं तर्हि विप्रतिपत्तिमुपलभमानस्य संशयः। एवमव्यवस्थायामपीति। अथवास्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति। तथोपलब्धिर व्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यत इति" ॥ २ ॥

"विप्रतिपत्तौ च सम्प्रतिपत्तेः" ॥ ३ ॥

"या च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते सा सम्प्रतिपत्तिः। सा हि द्वयोः प्रत्यनीकधर्मविषया। तत्र यदि विप्रतिपत्तेः संशयः सम्प्रतिपत्तेरेव संशय इति" ॥ ३ ॥

"अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" ॥ ४ ॥

---

१ नाध्यवसायादिति। कार्यस्यानवधारणरूपत्वात् कारणस्यावधारणात्मकत्वाच्च सम्भवति। न निश्चयोऽनिश्चयस्य जनको भवितुमर्हति।

२ तत इति—अवधारणात्मकादध्यवसायादित्यर्थः।

३ विप्रतिपत्त्येति पूर्वपक्षोऽनुवर्तते। अत्रापि संशयसूत्रस्थापपत्तिपदाश्रित एव पूर्वपक्षः। तत्र प्रथमवाक्यं तत्पदमस्तित्वमात्रपरं मन्वानस्य। अथवेत्यादि द्वितीयं तु तत्पदं ज्ञानपरं मन्वानस्येत्यवधेयम्।

४ तथोपलब्धिरिति। उपलब्धिरनिश्चितानुपलब्धिश्चानिश्चितेत्येतन्मात्रं जानतः पुरुषस्य संशयो न सम्भवति। प्रत्युतास्यामवस्थायामेतस्य तद्विषयविशेषस्य किमपि ज्ञानं न सम्भवति।

५ या चेति। अस्त्यात्मेत्येकस्य निश्चयात्मकं ज्ञानम्, नास्त्यात्मेति चापरस्य। एवञ्चात्र निश्चयात्मकमेव ज्ञानद्वयम्। तथा सति यदि संशयस्तदा निश्चयादेव संशय इत्यापततीति पूर्वपक्षिणो हृदयम्।

"न[1] संशय. । यदि तावदियमव्यवस्थाऽऽत्मन्येव व्यवस्थिता व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः । अथाव्यवस्थाऽऽत्मनि न व्यवस्थिता एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति" ॥ ४ ॥

" तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः" ॥ ५ ॥

"येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते, तेन खल्वत्यन्तसंशयः प्रसज्यते । समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेद.[2] । न[3] ह्ययमतद्धर्मा धर्मी विमृश्यमाणो गृह्यते, सततं तु तद्धर्मा भवतीति" ॥ ५ ॥

अस्य प्रतिषेधप्रपञ्चस्य सङ्क्षेपेणोद्धार —

यथोक्ताध्यवसायादेव[4] तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥

न संशयानुपपत्ति, संशयानुच्छेदश्च न प्रसज्यते । कथं ? यत्तावत् समानधर्माध्यवसाय संशयहेतुः न समानधर्ममात्रमिति । एवमेतत् । "कस्मादेवं नोच्यते इति ?" विशेषापेक्ष इति वचनात् तत्सिद्धेः । विशेषस्यापेक्षाऽऽकाङ्क्षा । सा चानुपलभ्यमाने विशेषे समर्था । न चोक्तं[5] समानधर्मापेक्ष

---

१ न संशय इति भाष्यस्य सूत्रपदैरेवान्वय । यदि तावदिति । अव्यवस्थाया अव्यवस्थात्व यदि निश्चितन्तदा निश्चितरूपत्वात्तस्या अव्यवस्थात्मतैव निरस्ता । अथ च तथात्वन्तस्या यद्यनिश्चितं तर्हि तस्या· स्वरूपहानादेवाव्यवस्थात्मता सुदूर पराहतेति भाव ।

२ तथेत्यादि पूर्वश्लोऽनुवर्तते । समानधर्मादीनां संशयकारणानां सातत्याच्चिरसंशयप्रसङ्ग· ।

३ नह्ययमिति । स्थाणुरयं पुरुषो वेति संशयानन्तरं स्थाणुरेवायमिति निश्चयात्मके ज्ञाने जातेऽपि समानधर्मादीना ज्ञानं वर्तत एव । निश्चयज्ञानेन ते धर्मास्तद्धर्मज्ञानं वा नापनोद्यते । ततो यदि समानधर्मज्ञानमेव संशयकारणं तर्हि निश्चयज्ञानानन्तरमपि संशयप्रसङ्ग इति भाव. ।

४ यथोक्तेत्यादि सिद्धान्तसूत्रम् । यदि निर्विशेषणं समानधर्मोपपत्त्यादि संशयकारणमुच्येत तदा तदुपपत्ते· पश्चादकरणात् पूर्वमपि न कुर्यादित्यसंशय. स्यात् । अथवा पूर्वं करणात् पश्चादपि कुर्यादित्यत्यन्तसंशय. स्यात् । दूरत्वादिदोषविशेषादर्शनादिविशेषणविशिष्टमेव तु समानधर्मोपपत्त्यादि संशयकारणमिष्टमतो नोक्तप्रसङ्गप्रसङ्गः ।

५ न चोक्तमिति । संशयलक्षणसूत्रे विशेषापेक्ष· संशय इत्युक्तम्, न समानधर्मापेक्ष इति । समानधर्मापेक्षाभावश्च समानधर्माध्यवसाये सत्येव भवितुमर्हति ।

इति। समाने च धर्मे कथमाकाङ्क्षा न भवेद् यद्ययं प्रत्यक्षः स्यात्। एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति।

उपपत्तिवचनाद्वा। समानधर्मोपपत्तेरित्युच्यते। न चान्या सद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति। अनुपलभ्यमानसद्भावो हि समानो धर्मोऽविद्यमानवद्भवतीति।

विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम्। यथा लोके धूमेनाग्निरनुमीयते इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति ज्ञायते। कथम्? दृष्ट्वा हि धूममथाग्निमनुमिनाति नादृष्टे। न च वाक्ये दर्शनशब्दः श्रूयते, अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वम्। तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययस्याभिधानं बोद्धानुजानाति। एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति।

यथोक्त्वा-' समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव '' इति-पूर्वदृष्टविषयमेतत्। यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभ इति, कथं नु विशेषं पश्येयं येनान्यतरमवधारयेयमिति। न चैतत् समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तत इति।

यच्चोक्तं- नार्थान्तराध्यवसायादन्यत्र संशय'' इति, यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति।

यत्पुनरेतत्- कार्यकारणयोः सारूप्याभावादिति'', कारणस्य भावाभावयोः कार्यस्य भावाभावौ कार्यकारणयोः सारूप्यम्। यस्योत्पादादुत्पद्यते

एवञ्च समानधर्मोपपत्त्या अनुवन्यासेनैव समानधर्माध्यवसाय उपलक्षित । उपपत्तिपदं सत्तापरमभ्युपगम्यैवदमुत्तरं पूर्वपक्षस्य ।

१ विषयशब्देनेति । समानधर्मो विषय तेन विषयिणस्तज्ज्ञानस्याप्यभिधानमित्यर्थ ।

२ यथोक्त्वेति । यदप्युक्तमित्यर्थ इति तात्पर्यटीका ।

३ यच्चोक्तमिति । प्रथमसूत्रभाष्यगतपूर्वपक्षतृतीयहेतोरनुवाद ।

४ सारूप्याभावादित्यनन्तरमध्यवसायादनवधारणात्मक संशयो नोपपद्यत इति पूर्वपक्षवचनानुवाद ।

यस्य चानुत्पादाद् यन्नोत्पद्यते तत्कारणं कार्यमितरदित्येतत्सारूप्यम्। अस्ति च संशयकारणे संशये चैतदिति।

एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति।

यत्पुनरेतदुक्तं 'विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय" इति, पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे येनान्यतरमवधारयेयम्, तत्कोऽत्र विशेषः स्याद्येनैकतरमवधारयेयमिति संशयो विप्रतिपत्तिजनितोऽयं न शक्यो विप्रतिपत्तिसम्प्रतिपत्तिमात्रेण निवर्तयितुमिति।

एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति।

यत्पुनरेतत्—"प्रतिपत्तौ च सम्प्रतिपत्तेरिति विप्रतिपत्तिशब्दस्य योऽर्थः तदध्यवसायो विशेषापेक्षः संशयहेतुः। तस्य च समाख्यान्तरेण न निवृत्तिः। समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः। तदध्यवसायश्च विशेषापेक्षः संशयहेतुः। न चास्य सम्प्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्तते। तदिदमकृतबुद्धिसम्मोहनमिति।

१ अस्ति चेति। अत्र केषाञ्चिन्मतेन द्विविधं सारूप्यं भाष्यकारेणोक्तम्—कारणस्य भावाभावयोः कार्यस्य भावाभावाविति एकं सारूप्यम्, कारणस्योत्पादात्कारणमुत्पद्यते तदनुत्पादाच्च नोत्पद्यत इत्यपरम्। किन्तु द्वितीयस्य पूर्वानुवादकत्वमेव स्पष्टं प्रतिभाति।

वार्तिककृन्मतेन तु विशेषानवधारणमात्रमेव संशयस्य कारणेन सारूप्यम्। यद्युत्पत्तिः सारूप्यं कार्यकारणयोस्तदा नियतद्रव्याणां तादृक्सारूप्याभावादकारणतैव स्यादित्येव भाष्यमतेऽस्वरसम्।

२ विप्रतिपत्तिसम्प्रतिपत्तीति। विप्रतिपन्नयोर्द्वयोः पुरुषयोर्या विप्रतिपत्तिस्तस्याः सम्प्रतिपत्तिज्ञानं तटस्थस्य तृतीयस्य, तन्मात्रेणेत्यर्थः। यत्पुनरिति तृतीयसूत्रगताक्षेपस्य परामर्शः।

३ समाख्यान्तरेणेति—विप्रतिपत्तिपदस्य प्रसिद्धोऽर्थो मतभेदस्तस्याध्यवसायाज्ज्ञानाद्विशेषापेक्षात्संशय उत्पद्यत इति निर्विवादं स्थितं विप्रतिपत्तेः 'सम्प्रतिपत्ति' रिति नामान्तरमुत्थाप्य तस्याः संशयकारणत्वं निराकर्तुं न शक्यते। विप्रतिपन्नयोरेकैकस्मिन् स्वमतस्य सम्प्रतिपत्तिरूपत्वेऽपि पक्षस्य तृतीयस्योभयोर्विप्रतिपत्तिरूपतैवेति हृदयम्।

यत्पुनः[1]–"अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" इति संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना–व्यर्था शब्दान्तरकल्पना। अव्यवस्था[2] खलु व्यवस्था न भवत्यव्यवस्थात्मनि व्यवस्थितत्वादिति। नानयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते, यावता चाव्यवस्थात्मनि व्यवस्थिता न तावतात्मानं जहाति, तावता ह्यनुज्ञाता[3]ऽव्यवस्था। एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं साधयतीति।

यत्पुनरेतत्–"तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः" इति, नायं समानधर्मादिभ्य एव संशयः। किं तर्हि? तद्विषयाध्यवसायाद् विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति।

"अन्यतरधर्माध्यवसायाद्वा न संशयः" इति। तन्न युक्तम्। विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्मः। न तस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति ॥ ६ ॥

**यत्र[4] संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥**

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा, तत्र तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति। अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति ॥ ७ ॥

इति संशयपरीक्षा प्रकरणम् ॥

---

१ यत्पुनरिति चतुर्थसूत्रगतपूर्वपक्षपरामर्शः।

२ अव्यवस्था खल्विति। या किल 'अव्यवस्था' इति नाम्ना प्रसिद्धा तस्याः 'अव्यवस्थात्मनि' अव्यवस्थात्वे 'व्यवस्थितत्वात्' निश्चितत्वात् सा 'व्यवस्था न भवितुमर्हति। अतस्तस्या व्यवस्थेति पर्यायान्तरकल्पनं तु सर्वथा व्यर्थमेवेत्यर्थः।

३ अनुज्ञातेति–पूर्वपक्षिणेत्यर्थः।

४ यत्र संशय इत्यादि सूत्रम्। अस्य यथाश्रुतोऽर्थो भाष्यकारेणैव स्पष्टीकृतः। परिशुद्धिकारस्तस्य तात्पर्यान्तरमपि वर्णयाञ्चकार। तद्यथा। यस्य (पदार्थस्य) विषये संशयस्तस्यैव परीक्षोपयुक्ता। प्रयोजनादीनां तु परीक्षा नास्ति। यतोऽस्मिन् विषये संशयो नास्ति। आगमप्रामाण्यं च पण्डितरूपस्याऽविवादसिद्धं संदेहाभावात्। अथवा प्रयोजनादयोऽप्यतिदेशेन परीक्षिताः। यत्र क्वचित् संशयः स्यात् तत्रैवमुत्तरोत्तरप्रसङ्गः कर्तव्यः। इतरेषु प्रयोजनादिषु परीक्षाप्रसङ्गः कर्तव्य इति भावः ॥

## ( २ ) प्रमाणसामान्यपरीक्षा प्रकरणम् ।

अथ प्रमाणपरीक्षा—

"प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः" ॥ ८ ॥

"प्रत्यक्षादीनां प्रमाणत्वं नास्ति त्रैकाल्यासिद्धेः । पूर्वापरसहभावानुपपत्तेरित्यर्थः" ॥ ८ ॥

*अस्य सामान्यवचनस्यार्थविभागः—*

"पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः" ॥ ९ ॥

"गन्धादिविषयं ज्ञानं प्रत्यक्षम् । तद्यदि पूर्वं, पश्चाद्गन्धादीनां सिद्धिः, नेदं गन्धादिसन्निकर्षादुत्पद्यत इति" ॥ ९ ॥

"पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः" ॥ १० ॥

"असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयं स्यात् । प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमित्येतत्सिध्यति" ॥ १० ॥

---

१ अथ प्रमाणेति । आर्येण हि प्रमाणसंशयपरीक्षायामुद्देशक्रमो बाधितः । प्रमाणादिषु तु तद्बाधकारणाभावादुद्देशक्रमानुरोधेन प्रमेयादिभ्यः प्राक् प्रमाणान्येव परीक्षितानि । तत्रापि प्रथमं प्रमाणसामान्यलक्षणपरीक्षा, तत्पूर्वकत्वाद्विशेषलक्षणानाम् । तत्र सामान्यलक्षणम्–'उपलब्धिसाधनं प्रमाणमिति'। तच्चोपलब्धिसाधनं प्रत्यक्षादीनामेव ।

२ प्रत्यक्षादीनामिति पूर्वपक्षसूत्रम् । अयमत्र पूर्वपक्षिणो माध्यमिकस्याभिसन्धिः । यद्यपि मम विश्वविचारासहत्ववादिनः प्रमाणं नाम न किञ्चिदस्ति विचारसहम्, तथाऽपि लोकसिद्धान्येव प्रमाणानि तैरेव प्रमाणैः पर्यालोच्यमानानि विचारं न सहन्ते । सोऽयं प्रमाणानामपराधो यानि स्वविरोधेन विलीयन्ते, न ममापराध इति । प्रयोगस्तु–प्रत्यक्षादयो न प्रमाणत्वेन व्यवहर्तव्याः, कालत्रयेऽप्यप्रतिपादकत्वात्–यदेवं तन्न प्रमाणत्वेन व्यवह्रियते–यथा शशविषाणम्–तथा चैतत्–तस्मात्तथेति ।

३ पूर्वं हीत्यादि पूर्वपक्षसूत्रम् । ज्ञानं हि 'प्रमाणम्'। तद्योगात् 'प्रमेयम्' इति च 'अर्थ' इति च भवति । तद्यदि प्रमाणं प्रमेयादर्थात् पूर्वमुत्पद्यते तत प्रमाणात्पूर्वमेवासावर्थ इतीन्द्रियार्थसन्निकर्षादिसूत्रव्याघात इत्यर्थः ।

४ पश्चादित्यादि द्वितीयं पूर्वपक्षसूत्रम् । अथ पूर्वं प्रमेयं पश्चात् प्रमाणं तत्राह पश्चादिति । यद्यप्यर्थस्य स्वरूपं न प्रमाणाधीनं तथापि तस्य प्रमेयत्वं तदधीनम् । तदपि यत् प्रमाणात् पूर्वं न प्रमाणाधीननिबन्धनं स्यादित्यर्थः ।

"युगपत्सिद्धौ[1] प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम्" ॥ ११ ॥

"यदि प्रमाणं प्रमेयं च युगपद्भवत एवमपि गन्धादिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्सम्भवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः। या इमा बुद्धयः क्रमेणार्थेषु वर्तन्ते तासां क्रमवृत्तित्वं न सम्भवतीति।

'व्याघातश्च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (१,१,१६) इति।

"एतावांश्च[2] प्रमाणप्रमेययोः सद्भावविषयः। स चानुपपन्न इति। तस्मात्प्रत्यक्षादीनां प्रमाणत्वं न सम्भवतीति"।

अस्य[3] समाधिः—उपलब्धिहेतोरुपलब्धिविषयस्य[4] चार्थस्य पूर्वापरसहभावानियमाद्यथादर्शनं[5] विभागवचनम्। क्वचिदुपलब्धिहेतुः पूर्वं, पश्चादुपलब्धिविषयः यथादित्यस्य[6] प्रकाश उत्पद्यमानानाम्। क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः—यथावस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः—यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं, प्रमेयं तूपलब्धिविषयः। एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथाऽर्थो दृश्यते तथा विभज्य वचनीय इति। तत्रैकान्तेन प्रतिषेधानुपपत्तिः। सामान्येन खल्वविभज्य[7] प्रतिषेध उक्त इति।

---

१ युगपदित्यादि द्वितीयपूर्वपक्षसूत्रम्। यौगपद्ये इन्द्रियव्याघात सूत्रव्याघातश्चेत्यर्थः।

२ एतावानिति। पूर्ववृत्तित्वम्—पश्चाद्भावित्वं यौगपद्यं वा दृश्येत एवं त्रयः पक्षाः सम्भवन्ति प्रमाणप्रमेययोर्विषये।

३ अस्य समाधिरिति गतसूत्रत्रयोद्भावितपूर्वपक्षस्य समाधानमाह।

४ उपलब्धिहेतोरित्यादिवाक्यस्य क्वचित्सूत्रत्वेनोल्लेखः प्रामादिकः।

५ 'उपलब्धिहेतुः' प्रमाकरणम्। 'उपलब्धिविषयः' प्रमेयः। यथादर्शनमिति यथाप्रमाणमित्यर्थः।

६ आदित्यस्येति। आदित्यप्रकाशश्चिरन्तनस्थायि तदुद्भासिताः पदार्थास्तु क्रमश उपद्यन्ते।

७ खल्वविभज्येति पाठः सम्यक्। यतः पूर्वपक्षिणा 'सामान्येन' प्रमाणसामान्यप्रमेयसामान्यपरतया अविभज्य पदार्थविशेषावस्थाविशेषादिनिष्ठयम विचार्यैव सर्वप्रमाणप्रतिषेध उक्तः। खलु विभज्येत्येव पाठः स्वीकृत्य भाष्यचन्द्रेण व्याख्यातः।

समाख्याहेतोस्त्रैकाल्ययोगात्तथाभूता समाख्या । यत्पुनरिदम्—"पश्चात्सिद्धावसति प्रमाणे प्रमेयं न सिध्यति । प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायते" इति—प्रमाणमित्येतस्या समाख्याया उपलब्धिहेतुत्वं निमित्तम् । तस्य त्रैकाल्ययोग । उपलब्धिमकार्षीदुपलब्धिं करोति उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता । प्रमितोऽनेनार्थ प्रमीयते प्रमास्यत इति प्रमाणम् । प्रमित प्रमीयते प्रमास्यते इति च प्रमेयम् । एव सति भविष्यत्यस्मिन् हेतुत उपलब्धि, प्रमास्यतेऽयमर्थ प्रमेयमिदमित्येतत्सर्वं भवतीति ।

त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्ति । यश्चैव नाभ्यनुजानीयात्तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यतीति व्यवहारो नोपपद्यत इति ।

"प्रत्यक्षादीनामप्रामाण्य त्रैकाल्यासिद्धे" रित्येवमादिवाक्य प्रमाणप्रतिषेध । तत्राय प्रष्टव्य —अथानेन प्रतिषेधेन भवता किं क्रियत इति । किं सम्भवो निवर्त्यते अथासम्भवो ज्ञाप्यत इति ? तद्यदि सम्भवो निवर्त्यते, सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्ति । अथासम्भवो ज्ञाप्यते प्रमाणलक्षण प्राप्तस्तर्हि प्रतिषेध प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति ॥ ११ ॥

"किं चात "—

**त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥**

अस्य तु विभाग । पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किं प्रतिषिध्यते । पश्चात्सिद्धौ प्रतिषेध्यासिद्धि प्रतिषेधाभावादिति । युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थक प्रतिषेध इति । प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥ १२ ॥

**सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥**

---

१ प्रमाणप्रतिषेध —आत्यन्तिक इति भाव ।

२ सम्भव —प्रत्यक्षादीनां प्रमाणतामिति शेष ।

३ सति सम्भव इति । यस्य सम्भव —यद्यत्यन्तमसत्–तस्यात्यन्तिक प्रतिषेधो नाऽऽपादयितु शक्य इति हृदयम् ।

४ अथासम्भव इति । यदि पूर्वपक्षिण प्रतिषेधवाक्यमसम्भवस्य ज्ञापकं तदा ज्ञापकत्वसाम्यात् प्रमाणस्वभावमेव भवति । ततश्च प्रमाणप्रतिषेधे ये हेतव पूर्वपक्षिणाऽऽवितास्तैरेव तदीयप्रतिषेधवाक्यमपि प्रतिषिद्ध भवतीति भाव ।

कथम् ? त्रैकाल्यासिद्धेरित्यस्य हेतोर्यदुदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते दर्शयितव्यमिति । न च तर्हि प्रत्यक्षादीनामप्रामाण्यम् । अथ प्रत्यक्षादीनामप्रामाण्यम्, उपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति । सोऽयं सर्वप्रमाणैर्व्याहतो हेतुरहेतुः । 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' (१, २, ६) इति । वाक्यार्थो ह्यस्य सिद्धान्तः । स च वाक्यार्थः—प्रत्यक्षादीनि नार्थं साधयन्तीति । इदं चावयवानामुपादानमर्थस्य साधनायेति । अथ नोपादीयते, अप्रदर्शितहेत्वर्थस्य दृष्टान्ते न साधकत्वमिति । निषेधो नोपपद्यते हेतुत्वासिद्धेरिति ॥ १३ ॥

तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाश्रितानां प्रामाण्यं प्रसज्यते—अविशेषादिति । एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्त इति । विप्रतिषेध इति वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे, न व्याघातेऽर्थाभावादिति ॥ १४ ॥

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

"किमर्थं पुनरिदमुच्यते ?

१ वाक्यार्थ इति । प्रमाणानि नार्थं साधयन्ति— इति वाक्यं पूर्वपक्षिणः सिद्धान्तप्रतिपादकम् । तत्साधनाय पञ्चावयवोपपन्नानुमानवाक्यमुद्भावितानि । प्रत्येकं चैतेऽवयवाः स्वार्थप्रतिपादकाः तत्प्रतिपादकत्वाच्चैते प्रमाणानि । एवमप्यवयववाक्यानां स्वसिद्धान्तसाधनायोद्भावने विरुद्धो नाम हेत्वाभासः ।

२ अप्रदर्शितेति । दृष्टान्ते अप्रदर्शितहेत्वर्थस्य साधकत्वमेव न इत्यन्वयः । यस्य हेतोः हेतुभावो न प्रदर्शितस्तादृशो हेतुः किमपि साधयितुं नार्हति । अथ वा यावद्भवता स्वोद्भावितहेतोर्दृष्टान्ते हेतुत्वं न प्रदर्शितं तावत् तस्य साधकत्वं न सम्भवति । अस्मिन् पक्षे अप्रदर्शितहेत्वर्थस्य तवेति सम्बन्धः ।

३ व्यत्ययमुपसर्ग इति । यावदुक्तं विशेषेण सर्वेषु प्रमाणेषु प्रतिषेध इति तावदुक्तं भवति विप्रतिषेध इति । कानिचित्प्रमाणानि प्रतिषिध्यन्ते कानिचिदभ्यनुज्ञायन्ते स्ववाक्याश्रितान्यभ्यनुज्ञायन्ते परवाक्याश्रितानि प्रतिषिध्यन्ते । तच्च नातीव बाधितं प्रमाणप्रतिषेधकस्य माध्यमिकस्येत्यर्थः ।

४ किमर्थमिति । एकादशसूत्रभाष्ये अस्य समाधिरित्यस्यानन्तरमुक्तम्—' उपलब्धिहेतोरित्यादि ' समुद्दिश्य प्रश्नः । यस्तत्रोक्तः तदेवात्र पुनः किमर्थमुच्यत इति भावः ।

एतत्प्रश्नवशेनैव पूर्वोक्तं वाक्यमुपलब्धिहेतोरित्यादिविभागवचनमित्ययं सूत्रत्वेनाभिप्रयन्ति केचित् । एवं सत्येवास्य त्रैकाल्याप्रतिषेधश्चेति वाक्यं प्रति प्रश्न-

पूर्वोक्तनिबन्धनार्थम्। यत्तावत्पूर्वोक्तम्—" उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शन विभागवचनमिति "—तदित समुत्थानं यथा विज्ञायेत। अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे। त्रैकाल्ये चायुक्त' प्रतिषेध इति।

तत्रैका विधामुदाहरति शब्दादातोद्यसिद्धिवदिति। यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते। साध्य चातोद्य साधनं च शब्दः। अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमान भवतीति। वीणा वाद्यते वेणुः पूर्यते इति स्वनविशेषेण आतोद्यविशेष प्रतिपद्यते। तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यत इति।

निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदितव्यमिति। " कस्मात्पुनरिह तन्नोच्यते ? "

पूर्वोक्तमुपपाद्यत इति। सर्वथा तावदयमर्थ' प्रकाशयितव्य। स इह वा प्रकाश्येत तत्र वा—न कश्चिद्विशेष इति ॥ १५ ॥

प्रमाण प्रमेयमिति च समाख्या समावेशेन[3] वर्तते समाख्यानिमित्तवशात्। समाख्यानिमित्त तूपलब्धिसाधन प्रमाणम् उपलब्धिविषयश्च प्रमेयमिति। यदा च उपलब्धिविषय: कश्चिदुपलब्धिसाधन भवति तदा प्रमाणं प्रमेयमिति चैकोऽर्थोऽभिधीयते ॥

अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

## प्रमेया च तुला प्रामाण्यवत् ॥ १६ ॥

स्याक्षेप स्यादिति तेषामाशय। किन्त्वेतन्मत भाष्यस्थर्यवाग्रिमपङ्क्त्या पूर्वोक्तनिबन्धनार्थमित्यादिरूपया पराहतम्। एकादशसूत्रभाष्ये यदुक्त तस्य बीजमत्रत्य सूत्रमेवति ब्रुवता भाष्यकारेण पूर्वस्य वाक्यस्यासूत्रत्वमत्रत्यस्य च सूत्रत्व स्पष्टीकृतम्।

१ पूर्वोक्तेति। एकादशसूत्रे यदस्माभिरुक्त न तदुरसूत्रमपि तु सूत्रोक्तार्थ एवेति भाव।

२ इतस्समुत्थानमिति। इत अत्रैव त्रैकाल्येत्यादिसूत्रे समुत्थानम् बीज यस्य तत्।

३ समावेशेनेति। समावेशो नियम इति वार्तिकम्।

४ प्रमेया चेति सूत्रपाठो वाचस्पतिमिश्रसम्मत। तदन्वयश्च- 'तुला प्रामाण्यवत् प्रमेया च' इति। तुला यथा प्रमाण भवति तथा प्रमेया चेत्यर्थः। तुला सुवर्णादिगुरुत्वे 'प्रमाणम्' भवति। किन्तु यदाऽस्या प्रामाण्य प्रति सन्देहो भवति तदा

गुरुत्वपरिमाणज्ञानसाधनं तुला प्रमाणं, ज्ञानविषयो गुरुद्रव्यं सुवर्णादि प्रमेयम्। यदा सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति।

एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः। उपलब्धौ स्वातन्त्र्यात् प्रमाता। बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्। उपलब्धिविषयत्वात् प्रमेयम्। उभयाभावात् तु प्रमितिः। एव- मर्थविशेषे समाख्यासमावेशो योज्यः। तथा च कारकशब्दा निमित्तवशात् समावेशेन वर्त्तन्त इति। वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात्कर्ता। वृक्षं पश्य- तीति दर्शनेनाप्तुमिष्यमाणतमत्वात् कर्म। वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम्। वृक्षायोदकमासिञ्चतीति आसिच्यमानोदकेन वृक्षमभि- प्रैतीति सम्प्रदानम्। वृक्षात्पर्णं पततीति ध्रुवमपायेऽपादानमित्यपादानम्। वृक्षे वयांसि सन्तीत्याधारोऽधिकरणमित्यधिकरणम्।

एवं च सति न द्रव्यमात्रं कारकं, न क्रियामात्रम्। किं तर्हि? क्रियासाधनं क्रियाविशेषयुक्तं कारकम्। यत्क्रियासाधनं स्वतन्त्रः स कर्ता, न

सिद्धप्रमाणभावेन तुलान्तरेण यत् परीक्षितं सुवर्णादि तेन तुलायाः प्रामाण्यं निर्धार्यते- ऽत्र चेयं प्रमेया भवति। एवमेव प्रत्यक्षादीनि प्रमाणान्यपि स्वगतधर्मविषये प्रति प्रमाणानि प्रमेयाणि भवन्तीत्यत्र तात्पर्यम्॥

प्रमेयता चेति पाठः कचिद्वार्तिककृत्सम्मतः सर्वानुगृहीतश्चाकरेभिः पूर्वैः। अत्र- प्रमाणानां प्रमेयता च भवति तुलाप्रामाण्यवत्-यथा तुलायाः प्रामाण्यं प्रमेयता चैवमत्र प्रमाणानामपीति भावः।

१ व्यवस्थाप्यते इति। तुलाख्येन परीक्ष्यते इत्यर्थः।

२ अनवयवेनेति। कार्त्स्न्येनार्थः। उपलब्धौ स्वातन्त्र्यात् प्रमेयप्रमाणसमाख्यासमावेशः सकलशास्त्रविषय इत्याशयः।

३ एवं च सतीत्यादि भाष्यग्रन्थः [illegible]।

वार्तिककारास्तु एवं चेत्यादि [illegible]।

४ द्रव्यमात्रं कारकमिति [illegible]।

५ क्रियामात्रमिति। [illegible]।

६ क्रियासाधनमिति। यत् [illegible]।

द्रव्यमात्रं न क्रियामात्रम् । क्रियया व्याप्तुमिष्यमाणतमं कर्म, न द्रव्यमात्रं न क्रियामात्रम् । एवं साधकतमादिष्वपि । एवं च कारकान्वाख्यानं यथैव उपपत्तित, एवं लक्षणतः कारकान्वाख्यानमपि, न द्रव्यमात्रेण न क्रियया वा । किं तर्हि ? क्रियासाधने क्रियाविशेषयुक्त इति । कारकशब्दश्चायं प्रमाणं प्रमेयमिति । स च कारकधर्मं न हातुमर्हति ॥ १६ ॥

'अस्ति भो कारकशब्दानां निमित्तवशात् समावेशः । प्रत्यक्षादीनि च प्रमाणानि उपलब्धिहेतुत्वात्, प्रमेयं चोपलब्धिविषयत्वात् । संवेद्यानि च प्रत्यक्षादीनि प्रमाणानि, प्रत्यक्षेणोपलभे अनुमानेनोपलभे उपमानेनोपलभे आगमेनोपलभे प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति विशेषा गृह्यन्ते । लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेणेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवमादिना । सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतोऽथान्तरेण प्रमाणान्तरमसाधनेति '॥

कश्चात्र विशेष ?—

१ पूर्वपक्षमुत्थापयति अस्ति भोरिति ।

२ उपलब्धिविषयत्वं कुत इत्यत आह प्रत्यक्षमिति ।

अयमत्र पूर्वपक्षसङ्क्षेपस्तात्पर्यकथनेन । अत्रैवं कल्पा उपपद्यन्ते । किं प्रत्यक्षादीनामुपलब्धिः ससाधना निस्साधना वा । यदाऽपि ससाधना तदाऽपि किमभिरेव प्रत्यक्षादिभिराहो प्रमाणान्तरेण । यदाऽप्यभिरेव तदाऽपि किं तयैव प्रत्यक्षव्यक्त्याऽर्थका व्यक्तिस्थैव वा तेनेति । तत्र प्रमाणान्तराभ्युपगमे विभागसूत्रव्याघातोऽनवस्थापातश्च । तत्र प्रत्यक्षादिभिः प्रत्यक्षाद्यन्तराणां ग्रहणेऽनवस्थापातः । तयैव व्यक्त्या तु ग्रहणं सति वृत्तिविरोधः । नहि तयैवासिधारया सैवासिधारा छिद्यते । तस्मादसाधना प्रमाणोपलब्धिः । तत्र च कुतः प्रमेयसाधनं प्रमाणं प्रमाणवदसाधनैवास्तु प्रमेयोपलब्धिरिति ।

३ सिद्धान्तं सूत्रेण कथयति ।

अयमत्र सिद्धान्तः —नासाधना प्रमाणसिद्धिर्नापि प्रत्यक्षादिव्यतिरिक्तप्रमाणाभ्युपगमः येन विभागसूत्रव्याघातः स्यात् । नापि च तयैव व्यक्त्या तस्या एव ग्रहणमुपेयते यतः सति वृत्तिविरोधः भवेत् । अपि तु प्रत्यक्षादिजातीयेन प्रत्यक्षादिजातीयस्य ग्रहणमातिष्ठामहे । न चानवस्थाऽस्ति । किञ्चित् प्रमाणं स्वज्ञानेन ज्ञापकं यथा धूमादि । किञ्चित् पुनरज्ञातमेव बुद्धिसाधनम्, यथा चक्षुरादि । तत्र धूम एव स्वज्ञाने ज्ञातसाधनम् । चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमिति का अनवस्था । पुरुषस्य

"प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः" ॥१७॥

"यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते, येन प्रमाणेनोपलभ्यन्ते तत् प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति । अनवस्थामाह तस्याप्यन्येन तस्याप्यन्येनेति । न चानवस्था शक्याऽनुज्ञातुमनुपपत्तेरिति" ॥ १७ ॥

अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति ?--

"तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः" ॥ १८ ॥

"यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते, आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात्" ॥ १८ ॥

एवं च सर्वप्रमाणविलोप इत्यत आह--

न । प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वात् दृश्यदर्शने प्रमाणम्, स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते । प्रदीपभावाभावयोर्दर्शनस्य तथाभावाद्दर्शनहेतुरनुमीयते । तमसि प्रदीपमुपादत्था इत्याप्तोपदेशेनापि प्रतिपद्यते । एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः । इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते । अर्थाः प्रत्यक्षतो गृह्यन्ते । इन्द्रियार्थसन्निकर्षास्त्वावरणेन लिङ्गेनानुमीयन्ते । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद्गृह्यते । एवं प्रमाणविशेषो विभज्य वचनीयः । यथा

च तदपि शब्दज्ञानम् । सा च कदाचिदेव क्वचिदिति नानवस्था । तस्मात्प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिरिति ।

१ सिद्धान्तमवतारयति एवमिति । न प्रदीपेत्यादि सिद्धान्तसूत्रम् ।

२ गृह्यत इति । ततश्च प्रत्यक्षगम्य इत्यर्थः ।

३ तथाभावादिति । भावाभावादन्वयव्यतिरेकादिति यावत् ।

४ अनुमीयत इति । ततश्च शब्दोऽनुमानगम्य इति भावः ।

५ प्रतिपद्यत इति । ततश्चाय शब्दप्रमाणगम्य इति भावः ।

६ इन्द्रियेति । सन्निकर्षप्रतिरोधकावरणाभावे प्रत्यक्षं जायते, तद्भावे च न जायते । एवं चावरणाभावेन सन्निकर्षानुमानम् । ततश्चावरणमेव स्वाभावद्वारा तत्र लिङ्गमिति भावः । अनुमानस्वरूपं च प्रत्यक्षमिन्द्रियार्थसन्निकर्षजं तादृशसन्निकर्षप्रतिरोधकावरणे सति तदभावादिति ।

च दृश्य सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्था लभते, एवं प्रमेयं सत्किञ्चिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्था लभते। सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो, न च प्रमाणमन्तरेण नि साधनेति।

"तेनैव तस्याग्रहणमिति" चेद्,—न अर्थभेदस्य लक्षणसामान्यात्। "प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम्। अन्येन ह्यन्यस्य ग्रहणं दृष्टमिति"। न, अर्थभेदस्य लक्षणसामान्यात्। प्रत्यक्षलक्षणेनानेकोऽर्थः सङ्गृहीतः। तत्र केनचित्कस्यचिद् ग्रहणमित्यदोषः। एवमनुमानादिष्वपीति। यथोद्धृतेनोदकेनाशयस्थस्य ग्रहणमिति।

ज्ञातृमनसोश्च दर्शनात्। अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते। 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (१, १ १६) इति च तेनैव मनसा तस्यैवानुमानं दृश्यते। ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राह्यस्य चाभेद इति।

---

१ दृश्यदर्शनेति। 'दृश्य'—दर्शनविषय—'दर्शन'—दर्शनकरणम्—इति वा व्यपदेशं लभत इत्यर्थः।

२ एवं प्रमेयमिति। किञ्चिद्वस्तु यदा ज्ञानस्य विषयस्तदा प्रमेयमिति यदा ज्ञानस्य हेतुः करणं तदा 'प्रमाणमिति' व्यपदेशं लभते।

३ अर्थभेदस्येति। तत्वतः प्रत्यक्षव्यक्तयो भिन्ना एव—केवलमिन्द्रियार्थसन्निकर्षजत्वादिसादृश्येन प्रत्यक्षमित्यनेन नाम्ना सङ्गृहीता व्यपदिष्टा भवन्ति। एवं च एकस्य प्रत्यक्षस्य प्रत्यक्षान्तरेण ग्रहणे न तस्यैव तेन ग्रहणम्भवति।

४ उद्धृतेनेति। जलाशयादुद्धृतेन जलेन जलाशयस्थस्य जलस्यानुमानम्। तत्र यद्यपि जलेनैव जलस्यानुमानं तथाऽपि न तत्त्वतस्तेनैव तद्ग्रहणम्।

५ ज्ञातृमनसोरिति। ज्ञाता ज्ञेय इति सकर्माभिप्रायम्। न ह्यन्यस्य समवेता ज्ञानक्रिया येनात्मनः कर्मता स्यात्, अपि तु ज्ञातुरेव। परसमवेतफलशालि हि कर्मेत्युक्तम्। तस्मात्सुखादीनामात्मधर्माणामत्र कर्मता आत्मनस्तु प्रकाशमानता। तत्र विवक्षया ज्ञेयत्वाभिधानम्। मनस्तु यद्यपि करणं कर्म स्वज्ञानं प्रति करणं च तथापि न स्वात्मनि वृत्तिविरोधः। यदि हि ज्ञानं करणं भवेत्तदाऽऽत्माश्रयदोषप्रसङ्गः। स्वसत्तया च ज्ञानं प्रति करणम्। अन्यच्च स्वं ज्ञानमन्या च सत्ता। न च तात्समवेता ज्ञानक्रिया क्रियाऽसमवेता। तस्मात्स्वयं ज्ञानसाधनत्वं च मनसो न दोषमर्हतीति हृदयम्।

६ ग्राह्यस्येत्यस्य स्थाने ग्राहकस्येति क्वाचित्कः पाठो न सम्यक्। अहं सुखीत्यादौ ज्ञातुर्ज्ञेयस्य चाभेदः। मनसोऽनुमाने च मन एव ग्रहणकरणम् ग्रहणविषयश्च। नत्वत्र ग्राहकस्य ज्ञातुः सम्भावना।

" निमित्तभेदोऽत्रेति " चेत्,–समानम् । " न निमित्तान्तरेण विना ज्ञाताऽऽत्मानं जानीते । न च निमित्तान्तरेण विना मनसा मनो गृह्यत इति । " समानमेतत् प्रत्यक्षादिभिः । प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो गृह्यत इति ।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः । यदि स्यात् किंचिदर्थजातं प्रत्यक्षादीनामविषयः—यत्प्रत्यक्षादिभिर्न शक्यं ग्रहीतुम्–तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत । तत्तु न शक्यं केनचिदुपपादयितुमिति । प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति[1] ॥ १९ ॥

[2]केचित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्यसाधनायोपाददते–"यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति "। स चायम्—

[3]क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः ॥ २० ॥

यथा चायं प्रसङ्गो[4] निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते

१ असच्चेति । असत प्रमाणविषयत्वमप्रदर्शितमुपोद्घातभाष्ये प्रथमसूत्रेऽसत्त्वादिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवतीति ॥ १९ ॥

२ केचित्त्वित्यादि आचार्यदेशीयानां मतम् । तद्यथा–प्रदीपप्रकाशो यथा न प्रकाशान्तरमपेक्षते एवम्प्रमाणान्यपि प्रमाणान्तरमनपेक्षमाणान्यपि सन्ति भविष्यन्तीति । 'विशेषहेतुमन्तरेण हेतुनाऽपरिगृहीतमेव दृष्टान्तं साध्यसाधनायोपाददते ' इति सम्बन्धः ।

३ न्यायसूचीनिबन्धे क्वचिदित्यादि सूत्रत्वेनाभ्युपगतम् । उक्ताचार्यदेशीयान् प्रत्युत्तरमिति चात्र वाचस्पतिमिश्रेण तात्पर्ये । अपरे तु हेतुविशेषपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते तान् प्रत्यादसुच्यत इति वार्तिकम् ।

सूत्रार्थस्तु– क्वचित् ' प्रदीपादौ प्रमाणान्तरस्य ' निवृत्तिदर्शनात् ' क्वचित् रूपादिप्रकाशकघटादौ प्रमाणान्तरस्य ' अनिवृत्तिदर्शनात् "— प्रमाणान्तरापेक्षादर्शनादिति यावत्—त्वदीय प्रकाशकत्वरूपो हेतुः ( प्रत्यक्षादयः प्रमाणान्तरनिरपेक्षाः प्रकाशकत्वादित्यत्रानुमाने )' अनैकान्त ' सव्यभिचार इत्यर्थः । तथा च प्रदीपदृष्टान्तेन यथा प्रमाणान्तरनिवृत्तिः साध्यते, तथैव घटदृष्टान्तेन प्रमाणान्तरसापेक्षत्वं किं न साध्यत इति ।

४ अयं प्रसङ्ग इति । प्रमाणान्तरानपेक्षत्वप्रसङ्ग इत्यर्थः । निवृत्तिदर्शनादिति-प्रमाणान्तरस्येति शेषः । प्रदीपे प्रदीपान्तरानपेक्षया प्रकाशकत्वदर्शनात् प्रमाणान्तरानपेक्षाण्येवानेकवत् प्रमाणानि भविष्यन्तीत्यमर्थमुपादीयते प्रसङ्गः ।

एवं[1] प्रमेयसाधनायाप्युपादेयोऽविशेषहेतुत्वात् । यथा च स्थाल्यादिरूपग्रहणे[2] प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते, एवं प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात् । सोऽयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन्पक्षे उपादेयो न प्रतिपक्षे इत्यनेकान्तः । एकस्मिंश्च पक्षे दृष्टान्त उपादेयो न प्रतिपक्षे दृष्टान्त इत्यनेकान्तो विशेषहेत्वभावादिति[3] । विशेषहेतुपरिग्रहे[4] सति उपसंहाराभ्यनुज्ञानात्प्रतिषेधः । विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन्पक्षे उपसंह्रियमाणो न शक्योऽननुज्ञातुम् । एवं च सत्यनेकान्त इत्ययं प्रतिषेधो न भवति ।

'प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति' चेत्, न । संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः । प्रत्यक्षेणार्थमुपलभे अनुमानेनार्थमुपलभे उपमानेनार्थमुपलभे आगमेनार्थमुपलभे इति प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति—संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते । सोऽयं तावत्येव निवर्तते । न चास्ति व्यवहारान्तरमनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति ॥ २० ॥

इति प्रमाणसामान्यपरीक्षाप्रकरणम् ॥

## ( ३ ) प्रत्यक्षपरीक्षाप्रकरणम् ।

सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते । तत्र —

“ प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्[5] ” ॥ २१ ॥

१ एवं प्रमेयेति । प्रमेयाण्यप्यनवस्थायां साध्यत्वेन यदवस्थमुपादेयं । तथा च प्रमाणाभाव इत्यर्थः ।

२ स्थाल्यादीति । प्रदीपदृष्टान्तोपादानेन प्रमाणानवस्थायां स्थाल्यादिदृष्टान्तोपादानेन च प्रमाणान्तरापेक्षत्वं प्रदर्शितम् ।

३ विशेषहेत्विति । विशेषहेतुपरिग्रहमन्तरेण केवलदृष्टान्तोपादानेऽनिष्टप्रसङ्गः इति सूत्रभाष्यप्रदर्शितस्तथा विशेषहेतुपरिग्रहे निष्टाभाव इत्याह भाष्यकारः ।

४ विशेषहेतुपरिग्रहे इत्यादि वाक्यं भाष्ये ऽ मूलग्रन्थे न स्वीकृतम् ।

५ प्रत्यक्षेति पूर्वपक्षसूत्रम् । एतत्सूत्रस्य लक्षणपदं कश्चित् व्यवच्छेदकपरं वर्णयन्ति । तन्न साधकं । लक्षणं हि असमग्रं सकलप्रत्यक्षव्यापकं वा स्यात् अतिव्याप्त्यव्याप्तिविनाभावनियामकप्रमाणान्तराभिधानात्मकं वा स्यात् । न च प्रकृते तदुभयमपि सम्भवति । यथाधुना सूत्रे लक्षणपदेन कारणाभिधानमत्र प्रतिभाति । अतो यथाप्रति भाति पूर्वपक्षव्याख्यानम् ।

" आत्ममनःसन्निकर्षो हि कारणान्तरं नोक्तमिति " ॥ २१ ॥

"[1]न चासंयुक्ते द्रव्ये संयोगजन्यस्य गुणस्योत्पत्तिरिति, ज्ञानोत्पत्तिदर्शनादात्ममनःसन्निकर्षः कारणम्। मनःसन्निकर्षानपेक्षस्य चेन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वे युगपदुत्पद्येरन् बुद्धय इति मनःसन्निकर्षोऽपि कारणम्। [2]तदिदं सूत्रं पुरस्तात्कृतभाष्यम्—

" [3]नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः " ॥ २२ ॥

" [4]आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते प्रत्यक्षमिन्द्रियार्थसन्निकर्षाभाववदिति ॥ २२ ॥

[5]सति चेन्द्रियार्थसन्निकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं [6]ब्रुवतो—

दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २३ ॥

[7]दिगादिषु सत्सु ज्ञानभावात्तान्यपि कारणानीति।

---

१ न चासंयुक्तेत्यादिभाष्यं नात्ममनसोरिति द्वाविंशसूत्रमपरिरिवेव व्याचष्ट इति तात्पर्यकाराः।

२ तदिदमिति। ' इदम् ' अग्रिमं द्वाविंशं सूत्रं ' पुरस्तात् ' सूत्रपाठात् प्रागेव ' कृतम् ' उपन्यस्तं भाष्यं 'नचासंयुक्त'–इत्यादिरूपं यस्य तदेवरूपमित्यन्वयः। द्वाविंशस्य सूत्रस्य भाष्यं सूत्रपाठात् प्रागेवोपन्यस्तमिति भावः।

३ नात्ममनसोरिति पूर्वपक्षसूत्रं, तदुपपादकतया भाष्यकारेण व्याख्यातत्वात्। अस्य सिद्धान्तसूत्रत्वे ज्ञानलिङ्गत्वादिति त्रयोविंशं सूत्रं तदर्थानुवादेनेति चतुर्विंशं चानर्थकमापद्येत, पूर्वेणैव गतार्थत्वादिति परिशुद्धौ स्पष्टम्।

४ आत्ममनसोः सन्निकर्षाभावे यतः प्रत्यक्षं नोत्पद्यते ततः एतत्सन्निकर्षस्य सन्निवेशः प्रत्यक्षलक्षणसूत्रे आवश्यक इति सूत्रार्थः।

५ तदेव सूत्राभ्यां पूर्वपक्षिते सति–भावमात्रेणेन्द्रियसन्निकर्षादीनामेतं कारणत्वमुक्तमिति मन्वानः पार्श्वस्थः प्रत्यवतिष्ठते सिद्धान्तिनं पूर्वपक्षिणं च प्रति–सति–चेत्यादि कारणानीत्यन्तेन। पार्श्वस्थस्यैवेयमुक्तिर्न पूर्वपक्षिणो नापि सिद्धान्तिनः। यदि पूर्वपक्षिण उक्तिस्तदाऽऽत्ममनस्सन्निकर्षादेरकारणत्वव्युत्पादनेनात्ममनःपूर्वपक्षस्य विरोधः। यदि सिद्धान्तिन उक्तिस्तदाऽपसिद्धान्तः।

६ ब्रुवतः—सिद्धान्तिनः पूर्वपक्षिणश्च–दिगादिष्वप्येवं प्रसङ्ग इति सूत्रेणान्वयः।

७ दिगादिष्विति। न सति भावमात्रेण कारणत्वम्। तथा सत्याकाशादीनामपि कारणत्वप्रसङ्गः। पूर्वपक्ष्युपन्यस्तात्ममनस्संयोगे सिद्धान्त्युपन्यस्तेन्द्रियादिसंयोगे च कारणत्वं सति भावमात्रेणोपन्यस्तम्। अतो नैतयोरपि कारणत्वं युक्तमिति पार्श्वस्थस्य हृदयम्।

[1]अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसन्निधेरवर्जनीयत्वात्। यद्यप्यकारणं दिगादीनि ज्ञानोत्पत्तौ, तदापि सत्सु दिगादिषु ज्ञानेन भवितव्यम्। न हि दिगादीनां सन्निधिः शक्यः परिवर्जयितुमिति। तत्र कारणभावे [2]हेतुवचनम्। एतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति ॥ २३ ॥

"[3]आत्ममनःसन्निकर्षस्तर्ह्युपसङ्ख्येयः" इति ?

त[4]त्रेदमुच्यते—

ज्ञानलिङ्गत्वादात्मनो [5]नानवरोधः ॥ २४ ॥

ज्ञानमात्मलिङ्गं [6]तद्गुणत्वात्। न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥ २४ ॥

---

१ अकारणभाव इति पार्श्वस्थाक्तः परिहारः। नान्वयमात्रात्कारणत्वनिश्चयोऽपि त्वन्वयव्यतिरेकाभ्याम्। दिगादिषु नित्यविभुषु व्यतिरेकासम्भवान्नैतेषां कारणत्वम्। सन्निद्रियशरीरवर्त्यात्ममनस्संयोगस्य त्वन्वयव्यतिरेकावधारितसामर्थ्यस्य तस्य प्रत्यक्षाद्यनुत्पादादिति परिहारार्थः।

२ हेतुवचनमिति आवश्यकमिति शेषः। दिगादीनां कारणत्वाभ्युपगमे हेतुर्भवता पार्श्वस्थेन वक्तव्य इत्यर्थः।

३ पार्श्वस्थे निरस्ते पूर्वपक्ष्याह आत्मेति। यदि भावमात्रेण न कारणत्वम्, यदि चात्ममनःसन्निकर्षस्य कारणत्वं दिगाद्यपेक्षया स्पष्टतरं तर्ह्यात्ममनःसन्निकर्षः प्रत्यक्षलक्षण उपसङ्ख्येयः निवेशयितव्य इत्यर्थः। विवरणकारमतेन तु यदि भावमात्रेण न कारणत्वं तर्ह्यात्ममनःसन्निकर्षोऽपि उपसङ्ख्येयः त्याज्य इत्यर्थः।

आत्ममनःसन्निकर्ष इत्यादिभाष्यग्रन्थमारभ्य प्रत्यक्षेत्यादिषड्विंशसूत्रपर्यन्तग्रन्थस्य व्याख्याने मतभेद उपलभ्यते। विवरणकारमतेन आत्मेत्यादिवाक्यस्य तात्पर्यं 'आत्ममनःसन्निकर्षोऽपि त्याज्यः' इति। अनयोस्तर्हि चतुर्विंशपञ्चविंशसूत्रयोः प्रदत्तम्। तत्र पुनः पूर्वपक्षिणः प्रश्नः—एवं तर्हि आत्ममनःसन्निकर्षस्यापि सन्निकर्षावश्यकत्वेऽपि प्रत्यक्षलक्षणसूत्रे कथं नोक्त इति। अस्योत्तरे षड्विंशं सूत्रम्।

४ तत्रेति। आत्मेत्यादिपूर्वपक्षात् समाधानमिदं ज्ञानेत्यादि सूत्रमुच्यते इति सम्बन्धः।

५ नानवरोध इति न्यायसूचीनिबन्धधृतः पाठः। नावरोध इति बहुषु पुस्तकेषु दृष्टः। उभयथाऽपि 'नासमहः' इत्येवार्थः पर्यवस्यति। नानवरोध इति विवरणसम्मतः पाठः, 'नान्यथासिद्धत्वमिति' च तस्यार्थः।

६ तद्गुणत्वादिति। यस्मादात्माश्रितमेव ज्ञानं सिध्यति तस्मादात्मनि ज्ञानं लिङ्गमिति भावार्थः।

इन्द्रियार्थसन्निकर्षस्य ग्रहणं, नात्ममनसोः सन्निकर्षस्येति । एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते । यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतः तदा प्रसुप्तस्येन्द्रियसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते । तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति, किं तर्हि, इन्द्रियार्थयोः सन्निकर्षस्य । न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति ।

एकदा खल्वयं विषयान्तरासक्तमनाः सङ्कल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद्विषयान्तरं जानीते । यदा तु खल्वस्य निःसङ्कल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनात् ज्ञानमुत्पद्यते तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यम् । न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति ।

प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यं, गुणत्वात्, नात्ममनसोः सन्निकर्षस्येति ॥ २७ ॥

प्राधान्ये च हेत्वन्तरम्—

**तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २८ ॥**

तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः । 'कथम्'?

ज्ञानस्य सन्निकर्षनिमित्तत्वात् 'इन्द्रियार्थसन्निकर्षस्य ग्रहणं' (प्रत्यक्षलक्षणसूत्रे) इति भाष्यग्रन्थेन सम्बन्धः ।

१ सुप्तमनसामिति सप्तम्या विशेषणं व्याचष्टे एकदेति । एतत् साधारणानुभवं परामृशति—यदा त्वित्यादि त्वनुभवविशेषं सूत्रकाराभिप्रेतमिति बोध्यम् ।

२ प्रणिधायेति । सङ्कल्प्येत्यर्थः । प्रदाये सुप्तोऽर्धरात्रे मयोत्थातव्यमिति मनसि निधाय यथार्धरात्रे प्रबुध्यते तदाऽऽत्मैव मनस्सन्निकर्षोऽवबोधज्ञानकारणम् । यदा तु तीव्रध्वनिस्पर्शाभ्यामकस्मादेवावबुध्यते तत्रावबोधज्ञाने नास्ति कोऽपि मनस्सन्निकर्षस्य व्यापार इति विवेकः ।

३ प्रबोधज्ञानमिति । 'प्रबोधे' निद्राविच्छेदे 'ज्ञानं' ध्वन्यादिस्पर्शस्येत्यर्थः ।

४ सुप्तमनसामिति व्याख्याय व्यासक्तमनसामिति व्याचष्टे एकदेति । एतदपि साधारणानुभवं परामृशति ।

५ ज्ञानात् इति । अत्र च स्पष्टो मनस्सन्निकर्षस्य व्यापारः ।

६ मनो न प्रेरयतीति—ततश्च नात्र मनस्सन्निकर्षस्य कोऽपि व्यापार इत्यर्थः ।

७ गुणत्वादिति । अप्राधान्यादित्यर्थः ।

८ प्राधान्य इति । इन्द्रियार्थसन्निकर्षस्येत्यर्थः ।

घ्राणेन जिघ्रति, चक्षुषा पश्यति, रसनया रसयतीति, घ्राणविज्ञानं चक्षुर्विज्ञानं रसनविज्ञानं गन्धविज्ञानं रूपविज्ञानं रसविज्ञानमिति च—इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति । अतः प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति ॥ २८ ॥

"यदुक्तमिन्द्रियार्थसन्निकर्षग्रहणं कार्यम्, नात्ममनसोः सन्निकर्षस्येति, कस्मात्? सुप्तव्यासक्तमनसामिन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वादिति। सोऽयम्–

"व्याहतत्वादहेतुः ॥ २९ ॥

'यदि तावत् क्वचिदात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते, तदा युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति' व्याहन्येत। नेदानीं मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षोऽपेक्षते। मनःसंयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्वविज्ञानानामात्ममनसोः सन्निकर्षः कारणमिष्यते, तदवस्थमेवेदं भवति–ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्यमिति ॥ २९ ॥

न–अर्थविशेषप्राबल्यात् ॥ ३० ॥

नास्ति व्याघातः। न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमुपादीयते। अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः। तस्य प्राबल्यं तीव्रतापटुते। तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं नात्ममनसोः सन्निकर्षविषयम्। तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति।

—

१ इन्द्रियविषयेति। इन्द्रियसङ्ख्यानुरोधादेव ज्ञानस्य पञ्चविधत्वमित्यर्थः।

२ पूर्वं सूत्रत्रयेणेन्द्रियार्थसन्निकर्ष एव कारणं ज्ञानस्य, न त्वात्ममनसस्सन्निकर्षः इन्द्रियमनस्सन्निकर्षो वेत्युक्तं सिद्धान्तिनेति मन्वानः पूर्वपक्षी व्याहतत्वादित्याक्षेपसूत्रमवतारयंश्चाह यदुक्तमिति।

३ ग्रहणमिति। प्रत्यक्षलक्षणसूत्रे सन्निवेश इत्यर्थः।

४ नार्थेत्यादि सिद्धान्तसूत्रम्।

५ न ह्यात्मेति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमात्रमुच्यते नचात्ममनस्संयोगस्येन्द्रियमनस्संयोगस्य वा कारणत्वं प्रतिषिध्यते। अतो न व्याघात इत्यर्थः।

"असति प्रणिधाने सङ्कल्पे चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगोऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति"।

यथैव ज्ञातुः खल्वयमिच्छाजनितः प्रयत्नो मनसः प्रेरक आत्मगुणः एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति, येन प्रेरितं मन इन्द्रियेण सम्बध्यते। तेन ह्यप्रेर्यमाणे मनसि संयोगाभावाज्ज्ञानानुत्पत्तौ सर्वार्थताऽस्य निवर्तते। एषितव्यं चास्य गुणान्तरस्य द्रव्यगुणकर्मकारणत्वम्। अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसम्भवाच्छरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥ ३० ॥

इति प्रत्यक्षलक्षणपरीक्षा

## ( ४ ) प्रत्यक्षानुमानत्वपरीक्षाप्रकरणम्।

"प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः" ॥ ३१ ॥

---

१ पूर्वपक्षी पृच्छति असतीति। यत्र प्रयत्नादि मनःप्रेरकं वर्तते तत्र मनोव्यापारः सुवचः। यत्र तु सुप्तव्यासक्तमनसां ज्ञानेषु प्रयत्नादिकं मनःप्रेरकं नास्ति तत्र मनोव्यापारस्य किं कारणमिति प्रश्नार्थः।

२ गुणान्तरमिति। अदृष्टमिति यावत्।

३ संयोगाभावादिति। अन्यस्य क्रियाहेतोरभावादित्यर्थः।

नागाऽदृष्टस्य प्रधानं प्रयोजनं तद्भोगान्तरायकतया जन्मायुषी आक्षिपति। स्वसम्बन्धिसुखदुःखसाक्षात्कारश्च भोगः। तदायतनं च शरीरम्। अप्राप्तं च मनो न शरीरे भोगं वा भोगविषयौ सुखदुःखे वा तयोः कारणं ज्ञानं वा जनयितुमर्हति। अतो नूनं तत्प्राप्तिहेतोर्मनःकर्मणः कारणमदृष्टमेव वक्तव्यम्। अन्यथाऽस्य सर्वद्रव्यगुणकर्मकारणता न स्यात्।

४ सर्वार्थतेति। सर्वद्रव्यगुणकर्मकारणतेत्यर्थः।

५ ननु माभूत्सर्वार्थतेत्यत आह एषितव्यमिति।

६ भूतसूक्ष्माणामित्यणूनां विशेषणम्।

७ तत इति। अदृष्टादित्यर्थः।

—

पयत परीक्ष्यते।

उपलब्ध अवयविनो वृक्षस्य उपलब्धिरिति भावः।    उपलभ्यमानावयवभागस्य ग्रहणात्'    इत्युक्तं पूर्वपक्षसूत्रम्    इन्द्रियसन्निकर्षा

अयमत्र पूर्वपक्षसङ्क्षेपः। न ह्यवयवी नाम कश्चिदर्थान्तरभूतोऽवयवेभ्योऽस्ति, अपि त्ववयवा एव परमार्थसन्तः। तेषु च कतिपयानवयवान् गृहीत्वा तत्सहचरि-

'यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इति, एतत् किल प्रत्यक्षं[1], तत् खल्वनुमानमेव । कस्मात् ? एकदेशग्रहणात् वृक्षस्योपलब्धेः । अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते । न चैकदेशो वृक्षः । तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति" ॥

[2]किं पुनर्गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे ?

[3]अवयवसमूहपक्षे अवयवान्तराणि, द्रव्यान्तरोत्पत्तिपक्षे तानि चावयवी चेति "।

[4]अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः । नागृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशवदिति । [5]अथ "एकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः –" [6]न तर्हि वृक्षबुद्धिरनुमानमेव सति भवितुमर्हतीति । [7]द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयोऽवयवैकदेशसम्बद्धस्याग्रहणात्

---

तानवयवाननुमाय प्रतिसन्धानेनैव वृक्षबुद्धिः । तानवयवानवयविनानुमाय अनुमानमिति प्रत्यक्षस्यानुमानेऽन्तर्भावात् विभागसूत्रेण न्यूनाधिकसङ्ख्याव्यवच्छेदो नोपपद्यत इति ।

१ प्रत्यक्षमिति । सिद्धान्त्यभिमतमिति यावत् ।

२ सिद्धान्ती पृच्छति किं पुनरिति ।

३ पूर्वपक्षी प्रत्युत्तरयति अवयवेति । द्विधा चात्र प्रतिपत्तिः । अवयवसमूह एवावयवी नावयवेभ्योऽर्थान्तरमिति पक्षे दृष्टेभ्योऽवयवेभ्योऽन्येऽवयवा अनुमीयन्ते । अवयवेभ्योऽर्थान्तरमेवोत्पद्यते कश्चिदवयवी नामेति पक्षे दृष्टेभ्योऽवयवेभ्योऽन्येऽवयवा अवयवी चानुमीयन्त इति ।

४ प्रथमं पक्षं दूषयन्नाह सिद्धान्ती अवयवेति । यथैव प्रत्यक्षदृष्टोऽर्वाग्भागो न 'वृक्षः' एवमनुमितो परभागोऽपि न 'वृक्षः' । ततश्च 'वृक्षोऽयमिति बुद्धेः' लोप एवेति भावः ।

५ पूर्वपक्षिणोऽभिप्रायान्तरं प्रकटयति । अथेति । कतिपयानवयवान् गृहीत्वा तत्सहचरितानवयवाननुमाय प्रतिसन्धानेन बुद्धिरियं वृक्ष इति—इति पूर्वपक्षिणोऽभिप्रायः ।

६ उक्तमभिप्रायं दूषयति न तर्हीति । त्वदुक्तानुसारेणावयवान्तराण्येवानुमितानि न वृक्ष इति । तथा च प्रतिज्ञाहानिरिति भावः ।

७ द्वितीयं पक्षं दूषयति द्रव्यान्तरेति । अवयवी यद्यनुमेयस्तर्हि तेन सहावयवानां व्याप्तिसम्बन्धग्रहणमवश्यं स्वीकरणीयम् । न च सम्बन्धिद्वयाग्रहणमन्तरेण सम्बन्धग्रहणं सम्भवति । तथा चास्य व्याप्तिग्रहणकालेऽवयव्यपि गृहीतः स्यात् इत्यभ्युपगन्तव्यम् । तादृशे चाभ्युपगमेऽवयविनः प्रत्यक्षग्रहणमभ्युपेतमेव स्यात् । ततश्च तस्य नानुमेयत्वमिति हृदयम् ।

ग्रहणे चाविशेषादनुमेयत्वाभावः । तस्माद् वृक्षबुद्धिरनुमानं न भवति ॥३१॥

एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते । तच्च–

न, प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३२ ॥

न प्रत्यक्षमनुमानम् । कस्मात् ? प्रत्यक्षेणैवोपलम्भात् । यत् तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः । न चोपलम्भो निर्विषयोऽस्ति । यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं भवति ।

" किं पुनस्ततोऽन्यदर्थजातम् " ।

अवयवी समुदायो वा । न चैकदेशग्रहणमनुमानं भावयितुं शक्यं हेत्वभावादिति ।

अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः । तत्पूर्वकत्वात् । प्रत्यक्षपूर्वकमनुमानम् । सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति । *तत्र यच्च सम्बद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं, यच्च लिङ्गमात्रप्रत्यक्षग्रहणं*, नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति । न त्वेतदनुमानम्, इन्द्रियार्थसन्निकर्षजत्वात् । न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति । सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति ॥ ३२ ॥

न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३३ ॥

न चैकदेशोपलब्धिमात्रम् । किं तर्हि, एकदेशोपलब्धिस्तत्सहचरितावयव्युपलब्धिश्च । कस्मात् ? अवयविसद्भावात् । अस्ति ह्ययमेकदेशव्यतिरिक्तोऽव

१ [illegible]

२ [illegible]

३ [illegible]

४ [illegible]

५ [illegible]

६ [illegible]

यवी। तस्या[1]वयवस्थानस्योपलब्धिकारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्ने[2]ति।

"अ[3]कृत्स्नग्रहणादिति चेन्" न[4], कारणतोऽन्यस्यैकदेशस्याभावात्। 'न[5] चावयवाः कृत्स्ना गृह्यन्ते अवयवैरेवावयवान्तरव्यवधानाद्, नावयवी कृत्स्नो गृह्यत इति। नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति। सेयमेकदेशोपलब्धिरनिवृत्तेति"।

कृ[6]त्स्नमिति वै खल्वशेषतायां सत्यां भवति, अकृत्स्नमिति शेषे सति। त[7]च्चैतदवयवेषु बहुष्वस्ति, अव्यवधाने ग्रहणाद् व्यवधाने चाग्रहणादिति।

अङ्ग तु भवान् पृष्टो व्याचष्टाम्—गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे, 'ये[8]नैकदेशोपलब्धिः स्यादिति। न ह्यस्य का[9]रणेभ्योऽन्ये एकदेशा भवन्तीति त[10]त्रावयववृत्तं नोपपद्यत इति। इदं तस्य वृत्तम्—येषामिन्द्रियसन्निकर्षाद्ग्रहणमव

---

अवयविनोऽसत्त्वं मन्यमानेन पूर्वपक्षिणा एकदेशोपलब्ध्या वृक्षबुद्धेरनुमानत्वमुक्तम्। न त्वियमेकदेशमात्रोपलब्धिरपि तु तस्य तत्सहचरितस्य चावयविन, उपलब्धिलक्षणप्राप्तस्य तस्य सिद्धेरिति सूत्रार्थः।

१ अवयवस्थानस्येति अवयवसमानदेशस्येति यावत्।

२ अनुपपन्नेति। महदनेकद्रव्यरूपाण्युपलब्धिकारणानि। तान्येकदेशवदेकदेशिन्यवयविन्यपि विद्यन्ते। तस्मादेकदेश उपलभ्यते नैकदेशीत्ययुक्तमिति हृदयम्।

३ आक्षेपभाष्यम्—अकृत्स्नेति।

४ उत्तरभाष्यम्—न कारणत इति। 'कारणतः' समवायिकारणत इत्यर्थः।

५ आक्षेपभाष्यविवरणम्—नचावयवा इति। एकदेशग्रहणनिवृत्त्यर्थं हि त्वयाऽवयविग्रहणमाश्रीयते। न चैतावता कृत्स्नग्रहणसम्भवो यत एकदेशनिवृत्तिः स्यात्। न ह्यवयविग्रहणे कृत्स्ना अवयवा गृहीता भवन्ति। नाप्यवयवी गृहीतो भवति, तस्यार्वाग्भागस्थस्य ग्रहणेऽपि मध्यमपरभागस्थस्याग्रहणादित्याक्षेपभाष्यार्थः।

६ उत्तरभाष्यविवरणम् कृत्स्नमिति। कृत्स्नमित्यनेकस्याशेषस्याभिधानमेकदेश इति चानेकत्वे सति कस्यचिदभिधानमिति वार्तिकम्।

७ तच्चैतदित्यवयविनं परामृशति।

८ येनेति। येनाग्रहणेन प्रत्यक्षमेवैकदेशस्यैवाभ्युपगतं स्यान्नावयविन इत्यर्थः। अस्येति। अवयविन इत्यर्थः।

९ कारणेभ्य इति। समवायिकारणभूतेभ्योऽवयवेभ्योऽन्यत् किमप्येकदेशपदवाच्यं नास्तीत्यर्थः।

१० तत्रेति। अवयविन्यवयवस्वभाव आरोपयितुं न युक्त इत्यर्थः।

यवाना ते सह गृह्यते, येषामवयवाना व्यवधानादग्रहण ते सह न गृह्यते । न[1] चैतत्कृतोऽस्ति भेद इति ।

समु[2]दायोऽशेषता वा । समुदायो वृक्ष स्यात् तत्प्राप्तिर्वा, उभयथा ग्रह[3]णाभाव । मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात् प्राप्तिर्वा समुदायिनामिति । उभयथा समुदायभूतस्य वृक्षस्य ग्रहण नोपपद्यत इति । अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहण नोपपद्यते । प्राप्तिग्रहणमपि नोपपद्यते प्राप्तिमतामग्रहणात् ।

[4]सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदायमात्रे इति ॥ ३३ ॥

( ४ ) अवयविपरीक्षाप्रकरणम् प्रासङ्गिकम् ॥

" सा[5]ध्यत्वादवयविनि सन्देहः " ॥ ३४ ॥

" यदुक्तमवयविसद्भावात् इति, अयमहेतु —साध्यत्वात् । साध्य तावदेतत्कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति ।

अ[6]नुपपादितमेतत् । एव च सति विप्रतिपत्तिमात्र भवति । विप्रतिपत्तेश्चावयविनि सशय इति " ॥ ३४ ॥

---

१ नचेति । अर्वाग्भागस्थस्यावयविन उपलब्धावपि परमध्यभागस्थस्य नोपलब्धिरिति पूर्वपक्षोद्भावित निराकरोति । एकभागस्थैरवयवैस्सहावयवी गृह्यतः परभागस्थैश्च सह न गृह्यत इत्येतावन्मात्रेण न नानावयविसिद्धि ।

२ य पुनर्मन्यतेऽवयवसमुदाय एवावयवीति त प्रत्याह समुदायेति ।

३ ग्रहणाभाव इति—अवयवी नाम न कश्चित्स्यादिति शेष ।

४ सेयमिति । अवयवी नाम द्रव्यान्तर नावयवसमुदायमात्रमित्येतत्पक्ष एवोक्ता बुद्धि सम्भवति नान्यथेत्यर्थ ।

५ साध्यत्वादिति पूर्वपक्षसूत्रम् । पर प्रत्यसिद्धत्वमेवावयविन 'साध्यत्वम्' । स खल्वेव मेने—' सविन्निष्ठा हि विषयव्यवस्थिति । स एव सविदा व्यवस्थाप्यते यस्तस्या विषय । स एव तस्या विषयो यस्तस्यामाकारमर्पयति । न च निरन्तरोत्पन्न रूपादिपरमाण्वतिरिक्तमवयव्याकार बिभ्रता सविदमीक्षामहे, किन्तु निरन्तरोत्पन्न रूपादिपरमाण्वाकाराम् । स्थौल्य च यद्यपि न परमाणूना प्रत्येकमस्ति तथाऽपि प्रतिभासधर्म बहुत्वादिवत् न पुनरवयविनमेकमवस्थापयितुमर्हति " इति । तमेवमानिन प्रत्यवयविनोऽसिद्धविप्रतिपत्ति । तत साधकबाधकप्रमाणाभावे सति सशय इति सूत्रार्थ ।

६ अनुपपादितमिति—असिद्धमित्यर्थ ।

"सङ्ग्रहकारिते वै धारणाकर्षणे। सङ्ग्रहो नाम संयोगसहचरित गुणान्तरं स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भे, अग्निसंयोगात्पक्वे। यदि त्ववयविकारिते अभविष्यतां पांशुराशिप्रभृतिष्वप्यज्ञास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसङ्गृहीतेष्वपि नाभविष्यतामिति।"

"अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति?"

"एकमिदं द्रव्यमित्येकबुद्धेर्विषयं पर्यनुयोज्यः। किमेकबुद्धिरभिन्नार्थविषयेति आहो स्विन् भिन्नार्थविषयेति? अभिन्नार्थविषयेति चेद्, —अर्थान्तरानुज्ञाना-दवयविसिद्धिः। नानार्थविषयेति चेद्, —भिन्नेष्वेकदर्शनानुपपत्तिः। अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ॥ ३६ ॥

## सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३७ ॥

"यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिः, एवमणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति"।

---

१ पूर्वपक्षी सूत्रोक्तं हेतुं दूषयति सङ्ग्रहकारिते इत्यादि नाभविष्यतामित्यन्तम्। पांशुराशावपि सिद्धान्तानुसारेणावयविनः सद्भावात् तत्रापि धारणाकर्षणे स्याताम्। जतुसङ्गृहीतेषु च तृणोपलकाष्ठादिपूपलभ्येते धारणाकर्षणे, न च तत्रावयवी द्रव्यान्तरभूत उत्पद्यते सिद्धान्तानुसारेणापि। एवं चोभयथापि धारणाकर्षणाभ्याञ्चावयविसिद्धिरिति पूर्वपक्षमङ्क्षेपः।

२ सिद्धान्त्याचार्येणानुक्त एव परिहारे पूर्वपक्षयुक्तिभिर्विचलितहृदयः शिष्यः पृच्छति अथावयविनमिति। योऽयं पूर्वपक्ष्यवयविनं प्रतिषेधयन्नणुसञ्चयमेव च प्रत्यक्षविषयत्वेन स्वीकरोति तमेवंभूतं प्रति का हेतुरुपन्यसितव्य इति प्रश्नार्थः।

३ आचार्यः शिष्यप्रश्नोत्तरव्याजेन पूर्वपक्षं परिहरति एकमिति। एकमिदं द्रव्यमित्यस्या बुद्धेः को विषय इति स प्रष्टव्य इत्यर्थः।

४ अभिन्नार्थेति—नानेकार्थविषयेति यावत्। अस्या एकबुद्धेः किमेक एव विषय उत नाना? एकश्चेत् स एवावयवीति सिद्धं नः समाहितम्। नाना चेत् पूर्वपक्षिणो व्याघातः।

५ अगृह्यमाणेति—सामान्यतो दृश्यानामपि दूरत्वाद्यनेककारणवशात् कचिद्-दर्शनमिति भावः।

यथा गृह्यमाणपृथक्त्वानां सेनावनाङ्गानामारात्कारणान्तरतः पृथक्त्वस्याग्रहणं, यथा गृह्यमाणजातीनां पलाश इति वा खदिर इति वा नारात्जातिग्रहणं भवति, यथा गृह्यमाणप्रस्पन्दानां नारात् स्पन्दग्रहणं, गृह्यमाणे चार्थजाते पृथक्त्वस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति । न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद्भाक्त एकप्रत्ययोऽतीन्द्रियत्वादणूनामिति ।

इदमेव च परीक्ष्यते—किमेकप्रत्ययोऽणुसञ्चयविषय आहोस्विन्नेति । अणुसञ्चय एव सेनावनाङ्गानि । न च परीक्ष्यमाणमुदाहरणमिति युक्तं, साध्यत्वादिति ।

दृष्टमिति चेन्न । तद्विषयस्य परीक्षोपपत्तेः । यदपि मन्यते "दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणं, न च दृष्टं शक्यं प्रत्याख्यातुमिति ।" तच्च नैवम्, तद्विषयस्य परीक्षोपपत्तेः । दर्शनविषय एवायं परीक्ष्यते। योऽयमेकमिति प्रत्ययो दृश्यते स परीक्ष्यते । किं द्रव्यान्तरविषयो वा अथाणुसञ्चयविषय इति । अत्र दर्शनमन्यतरस्य साधकं न भवति । नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् अतस्मिंस्तदिति प्रत्ययः यथा स्थाणौ पुरुष इति । ततः किम् ? अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः ।

"स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम् ?"

योऽसौ पुरुषे पुरुषप्रत्ययस्तस्मिन्सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति । एवं नानाभूतेष्वेकमिति सामान्यग्रहणात् प्रधाने सति भवि-

१ गृह्यमाण इति । यत्र सामान्यतो दृश्यानामर्थानां पृथक्त्वञ्च दृश्यते तत्र पृथक्त्वादर्शनादेकबुद्धिर्या जायते सा भाक्तीत्यर्थः । अणूनां त्वदृश्यत्वान्न तत्र तादृशभाक्तप्रत्ययस्यावकाशः ।

२ इदमिति । सर्वत्रावयविनमपह्नुवानस्यातीन्द्रियं वाऽणुसञ्चयमात्रमिच्छतः सेनावनाङ्गानामपि करिकुञ्जरादीनामतीन्द्रियाणुसञ्चयमात्रत्वात् दृष्टान्ताभाव इति तात्पर्यार्थः ।

३ साध्यत्वादिति साध्यसमत्वादित्यर्थः ।

४ तद्विषयस्येति । प्रत्यक्षविषयस्यैव परीक्ष्यमाणत्वाच्च प्रत्यक्षमेव साधनबाधनकार्ये प्रवेशमर्हति ।

५ प्रधानेति । यद्विषयं यथार्थज्ञानं तद्विषयमेव मिथ्याज्ञानमपि सम्भवति । यथार्थज्ञानमेव मिथ्याज्ञानस्य प्रधानमित्यत्रोच्यते । तथाच यथा पुरुषे पुरुषबुद्धेः सत्या असत्याया स्थाणौ पुरुषबुद्धेः प्रधानम् । एवं अनेकविषयेष्वेकमिति मिथ्याज्ञानस्य कुत्राप्येकविषये एकबुद्ध्या सत्यया भवितव्यम् ।

तुमर्हति । प्रधान च सर्वस्याग्रहणादिति नोपपद्यते। तस्मादभिन्न एवायमभेद-प्रत्यय एकमिति ।

"इन्द्रियान्तरविषयेष्वभेदप्रत्यय प्रधानमिति" चेद्—न विशेषहेत्व-भावाद् दृष्टान्ताव्यवस्था । श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्यय प्रधानमनेकस्मिन्नेकप्रत्ययस्येति । एव च सति [1]दृष्टान्तोपादान न व्यवतिष्ठते, विशेषहेत्वभावात् । अणुषु सञ्चितेष्वेकप्रत्यय किमतस्मिंस्तदिति प्रत्यय स्थाणौ पुरुषप्रत्ययवत्? अथार्थस्य तथाभावात्तस्मिंस्तदिति प्रत्ययो यथा शब्दस्यैकत्वादेक शब्द इति? । विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तो सशयमापादयत इति । [2]कुम्भवत्सञ्चयमात्र गन्धादयोऽपीत्यनुदाहरण गन्धादय इति ।

[3]एव परिमाणसंयोगस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्य । तेषु चेव प्रसङ्ग इति ।

[4]एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात् । एकमिद महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवत । तेन विज्ञायते यन्महत्तदेकमिति ।

'अणुसमूहातिशयग्रहणे महत्प्रत्यय" इति चेत्—सोऽयममहत्स्व-णुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति । "किञ्चात ?"

अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति भवितव्य महत्यैव महत्प्रत्ययेनेति ।

---

१ दृष्टान्तोपादानमिति । दृष्टान्तमात्रोपन्यासेन न किञ्चित्सिध्यतीत्यर्थ ।

२ कुम्भवदिति । यांश्च शब्दादीन् प्रधानप्रत्ययनिमित्तत्वेन भवान् प्रतिपद्यते तेऽपि सञ्चिता एव। वैभासिका खलु भूतभौतिकसमूहात् घटादपि उत्पन्नान् शब्दादीन् इच्छन्ति । अतस्तेषा मते शब्दादयोऽपि सञ्चिता एव। अपि चास्मन्मतेऽपि शब्दादीनां न मुख्यमेकत्वम् सङ्ख्याया गुणस्य गुणेषु शब्दादिष्वप्येकत्वप्रत्ययो भाक्त एवेति हृदयम् । भाक्तत्वेऽप्यस्यैकत्वप्रत्ययस्य क्वचित्सत्यत्वम्—यत्र न कोऽपि बाधकप्रत्यय उदेति, क्वचिन्मिथ्यात्व—यत्र बाधप्रत्ययस्योदय इति विवेक ।

३ एवमिति । भवश्चैव प्रत्याचक्षाणक एव पर्यनुयोक्तव्य इत्यन्वय । यथैवैक-त्विनमर्थान्तर न प्रतिपद्यसे 'महत्' इति 'सयुक्त' इति 'अश्वो गच्छतीति' वा प्रत्यया न प्राप्नुवन्ति । नह्यतीन्द्रियेषु परमाणुषु ते प्रत्यया युज्यन्त इत्यर्थ ।

४ उक्तेषु परिमाणस्पन्दजातिविशेषेषु चतुर्षु परिमाण परामृशति एकत्वेत्यादिना।

"अणु शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति" चेद्—न, मन्दतीव्रताग्रहणमियत्ता[2]नवधारणाद् यथा द्रव्ये । अणु शब्दोऽल्पो मन्द इत्येतस्य ग्रहणं महान् शब्दः पटुस्तीव्र इत्येतस्य ग्रहणं कस्मात् ? इयत्तानवधारणात् । न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति । यथा बदरामलकबिल्वादीनि ।

[3]संयुक्ते इमे इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम् ।

"[4]द्वौ समुदायावाश्रयः संयोगस्येति" चेत्—कोऽयं समुदायः ?

"प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदाय इति चेत्" [6]प्राप्तेरग्रहणं प्राप्त्याश्रितायाः । संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते ।

---

१ अणु शब्द इति । अणु शब्दो महानित्यत्राणुत्वमहत्त्वयोः सामानाधिकरण्यं लक्ष्यते । इदमेव च प्रधानं भविष्यति परमाणौ महत्प्रत्ययस्येत्यर्थः ।

२ इयत्तेति । प्रत्यक्षपरिमाणविषयमियत्तावधारणम् । नच तत्सम्भवति शब्देऽणौ वा ।

३ संयुक्त इति—उक्तेषु चतुर्षु संयोगं परामृशति । 'संयुक्ते इमे' इति ज्ञानं द्वित्वसमानाश्रयं प्राप्तिग्रहणं सत् अवयविनं प्रतिपादयतीत्यन्वयः ।

४ आक्षिपति द्वाविति । द्वावयवसमुदायावेव न तु द्वाववयविनौ आश्रितः संयोगस्येति हृदयम् ।

५ आक्षेपं परिहरिष्यन् पृच्छति कोऽयमिति । समुदायार्थं विकल्प्यानुवदति पूर्वपक्षी प्राप्तिरनेकस्येति । अनेकस्य अवयवस्य प्राप्तिः संयोग एव समुदाय इति प्रथमविकल्पस्यार्थः । भिन्ना समुदायिनः (अवयवाः) संयोगेन एकीकृताः समुदाय इत्यर्थः । एकस्यैवावयवस्य अनेका प्राप्तिरनेकैरवयवैः संयोगः समुदायार्थ इति द्वितीयविकल्पार्थः । अनेकेऽवयवसमूहा एव समुदाय इत्यर्थः । इमावेव विकल्पौ द्वितीयदान्सूत्रभाष्येऽप्युक्तौ—समुदायैकदेशता वा समुदायो वृक्षः स्यात् प्राप्तिर्वेत्यादिना । तत्र यः समुदायैकदेशतापादनं विवक्षितं तदेवात्र द्वितीयविकल्परूपेणापन्यस्तम् । समुदायिप्राप्तित्वेन यत्तत्रोक्तं तदेवात्र प्राप्तिरनेकस्येत्यनेन विवक्षितम् ।

६ आद्यं विकल्पं दूषयति प्राप्तेरिति । प्राप्त्याश्रितायाः प्राप्तेरग्रहणमित्यन्वयः संयुक्ते इमे वस्तुनी इत्यत्र द्वयोः समुदाययोः संयोगो गृह्यते । तत्र यदि अनेकस्य प्राप्तिरेव समुदायो भवेत् तह्यत्र द्वयोः समुदायभूतयोः प्राप्त्योरेव प्राप्तिर्गृहीता स्यात् । न च प्राप्तेः प्राप्तिर्गृह्यते । अतो नानेकप्राप्तिः समुदायो भवितुमर्हति ।

"अनेकसमूह समुदाय" इति चेद्—न, द्वित्वेन समानाधिकरणस्य ग्रहणात्। द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमूहाश्रय संयोगो गृह्यते। न च द्वयोरण्वोर्ग्रहणमस्ति। तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति।

"प्रत्यासत्ति प्रतीघातावसाना संयोगो नार्थान्तरमिति" चेत्—न, अर्थान्तरहेतुत्वात्संयोगस्य। शब्दरूपादिस्पन्दाना हेतु संयोग। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पन्दे च कारणत्वं गृह्यते। तस्माद् गुणान्तर, प्रत्ययविषयश्चार्थान्तर तत्प्रतिषेधो वा—कुण्डली गुरुरकुण्डलश्छात्र इति। संयोगबुद्धेश्च यद्यर्थान्तर न विषय, अर्थान्तरप्रतिषेधस्तर्हि विषय। तत्र प्रतिषिध्यमानवचनम्। संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद्वक्तव्यमिति। द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति।

जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्। प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्ति।

व्यधिकरणस्यानभिव्यक्तेराधिकरणवचनम्।

"अणुसमवस्थाने विषय" इति चेत्—प्राप्ताप्राप्तसामर्थ्यवचनम्। किमप्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते, अथ प्राप्ते इति?

---

१ प्रथम विकल्प पराहत कृत्वा द्वितीयमुत्थापयति अनेकसमूह इति। अनेका प्राप्तिरिति पक्षे द्वे वस्तुनी इति द्वित्वसामानाधिकरण्यमनेकत्वस्य न घटते।

२ न चेति। परमाणोरतीन्द्रियत्वात्परमाणुद्वयस्याप्यतीन्द्रियत्वादित्यर्थ

३ पूर्वोक्तेषु चतुर्षु तृतीय स्पन्दमुद्दिश्य व्याचष्टे प्रत्यासत्तिरिति।

४ प्रतिषिध्यमानवचनमिति। किमत्र प्रतिषिध्यते तद् वक्तव्यमित्यर्थ।

५ उक्तेषु चतुर्षु चतुर्थीं जातिमुद्दिश्य व्याचष्टे जातिविशेषस्येति। प्रत्ययानुवृत्तिलिङ्गस्येत्यत्र लिङ्गपद निमित्तवाचकम्। लिङ्गमनुमापकमिति नु तात्पर्यकृत। तथा चोक्तम्—प्रत्ययानुवृत्तिर्यद्यपि प्रत्यक्षा तथाऽपि विप्रतिपन्न प्रति सैव लिङ्गमुच्यते।

६ व्यधिकरणस्येति। न चाय जातिविशेषो व्यधिकरणो व्यज्यते—इत्यधिकरणमवश्य वक्तव्यमित्यर्थ।

७ विषय इति। अधिकरणमित्यर्थ। परमाणव एव कथंचित् समवस्थानेनावतिष्ठमाना तां तां जाति व्यञ्जयन्ति। अतो नाधिकरणं वक्तव्यमिति पूर्वपक्षिणो हृदयम्।

८ प्राप्ताप्राप्तेति पूर्वपक्षमेव दूषयति। यद्येव परमाणूनां समवस्थान जातिविशेष व्यनक्ति—इति मन्यसे—किं तत्प्राप्तं प्राप्तं जातिविशेषं व्यनक्त्युताप्राप्तमिति भाव।

अप्राप्ते ग्रहणमिति चेत्,—व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः। व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत। प्राप्ते ग्रहणमिति चेत्? मध्यपरभागयोरप्राप्तावनभिव्यक्तिः। यावत्प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत्,—तावतोऽधिकरणत्वमणुसमवस्थानस्य। यावति प्राप्ते जातिविशेषो गृह्यते तावतस्तस्याधिकरणमिति प्राप्तं भवति। तत्रैकस्मिन् समुदाये प्रतीयमानेऽर्थभेदः। एवं च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत—यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति। तस्मात्समुदिताणुसमवस्थानस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिविषयत्वादवयव्यर्थान्तरभूत इति ॥ ३७ ॥

## ( ५ ) अनुमानपरीक्षाप्रकरणम्।

परीक्षितं प्रत्यक्षम्। अनुमानमिदानीं परीक्ष्यते—

**" रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् " ॥३८॥**

" अप्रमाणमिति—एकदाप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते। तदा चोपरिष्टाद्वृष्टो देव इति मिथ्यानुमानम्। नीडोपघातादपि

१ तत्रैकेति। योऽयं वृक्ष इति समुदायः प्रतीयते तस्य वृक्षस्य भेदः प्राप्नोतीत्यर्थः। यावति यावति जातिर्व्यज्यते स स वृक्ष इति प्राप्नोति। ततश्चैको वृक्षोऽनेक इति प्रतीयेत—एकप्रत्ययश्च न स्यादित्याशयः।

२ उपसंहरति तस्मादिति। समुदिता अणवः समवस्थानमधिकरणं यस्य तादृशस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिहेतुत्वं नाणूनामिति सिद्धोऽवयवीति भावः।

३ प्रतिपादकमिति। निश्चायकमित्यर्थः। प्रतिपादनमात्रं त्वप्रमाणेनापि क्रियत एव। अतः प्रतिपादकमत्र निश्चायकमेव विवक्षितम्।

४ नदीपूरदर्शनादभूद्वृष्टिरिति शेषवदनुमानम्—कार्यात् कारणस्येति। तत्सांशयिकत्वेन दूषयति रोधादिति। जलस्यावरोधादपि नद्याः पूरो भवति। अतो नास्ति नियतः सम्बन्धो नदीपूरस्य वृष्ट्येत्यर्थः।

५ पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति पूर्ववदनुमानम् कारणात्कार्यस्य। तद्दूषयति नीडोपघातादिति। स्ववासस्थानभ्रंशादपि पिपीलिका अण्डं गृहीत्वा निस्सरन्ति। अतो नास्ति नियतः सम्बन्धः पिपीलिकाण्डसञ्चरणस्य भाविवृष्ट्येत्याशयः।

अत्रेदमवधेयम्। न पिपीलिकाण्डसञ्चरणं वर्षायाः कारणम्। अनुपलब्धसामर्थ्यात्। असत्यपि तस्मिन् वर्षोपपत्तेः। वर्षामूलकारणस्य तु महाभूतसङ्क्षोभस्य पिपीलिकाण्डसञ्चरणं पूर्वकार्यम्। भौमेनोष्मणा क्लिश्यमाना पिपीलिकाः स्वान्यण्डानि

पिपीलिकाण्डसञ्चारो भवति । तदा च भविष्यति वृष्टिरिति मिथ्यानुमानमिति । पुरुषोऽपि मयूरवाशितमनुकरोति । तदापि शब्दसादृश्यान्मिथ्यानुमानं भवति" ॥ ३८ ॥

[2]न, एकदेशत्रासस्रादृश्येभ्योऽर्थान्तरभावात् ॥ ३९ ॥

नायमनुमानव्यभिचारः । अननुमाने तु खल्वयमनुमानाभिमानः । कथम्? [3]नाविशिष्टो लिङ्गं भवितुमर्हति । [4]पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति, नोदकवृद्धिमात्रेण । [5]पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते, न कासाञ्चिदिति । नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति [6]विशेषापरिज्ञानान्मिथ्यानुमानमिति । यस्तु [7]विशिष्टाच्छ

---

भूमिष्ठान्युपरिष्टान्नयन्ति । तस्मात्पिपीलिकाण्डसञ्चारेण वर्षकारणं महाभूतसङ्क्षोभमनुमाय यदि वर्षकारणात् वर्षकार्यमनुमीयते तदा पूर्ववदुदाहरणम् । अथ कार्यकारणभावमबुध्वैवानुमिमीते पिपीलिकाण्डसञ्चरणेन वर्षं तदा कार्यकारणभावाभावेन सामान्यतोदृष्टस्योदाहरणमिदम् ।

१ मयूररुतं श्रुत्वा वर्तमाना मघाऽनुमीयते—तदपि दूषयति पुरुष इति । यच्छ्रूयते मयूररुतत्वेन च ज्ञायते तत्पुरुषकृतं मयूररुतानुकरणमेव स्यात् । वार्तिककारोक्त्या तु मयूररुतेन मयूरस्य वास्तित्वमनुमीयत इत्येवात्र विवक्षितम् ।

२ अनुमानमिथ्यात्वं निराकरोति नेत्यादिना सूत्रेण ।

अनुमानाप्रामाण्यं न युक्तम्—एकदेशनदीवृद्धि—त्रासजपिपीलिकाण्डसञ्चार—मयूररुतसदृशरुतेभ्योऽर्थान्तरत्वात्—यथार्थानुमितिकरणत्वेनाभिमतानामिति शेषः । ये नदीवृद्ध्यादयोऽनुमितिकरणत्वेनाभिमतास्ते एकदेशजादिभ्यो भिन्ना एवेत्याशयः ।

३ नाविशिष्ट इति । नदीवृद्ध्यादिमात्रं नानुमितिकरणत्वेनाभिमतमपि तु विशिष्टमेवेत्यर्थः ।

४ नदीवृद्ध्यादीनां विशेषं दर्शयति पूर्वोदकेति ।

५ पिपीलिकेति । प्रायः प्रबन्धः पङ्क्तिरिति यावत् ।

६ विशेषापरिज्ञानादिति । यदा मयूररुतात् तत्सदृशशब्दस्य भेदं नावधारयति तद्द्वारैव चानुमिमीते तदैवेदमनुमानं मिथ्या । एवं च यदा रोधादिकारणान्तरैरुपजनितो नदीपूर इति नावधारयति तद्द्वारेण च उपरि वृष्टो देव इत्यनुमिनोति तदैवानुमानं मिथ्या । त्रासजोऽयं पिपीलिकाण्डसञ्चार इति यदा नावधारयति—अनुमिनोति च तद्द्वारैवागामिनीं वृष्टिं तदैवानुमानं मिथ्या नान्यथेत्याशयः ।

७ विशिष्टादिति । पटुतरस्वरविशिष्टादित्यर्थः ।

न्दाद्विशिष्टमयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गं, यथा सर्पादीनामिति । सोऽयमनुमातुरपराधो नानुमानस्य, योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति ॥ ३९ ॥

( ६ ) वर्तमानकालपरीक्षाप्रकरणम् आपोद्घातिकम् ॥

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्, अत्र च—

" वर्तमानाभावः, पततः पतितपतितव्यकालोपपत्तेः " ॥४०॥

" वृन्तात्प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा । तत्संयुक्तः कालः पतितकालः । योऽधस्तात् स पतितव्योऽध्वा । तत्संयुक्तः कालः पतितव्यकालः । नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्तमानः कालो गृह्येत । तस्माद्वर्तमानः कालो न विद्यत इति " ॥ ४० ॥

तयोरप्यभावो वर्तमानाभावे, तदपेक्षत्वात् ॥ ४१ ॥

*नाध्वव्यङ्ग्यः कालः, किं तर्हि, क्रियाव्यङ्ग्यः*—पततीति । यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः । यदोत्पत्स्यते स पतितव्यकालः । यदा द्रव्ये वर्तमाना क्रिया गृह्यते स वर्तमानः कालः । यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते । पतितः काल इति भूता क्रिया । पतितव्यः काल इति चोत्पत्स्यमाना क्रिया । उभयोः कालयोः क्रियाहीनं द्रव्यम् । अधः पततीति क्रियासम्बद्धम् । सोऽयं क्रिया

---

१ सर्पादीनामिति । सर्पादयो मयूरस्यैव विशिष्टं शब्दं श्रुत्वा तस्यास्तित्वमनुमिन्वन्ति । न तेषां कदापि मयूरसदृशरुतमात्रात्तदस्तित्वभ्रान्तिः ।

२ तदेवमनुमानलक्षणपरीक्षाद्वारेणानुमानं परीक्ष्य सम्प्रत्यनुमानविषयपरीक्षयाऽनुमानपरीक्षामवतारयति त्रिकालेति ।

३ तयोरिति । अतीतानागतयोरिति यावत् । तदपेक्षत्वादिति वर्तमानापेक्षत्वादित्यर्थः ।

यदा खल्वयं पुरुषः फलं प्रवर्तमानपतनक्रियाविशिष्टं प्रतिपद्यते तदा व्यपदिशति 'पतति' फलमिति । तन्मूले चास्यातीतानागते—'अपतत्फलम्'—'पतिष्यतीति' । न च प्रवर्तमानं पतनमसिद्धम्—येन कालं न व्यञ्ज्यात् । प्रत्यक्षसिद्धं हि तत् पतनम् । प्रवर्तमानपतनक्रियाया अभावे कस्य कारणं गुरुत्वं, कस्य च फलं भूमिसंयोगः । एवं चातीतानागतयोर्वर्तमानापेक्षत्वात् वर्तमानस्य च तदपेक्षत्वादस्ति त्रैकाल्यमिति सिद्धान्तः ।

द्रव्ययोः सम्बन्धं गृह्णातीति वर्तमानः कालः । तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ४१ ॥

अथापि—

## नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४२ ॥

यद्यतीतानागतावितरेतरापेक्षौ सिद्ध्येतां प्रतिपद्येमहि वर्तमानविलोपम् । नातीतापेक्षाऽनागतसिद्धिः नाप्यनागतापेक्षाऽतीतसिद्धिः ।

कया युक्त्या ?

केन कल्पेनातीतः कथमतीतापेक्षाऽनागतसिद्धिः, केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुम् । अव्याकरणीयमेतद्वर्तमानलोप इति ।

यच्च मन्येत—"ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायातपयोश्च यथेतरेतरापेक्षया सिद्धिरेवमतीतानागतयोरिति" तन्नोपपद्यते, विशेषहेत्वभावात् । दृष्टान्तवत्प्रतिदृष्टान्तोऽपि प्रसज्यते । यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यतः, एवमतीतानागतावपि नेतरेतरापेक्षा कस्यचित्सिद्धिरिति । यस्मादेकाभावेऽन्यतराभावादुभयाभावः । यद्येकस्यान्यतरापेक्षा सिद्धिरन्यतरस्येदानीं किमपेक्षा ? यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा ? एवमेकस्याभावे अन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते ॥ ४२ ॥

अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः विद्यते द्रव्यं विद्यते गुणः विद्यते कर्मेति । यस्य चायं नास्ति, तस्य—

## वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४३ ॥

---

१ नातीतेत्यादिसूत्रम् । परस्परापेक्षसिद्धेर्हि वर्तमानाभावः । सैव तु नास्तीति सूत्रार्थः ।

२ कया युक्त्येति प्रश्नः । केन कल्पेनेति तस्योत्तरम् । कल्पेनेति प्रकारेणेत्यर्थः । अनेन वर्तमानाभावेऽतीतरूपाक्षेपः कृतः ।

३ ह्रस्वत्वदीर्घत्वादीना परस्परापेक्षसिद्धत्वमङ्गीकृत्याऽऽह तन्नोपपद्यत इति । परमार्थतस्तु ह्रस्वत्वदीर्घत्वादीनामपि न परस्परापेक्षा सिद्धिरिति ।

४ वक्ष्यमाणसूत्रावतारपरं भाष्यम्—अर्थसद्भावेति । अयमस्यार्थः । न केवलं पतनादिक्रियाव्यङ्ग्यो वर्तमानः कालः । अपि तु 'अर्थसद्भाव'—अर्थस्य सत्ता, अस्तिक्रिया—तया व्यङ्ग्य इत्यवधेयम् ।

५ वर्तमानेत्यादिसूत्रम् । एतदुक्तं भवति—पतनादयः क्रियाः वर्तमानेषु अपयान्ति उपयान्ति च । अस्तिक्रिया तु सर्ववर्तमानव्यापिनी । तदेवमस्तिक्रियाविशिष्टस्य वर्तमानस्याभावे सर्वाग्रहणम्, प्रत्यक्षानुपपत्तेरिति ।

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम्। न चा[1]विद्यमानमसदिन्द्रियेण सन्निकृष्यते। न चा[2]यं विद्यमानं सत्किञ्चिदनुजानाति। प्र[3]त्यक्षनिमित्तं प्रत्यक्षविषयं प्रत्यक्षज्ञानं-सर्वं नोपपद्यते। प्र[4]त्यक्षानुपपत्तौ तत्पूर्वकत्वाद् अनुमानागमयोरनुपपत्तिः। सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति ॥ ४३ ॥

उभयथा च वर्तमानः कालो गृह्यते। क्वचि[5]दर्थसद्भावव्यङ्ग्यः, यथा अस्ति द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यः, य[6]था पचति छिनत्तीति। नानाविधा चैकार्था क्रिया-क्रियासन्तानः, क्रियाभ्यासश्च। नानाविधा चैकार्था क्रिया पचतीति-स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोऽवतारणमिति। छिनत्तीति क्रियाभ्यासः-उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते ॥ ४३ ॥

यच्चेदं[7] पच्यमानं छिद्यमानं च तत्क्रियमाणम्। त[8]स्मिन् क्रियमाणे—

**कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४४ ॥**

---

१ अविद्यमानमित्यस्य विवरणम्–असदिति।

२ अयमिति—पूर्वपक्षी

३ प्रत्यक्षनिमित्तमिति। प्रत्यक्षनिमित्तं सन्निकर्षः, अस्मदादिप्रत्यक्षविषयो विद्यमानो घटादिः प्रत्यक्षं प्रमाणम् अनाधारम्—एतत् सर्वं नोपपद्यत इत्याशयः।

४ कथं पुनर्वर्तमानाभावे प्रत्यक्षानुपपत्तिः। यस्मादिदं प्रत्यक्षं वर्तमानाधारं कार्यत्वात्-यत् कार्यं तद्वर्तमानाधारं दृष्टम्–यथा क्षीरम्—कार्यं च प्रत्यक्षं तस्माद्वर्तमानाधारमिति। अत एव वर्तमानकालानभ्युपगमेऽनाधारं प्रत्यक्षं प्राप्नोति। अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिरिति।

५ अर्थसद्भावेति—अस्तिक्रियामात्रगम्य इत्यर्थः।

६ यथा पचतीत्यादि। पचतीत्यत्र नानाविधा एका क्रिया। अतोऽत्र नानाक्रियासन्तानगम्यो वर्तमानः कालः। एता नानाक्रिया उद्दिष्टा अधस्तात् स्थाल्यधिश्रयणमित्यादि। छिनत्तीत्यत्र तु एकस्याः छेदनक्रियाया अभ्यास एव क्रियासन्तानो येन गम्यः कालः। एवंरूपमेव भेदं समुद्दिश्य दृष्टान्तद्वयमुपन्यस्तम्।

७ तदत्र वर्तमानक्रियासद्भावमुक्त्वा तत्सम्बन्धव्यङ्ग्यां कारणस्य वर्तमानतामाह यच्चेदमिति। तत्र क्रियमाणं वर्तमानक्रियासम्बन्धेन 'वर्तमानं,' न तु स्वरूपत इत्याशयः।

८ तस्य च कारणस्य वर्तमानक्रियासम्बन्धमतातानागतानपेक्षमपेक्ष्यातीतानागतस्य क्रियायाः कारकस्यापि व्यक्तिः तद्भावव्यक्तिः। तदुक्तं च द्वैविध्यमिति प्रतिपादनपरं सूत्रमवतारयति *तस्मिन् क्रियमाण इति।*

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागत काल —पक्ष्यतीति । प्रयोजनावसान क्रियासन्तानोपरम अतीत काल —अपाक्षीदिति । आरब्धक्रियासन्तानो वर्तमान काल –पचतीति । तत्र या उपरता सा कृतता । या चिकीर्षिता सा कर्त्तव्यता । या विद्यमाना सा क्रियमाणता । तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहार । पचति पच्यत इति वर्तमानग्रहणेन गृह्यते । क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते, नारम्भो नोपरम इति । सोऽयमुभयथा वर्तमानो गृह्यते–अपवृक्तो व्यपवृक्तश्चातीतानागताभ्याम् । स्थितिव्यङ्ग्य —विद्यते द्रव्यमिति । क्रियासन्तानाविच्छेदाभिधायी च त्रैकाल्यान्वित[1] – पचति छिनत्तीति । अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षाया तदभिधायी बहुप्रकारो लोकेषु उत्प्रेक्षितव्य । तस्मादस्ति वर्तमान काल इति ॥ ४४ ॥

( ७ ) उपमानपरीक्षाप्रकरणम् ।

" [2]अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः " ॥ ४५ ॥

" अत्यन्तसाधर्म्यादुपमान न सिध्यति । न[3] चैव भवति यथा गौरेवं गौरिति । प्रायसाधर्म्यादुपमान न सिध्यति । न[4] हि भवति यथाऽनड्वानेव महिष इति । एकदेशसाधर्म्यादुपमान न सिध्यति । न हि सर्वेण[5] सर्वमुपमीयत इति " ॥ ४५ ॥

---

१ त्रैकाल्यान्वित इति । 'पचति' 'छिनत्ति' इत्यत्र सम्पृक्त , काश्चिदत्र क्रिया व्यतीता काश्चिदनागता , एका च वर्तमाना । एवमत्र त्रैकाल्यान्वितत्वम् ।

२ अत्यन्तेत्यादिपूर्वपक्षसूत्रम् । यथा गौरेव गवय इत्यतिदेशवाक्यार्थस्मृतिसहकारि सारूप्यदर्शन साध्यस्य—गवयोऽयमिति सञ्ज्ञासञ्ज्ञिसम्बन्धस्य—साधनमुपमानम् । तच्चेद नोपपद्यते विकल्पानुपपत्ते । किं यथा गौरेव गवय इत्यत्यन्तसाधर्म्यं विवक्षितम् प्रायिक साधर्म्यं वा । उभयथाऽपि नोपपद्यत इति पूर्वपक्षाशय ।

३ न चैवमिति । गोगवययोरत्यन्तसादृश्ये सति—यावदुक्त भवति ' यथा गौस्तथा गवय ' इति तावदुक्त भवति ' यथा गौस्तथा गौरिति ' । न चैतद्वाक्यमभीप्सितसञ्ज्ञासञ्ज्ञिसम्बन्ध बोधयितु शक्नोति ।

४ नहि भवतीति । प्रायिक सादृश्ये विवक्षिते सति अनडुन्महिषयोरपि तादृश सादृश्ये वर्तमाने ' यथाऽनड्वांस्तथा महिष ' इत्यपि स्यात् । महिषस्यापि च गवा प्रायिकसादृश्यदर्शनात् तस्यापि गवयाभिधानप्रसङ्ग स्यात् ।

५ नहि सर्वेणेति । सर्वेषामपि वस्तूनां यत्किञ्चित्साधर्म्यं भवत्यवत्याशय ।

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४६ ॥

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्तते, किं तर्हि प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्तते। यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद्यथोक्तदोषो नोपपद्यत इति ॥ ४६ ॥

" अस्तु उपमानमनुमानम्—

" प्रत्यक्षेणाप्रत्यक्षसिद्धेः " ॥ ४७ ॥

" यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्, एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते " ॥ ४७ ॥

विशिष्यत इत्याह। कया युक्त्या?—

नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४८ ॥

१ प्रसिद्धसाधर्म्यादिति पूर्वपक्षपरिहारसूत्रम्। प्रकरणादयो हि वाक्यस्यार्थं प्रतिपादयन्ति, न केवलम्। तद्वाक्यं प्रसिद्धपदसमुदायं प्रतीयते, प्रसिद्धप्रासिद्धसाधर्म्यम्, प्रसिद्धवस्तुसाधर्म्यम्। तदिह प्रतीतमहिषादिकं पुरुषं प्रति यदा 'यथा गौस्तथा गवय' इति वाक्यमुच्चार्यते तदा महिषादिपरिहाराय भूयस्साधर्म्यं विवक्षितम्—इति तद्वाक्यार्थं स्मरन् महिषादिषु सामान्यं पश्यन्नपि न गवयमतीं निश्चाययति अपि तु भूयस्सादृश्यमेव गवय एव तां नियमयतीत्याशयः।

२ न साकल्येनेति भाष्यं नियमं निषेधति। न साधर्म्यस्य कृत्स्नभावमेव प्रायोभावमेव वाऽऽश्रित्यातिदेशवाक्यं प्रवर्तत इत्याशयः।

३ उपमानमिति। अतिदेशवाक्यमित्यर्थः।

४ साध्यसाधनेति। साध्यं 'संज्ञासंज्ञिसम्बन्धः'। एतदुक्तं भवति। अतिदेशवाक्यप्रसिद्धसाधर्म्यं यत्र संज्ञासंज्ञिसम्बन्धस्य साधनं भविष्यति—तत्र न नियमः, किन्तु क्वचित् किञ्चित् साधर्म्यमाश्रित्यातिदेशवाक्यं प्रवर्तते। तच्च प्रकरणादूह्यमिति।

५ उपमानमनुमानेऽन्तर्भावयन्नाह पूर्वपक्षी—प्रत्यक्षेणेतिसूत्रम्। यथा गौरेवं गवय इति वाक्यं 'प्रत्यक्षेण' गवा गवयमप्रत्यक्षं प्रतिपादयति। श्रुतवाक्योऽपि यदा प्रत्यक्षेण गवयं पश्यति तदा वाक्यार्थाधिगमादधिकं न किञ्चित् प्रतिपद्यते। संज्ञासंज्ञिसम्बन्धोऽप्यस्माद्वाक्यादवगतः। तस्मात् 'प्रत्यक्षेण' गवा 'अप्रत्यक्षस्य' गवयस्य गवयसंज्ञाविशिष्टस्य प्रतीतेरुपमानस्यानुमानतेति पूर्वपक्षिणो हृदयम्।

६ नाप्रत्यक्ष इत्यादि सिद्धान्तसूत्रम्।

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवा समानमर्थं पश्यति तदाऽय गवय इत्यस्य सञ्ज्ञाशब्दस्य व्यवस्था प्रतिपद्यते, न चेदमनुमानमिति ।

परार्थं चोपमान यस्य ह्युपमेयमप्रसिद्ध तदर्थं प्रसिद्धोभयेन क्रियत इति ।

"परार्थमुपमानमिति" चेत्, न, स्वयमध्यवसायात्। "भवति च भो स्वयमध्यवसाय —यथा गौरेव गवय इति" ।

नाध्यवसाय प्रतिषिध्यते । उपमान तु तन्न भवति । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । न च यस्योभय प्रसिद्ध त प्रति साध्यसाधनभावो विद्यत इति ॥ ४८ ॥

अथापि—

तथेत्युपसहारादुपमानसिद्धेर्नाविशेषः ॥ ४९ ॥

तथेति समानधर्मोपसहारादुपमान सिध्यति, नानुमानम् । अय चानयोर्विशेष इति ॥ ४९ ॥

( ८ ) शब्दसामान्यपरीक्षाप्रकरणम् ।

"शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्" ॥ ५० ॥

---

१ नचदमिति । गवयत्व हि ' सञ्ज्ञि '। न च तत् ' यथा गौस्तथा गवय ' इति वाक्यात्प्रतीयते, अपि तु कस्यचिज्जन्तो गवा सादृश्यमेव तस्माद्वाक्यात्प्रतीयते । न च वाक्यगतो गवयशब्दस्तस्य सादृश्यस्य वाचक, तथा तदानीमगृहीतसङ्गति त्वात् । न च सादृश्य ' सञ्ज्ञि ' । तस्मात् प्रत्यक्षे एव गवये गवयत्वस्य जाते प्रत्यक्षत्वात् सञ्ज्ञासञ्ज्ञिसम्बन्धपरिच्छेद । स एव चोपमानस्य प्रमाणस्यार्थ इति पर प्रत्यवतिष्ठते परार्थमुपमानमिति चेदिति । एवमत्र सम्बन्ध । परार्थमनुमानमिति चेन्मन्यसे सिद्धान्तवादिन् तन्नास्ति,—कुत स्वयमप्यध्यवसायात् । ' यथा गौरेव गवय ' इति वाक्यमेव परार्थं स्याद्यदि परस्यैवाध्यवसाय जनयेत् । तावतो च्चारयितुरप्यध्यवसाय जनयति । तस्मात् स्वार्थमपीति नानुमानादतीव भेद इत्याक्षेपस्याशय ।

२ आक्षेप परिहरति नाध्यवसाय इति । उक्तोऽध्यवसायोऽतिदेशवाक्योच्चार यितार प्रति उपमान न भवतीत्येतावन्मात्र सिद्धान्तिन आशय इत्यर्थ ।

३ तथेत्यादि सूत्रम् । नानुमानमेव भवति–'यथा धूमस्तथाऽग्निरिति' । अस्ति तूपमान ' यथा गौस्तथा गवय ' इति ।

४ शब्दोऽनुमानमिति पूर्वपक्षसूत्रम् । प्रत्यक्षेणानुपलभ्यमानार्थत्वादिति तदर्थ । यज्ज्ञान प्रत्यक्षेणानुपलभ्यमानविषय प्रत्यक्षस्य पश्चादुपजायते सत् 'अनुमानम्' । यथाऽग्निमद्धूमज्ञानम् । तथा च शब्दज्ञानम्–तस्मादनुमानमित्याशय ।

" शब्दोऽनुमानं न प्रमाणान्तरम् । कस्मात् ? शब्दार्थस्यानुमेयत्वात् । कथमनुमेयत्वम् ? प्रत्यक्षतोऽनुपलब्धे । यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम्, एवं मितेन शब्देन पश्चान्मीयतेऽर्थोऽनुपलभ्यमान इत्यनुमानं शब्द " ॥ ५० ॥

" इतश्चानुमानं शब्द —

" उपलब्धेरद्विप्रवृत्तित्वात् " ॥ ५१ ॥

" प्रमाणान्तरभावे [2]द्विप्रवृत्तिरुपलब्धि । अन्यथा ह्युपलब्धिरनुमाने अन्यथोपमाने–तद्व्याख्यातम् । शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्ति । यथानुमाने प्रवर्तते तथा शब्देऽपि । विशेषाभावादनुमानं शब्द इति " ॥ ५१ ॥

" [3]सम्बन्धाच्च " ॥ ५२ ॥

" शब्दोऽनुमानमिति वर्तते । सम्बद्धयोश्च शब्दार्थयो सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहण, यथा सम्बद्धयोर्लिङ्गलिङ्गिनो सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति " ॥ ५२ ॥

यत्तावदर्थस्यानुमेयत्वादिति, तत्र—

---

१ पूर्वपक्षे हेत्वन्तरम्–उपलब्धेरिति सूत्रम् ।

२ द्विप्रवृत्तिरिति–प्रवृत्तिप्रकारभेद इत्यर्थ ।

३ पूर्वपक्षे तृतीयो हेतु सम्बन्धाच्चेति सूत्रम् ।

अत्र हि सूत्रकारेण प्रथम शब्दस्यानुमानान्तर्गतिरेव परीक्षिता । न चापरीक्षितप्रमाणभावस्य सा युक्तेति वार्तिककारोऽस्यादौ प्रमाणभावमेव परीक्षाञ्चक्रे । तत्राय पूर्वपक्षसंक्षेप —

यस्मिन् सति प्रमा भवत्येव, न च न भवति, तदेव प्रमाणम् साधकतमस्य करणत्वात् । सत्यपि तु शब्दे प्रमा न भवति यावदसावश्रुत । एतच्च तस्य साधकतमत्व विघटयति । अन्यच्च । प्रामाण्य हि विषयवत्तया व्याप्तम् । सा शब्द निवर्तमाना प्रामाण्यमपि निवर्तयति । द्विविधश्च विषय । प्रत्यक्ष परोक्षश्च । तत्र पूर्व प्रत्यक्षस्य प्रमाणस्य विषय, अप्रत्यक्षश्चाविनाभूताल्लिङ्गादवगन्तव्य । तदनपेक्षेणासम्बन्धाविशेषात् सर्व सर्वस्माद्गम्येत । तथा च सर्वः परोक्षार्थं प्रत्ययोऽनुमानव्याप्त । न च प्रत्यक्षपरोक्षाभ्यामन्यो राशिरस्ति । तस्माद् विषयाभावादपि न शब्दप्रामाण्यमिति । एव च प्रत्यक्षानुमानाभ्या भिन्नप्रस्थान शब्दो न प्रमाणम्, प्रमाणत्वे वा तदन्तर्भूत एव । तत्रापि प्रत्यक्षानुमानयो कतरस्मिन्नस्यान्तर्भाव–इति जिज्ञासायामनुमानस्य एवान्तर्भाव इतिसूत्रत्रयार्थ ।

प्राप्तिलक्षणे च गृह्यमाणे सम्बन्धे शब्दार्थयो शब्दान्तिके वार्थ स्यात्, अर्थान्तिके वा शब्द स्याद्, उभय वोभयत्र ।

अथ खल्वयम्—

पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥ ५४ ॥

स्थानकरणाभावादिति चार्थ । न चायमनुमानतोऽप्युपलभ्यते–शब्दान्तिकेऽर्थ इति । एतस्मिन्पक्षेऽप्यास्यस्थानकरणोच्चारणीय शब्दस्तदन्तिकेऽर्थ इति–अग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन् । न च गृह्यन्ते । अग्रहणान्नानुमेय प्राप्तिलक्षण सम्बन्ध ।

अर्थान्तिके शब्द इति स्थानकरणासम्भवादनुच्चारणम् । स्थान कण्ठादय । करण प्रयत्नविशेष । तस्यार्थान्तिकेऽनुपपत्तिरिति । उभयप्रतिषेधाच्च नोभयम् । तस्मान्न शब्देनार्थ प्राप्त इति ॥ ५४ ॥

" शब्दार्थव्यवस्थानादप्रतिषेध. " ॥ ५५ ॥

' शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम् । असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्ग । तस्माद प्रतिषेध सम्बन्धस्येति " ॥ ५५ ॥

अत्र समाधि —

न, सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५६ ॥

न सम्बन्धकारितं शब्दार्थव्यवस्थानम्—किन्तर्हि—समयकारितम् । यत्तदवोचाम–अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञात

१ प्राप्तिलक्षण इत्याद्यागामिसूत्रमवतारयति ।

अतीन्द्रियत्वादप्रत्यक्ष शब्दार्थोऽनुमानेनोपलप्स्यत इति चेत् नानुमानेन विकल्पानुपपत्त । शब्दो वाऽर्थदेश गच्छति–अर्थो वा शब्ददेशम्–उभय वा । मोदकशब्द चोच्चार्यमाणे आगच्छन् मोदकादिरुपलभ्येत–नचोपलभ्यते–तस्मान्न गच्छति शब्ददेशमर्थ । शब्दस्य तु गतिरेव न सम्भवतीत्यादि स्पष्टमग्रिमभाष्ये ।

२ स्थानेति । 'स्थान' कण्ठादय । 'करण' प्रयत्नविशेष ।

३ चार्थ इति । सूत्रस्थचकारस्यार्थ इति भाव ।

४ पूर्वसूत्रोक्तदूषणपरिहारपर पूर्वपक्षिसूत्रम्—शब्दार्थेति ।

५ न सामयिकत्वादित्यादि समाधानसूत्रम् ।

शब्दार्थयोर्नित्यमेव सम्बन्ध वय निषेधामो न सम्बन्धमात्रम्–सम्बन्धस्तु अस्माच्छब्दादयमर्थो बोद्धव्य इत्येवरूपसमयकारितोऽस्त्येव शब्दार्थयोरिति भाव ।

शब्दार्थयोः सम्बन्ध इति—समयं समचोत्माम इति । कः पुनरयं समयः? अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः । तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति । विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः । सम्बन्धवादिनापि चायमवर्जनीय इति । प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानां समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम् । वाक्यलक्षणाया वाचोऽर्थो लक्षणम् । पदसमूहो वाक्यमर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थजुपोऽप्यनुमानहेतुर्न भवतीति॥५६॥

जातिविशेषे चानियमात् ॥ ५७ ॥

सामयिकः शब्दादर्थसम्प्रत्ययो न स्वाभाविकः । ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्तते । स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात् । यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥ ५७ ॥

( ९ ) शब्दविशेषपरीक्षाप्रकरणम् ।

" पुत्रकामेष्टिहवनाभ्यासेषु " —

---

१ नियमनियोग इति । मर्यादाऽऽश्वरस्येति शेषः ।

२ सम्बन्धवादिनेति । शब्दार्थसम्बन्धनित्यतावादिना मीमांसकेनापि उक्तः समय एव परमोपायः शब्दार्थसम्बन्धनिर्णयस्येति ।

३ समयेति । पारमेश्वरसमयपरिपालनार्थमित्याशयः । तथा च येषां पदानां येनार्थेन परमेश्वरेण समयः कृतः तानि तस्मिन्नर्थे साधून्यसाधूनीतरथेति विभागार्थेव व्याकरणमर्थवदिति सिद्धम् ।

४ अनुमानहेतुरिति । प्राप्तिलक्षणसम्बन्धानुमापको हेतुरित्यर्थः ।

तथा च शब्दस्य स्वाभाविकसम्बन्धाभावादनुमानाभेदाभाविनाभावसिद्धयर्थं स्वाभाविकसम्बन्धाभिधानमयुक्तमिति सिद्धं भवति ।

५ सम्बन्धानित्यतायामपरो हेतुः—जातिविशेषे इति सूत्रम् ।

६ ऋष्यार्येति । तथाहि यवशब्दं आर्या दीर्घशूके पदार्थे प्रयुञ्जते । ते हि यवशब्दं दीर्घशूकपदार्थे प्रतिपद्यन्ते । म्लेच्छास्तु तमेव प्रियङ्गौ प्रयुञ्जते । सोऽयमनियमः स्वाभाविके सम्बन्धे न स्यात् । यदि रूपेण स्वाभाविकसम्बन्ध आलोकः किञ्चिन्मह-त्त्वादि सर्वत्रिप्रकाशः शब्दने कर्तुं यतमानो व्यापारो गृह्येत । सोऽयमनियमः सामयिकत्वे उपपद्यते, पुरुषेच्छाधीनत्वात्समयस्य, इच्छायाश्चानियतकारित्वमिति भावः ।

" तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः " ॥ ५८ ॥

" तस्येति शब्दविशेषमेवाधिकुरुते भगवान् ऋषिः । शब्दस्य प्रमाणत्वं न सम्भवति । कस्मात् ? अनृतदोषात् । पुत्रकामेष्टौ–' पुत्रकामः पुत्रेष्ट्या यजेत ' इति । नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वाद् अदृष्टार्थमपि वाक्यम् ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' इत्याद्यनृतमिति ज्ञायते ।

" विहितव्याघातदोषाच्च । हवने–' उदिते होतव्यम् अनुदिते होतव्यम् समयाध्युषिते होतव्यम् ' इति–विधाय, विहितं व्याहन्ति–' श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति ' । व्याघाताच्चान्यतरन्मिथ्येति ।

"पुनरुक्तदोषाच्च । अभ्यासे दृश्यमाने–' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ' इति पुनरुक्तदोषो भवति । पुनरुक्तं च प्रमत्तवाक्यमिति ।

---

१ तदप्रामाण्यमित्यादिशब्दप्रामाण्यनिराकरणपरं पूर्वपक्षसूत्रम् ।

२ ' व्याघात ' पदयोर्वाक्ययोर्वा विरुद्धार्थोपस्थापकत्वेन सहासम्भवः ।

पूर्वप्रकरणे समस्तलौकिकवाक्यानुबद्धस्य शब्दस्य झटित्यप्रामाण्याभिधानं लोकविरुद्धं स्वचरितविरुद्धं चेति मन्वानस्य पूर्वपक्षिणोऽनुमानानन्तर्भावमुखेन तद्वाच्य तथाऽप्रामाण्यमेवाभिमतम् । तदेव बहिर्भावसिद्धावेदानीं विभाव्य प्रत्यवस्थानम् । न हि सर्वस्य शब्दस्याप्रामाण्यमस्य पूर्वपक्षिणो विवक्षितम्, स्ववचनव्याघातप्रसङ्गात् –इति परमैश्वर्यसाधनत्वेन नैयायिकाभिमत शब्दविशेषस्य वेदस्यैव प्रामाण्यमाक्षिपति।

वस्तुतस्त्वस्य हृदये शब्दमात्रस्यैवाप्रामाण्य चेष्टते । कैश्चिद् हेतुभिः केषाञ्चिद्वेदगतानामप्रामाण्यं प्रसाध्य तद्दृष्टान्तबलेनान्येषामपि वाक्यानामप्रामाण्यं साधयितुं सुकरम्–नित्यसन्देहादासानाप्तविभागस्य दुष्करत्वादित्याशयः ।

३ तस्येतीति । सूत्रे तच्छब्दप्रयोगोऽप्येतदेव सूचयति । यस्मात्प्रकरणेन प्राप्तमपि शब्दं तच्छब्देन पुनरभिधत्ते तेन ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न शब्दमात्रमिति । अन्यथैव वक्तव्यम्–' अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्यः ' इति ।

४ अनृतत्वादिति । अत्र फलादर्शनमेव ' अनृतत्वम् ' ।

५ श्यावशबलाविति । ' श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ । ताभ्यामिण्डं प्रयच्छामि स्यातामेतावहिंसकाविति ' बलिमन्त्रोऽत्रानुसन्धेयः ।

६ व्याघातादिति । उदितहोमादिविधिवाक्यानां निन्दावाक्यैर्व्याघात ।

तत्र कर्मवैगुण्यम्–मिथ्या[1]भिमन्थनम्। कर्तृवैगुण्यं–प्रज्ञाप्रयत्नगतः प्रमादः। साधनवैगुण्यम्–आर्द्रं सुषिरं दार्विति। तत्र फलं न निष्पद्यत इति नानृतदोषः। गुणयोगेन फलनिष्पत्तिदर्शनात्।

[2]न चेदं लौकिकाद्भिद्यते "पुत्रकामः पुत्रेष्ट्या यजेत" इति ॥ ५९ ॥

[3]अभ्युपेत्य कालभेदे दोषवचनात् ॥ ६० ॥

न व्याघातो हवन इत्यनुवर्तते। योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते–"श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति"। तदिदं विधिभ्रेषे निन्दावचनमिति ॥ ६० ॥

[4]अनुवादोपपत्तेश्च ॥ ६१ ॥

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तम्। [5]अर्थवानभ्यासोऽनुवादः। योऽयमभ्यासः–"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यनुवाद उपपद्यते, अर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति। तथा च मन्त्राभिवादः–"इदमहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण बाधे योऽस्मान्द्वेष्टि यं च वयं द्विष्मः" इति–पञ्चदशसामिधेनीर्वज्रं मन्त्रोऽभिवदति। तदभ्यासमन्तरेण न स्यादिति ॥ ६१ ॥

[6]वाक्यविभागस्य चार्थग्रहणात् ॥ ६२ ॥

प्रमाणं शब्दो यथा लोके ॥ ६२ ॥

विभागश्च ब्राह्मणवाक्यानां त्रिविधः —

---

१ मिथ्येति। येषामभिमन्थनेनाग्निर्न जायते तदेव 'मिथ्या'।

२ नचेदमिति। यथा लोकेऽपि कर्त्रादिवैगुण्यवशादसम्पद्यमानमग्निजननरूपं कर्म–'अग्निकामो दारुणी मथ्नीयात्' इत्यस्य विधिवाक्यस्य प्रामाण्यं न व्याहन्ति–तथैव कर्त्रादिवैगुण्येनासम्पद्यमानं पुत्रजननरूपं कर्म–'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यस्य विधिवाक्यस्य प्रामाण्यं न व्याहन्तीति लौकिकदृष्टान्तोद्भावनतात्पर्यम्।

३ अभ्युपेत्येति सूत्रं पूर्वपक्षोक्तं व्याघातदोषं परिहरति।

४ अनुवादेति सूत्रं पूर्वपक्षोक्तपुनरुक्तदोषं परिहरति।

५ अर्थवानिति। पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य पुनर्वचनम्। अनुवादस्तु पुनः श्रुतिसामान्यादङ्गीकृतविशेषस्यार्थस्य वादः। एवं च सति न यथोक्तो दोषः।

६ वाक्यविभागस्येति सूत्रं समस्तानि वेदवाक्यानि पक्षीकरोति। प्रमाणं वेदवाक्यानि, अर्थविभागवत्त्वात्, मन्वादिवाक्यवदित्यर्थः।

**विध्यर्थवादानुवादवचनविनियोगात् ॥ ६३ ॥**

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि–विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति ॥ ६३ ॥

तत्र—

**विधिर्विधायकः ॥ ६४ ॥**

यद्वाक्य विधायक चोदक स विधि । [1]विधिस्तु नियोगोऽनुज्ञा वा, यथा " अग्निहोत्र जुहुयात् स्वर्गकाम " इत्यादि ॥ ६४ ॥

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६५ ॥**

विधे फलवादलक्षणा या प्रशसा सा स्तुति सम्प्रत्ययार्था–स्तूयमान श्रद्दधीतेति–प्रवर्तिका च, फलश्रवणात् प्रवर्तते । " सर्वजिता वै देवा सर्वम जयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति " इत्येवमादि ।

अनिष्टफलवादो निन्दा वर्जनार्था,–निन्दित न समाचरेदिति । "स एष वाव प्रथमो यज्ञो यज्ञाना यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा " इत्येवमादि ।

अन्यकर्तृकस्य व्याहतस्य विधेर्वाद [2]परकृति । ' हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यम्, तदुह चरकाध्वर्यव पृषदाज्यमेवाग्रेऽभिघारयन्ति, अग्ने प्राणा पृषदाज्यमित्येवमभिदधति " इत्येवमादि ।

---

१ विधिस्त्विति । 'अग्निहोत्र जुहुयात्स्वर्गकाम' इति वाक्यमप्रवृत्तप्रवर्तकत्वलक्षण कर्त्रपेक्षितोपायता ज्ञापयत् ' विधि ' इति । तदेव तत्साधनद्रव्याद्यवाप्तिप्रवृत्ति मनुजानातीति 'अनुज्ञापि' भवति । एतदुक्त भवति । एकमेवाग्निहोत्रवाक्यमप्राप्तऽग्निहोत्रादौ ' विधि ,' अन्यत प्राप्त तत्साधने ' अनुज्ञा' चेति ।

पुनश्च ये द्रव्यार्जननियमविधय —'ब्राह्मणस्य प्रतिग्रहादिना' इत्येवमादय – ते च रागतो धनार्जने प्रवृत्ताना ब्राह्मणाना लौकिकानेकोपायप्रयुक्तौ सत्या नियमपरा पुरुषार्था, न क्रत्वर्था । क्रतुविधयस्तु धनसाधना । तेऽनूदिता पर्यवस्यन्तोऽपि न धनार्जन वा तन्नियम वा प्रयुञ्जते—तस्य पुरुषार्थत्वेनैव प्रयुक्तत्वात् । केवल मनुजानन्ति तु तदिति ।

२ परकृतिरिति । चरकाध्वर्युपुरुषसम्बन्धात् वपाहोमपृषदाज्याभिघारणयो क्रमभेदस्याप्राप्तस्य पुरुषविशेषधर्मतया विधायक परकृतिवाक्यम् । तथा बर्हिष्पवमानसामस्तोमम क्रमसम्बन्धस्य पूर्वकालपुरुषसम्बन्धितया श्रवणादिदानीन्तनपुरुषधर्मतया विधायक पुराकल्पवाक्यमिति विवेक । स्फुटतरस्तुतिनिन्दाप्रतीत्यभावाच्च परकृतिपुराकल्पयो स्तुतिनिन्दाभ्यां भेदेनोपन्यास ।

ऐतिह्यसमाचरितो विधिः पुराकल्प इति । "तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे" इत्येवमादि ।

"कथं परकृतिपुराकल्पावर्थवादाविति ?"

स्तुतिनिन्दावाक्येनाभिसम्बन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थ[1]-वाद इति ॥ ६५ ॥

[3]विधिविहितस्यानुवचनमनुवादः ॥ ६६ ॥

विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः । यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि ।

"किमर्थं पुनर्विहितमनूद्यते ?"

अधिकारार्थम् । विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा–विधिशेषो वाऽभिधीयते । विहितानन्तरार्थोऽपि चानुवादो भवति । एवमन्यदप्युत्प्रेक्षणीयम् ।

लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम् । ओदनं पचेदिति विधिवाक्यम् । अर्थवादवाक्यमायुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम् । अनुवादः–पचतु पचतु भवानित्यभ्यासः–क्षिप्रं पच्यतामिति वा, अङ्ग पच्यतामित्यध्येषणार्थम्, पच्यतामेवेति वावधारणार्थम् ।

यथा लौकिकवाक्ये विभागेनार्थग्रहणात्प्रमाणत्वम् एवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति ॥ ६६ ॥

---

१ कथमित्यादिप्रश्नस्योत्तरम्–स्तुतिनिन्देति । स्तुतिनिन्दावाक्येन कस्यचिद्विधेः शेषभूतेन सम्बन्धादिति भाव ।

२ अर्थवाद इति । न तावदेतेषु वाक्येषु सिद्धाभिधायिषु विधिश्रुतिरस्ति । तत्र किमश्रूयमाणो विधि· कल्प्यताम्–आहोस्वित् प्रतीतेनैव केनचिदन्येन विधिनैकवाक्यता कल्प्यतामिति संशये–कल्पनालाघवात् प्रतीतेनैव विधिनैकवाक्यता ज्यायसी । पूर्वपक्षे विधिकल्पना तदेकवाक्यताकल्पना चेति द्वय कल्पनीयम्, उत्तरस्मिंस्त्वेकवाक्यतामात्रमित्याशय ।

३ विधिविहितस्येत्यादि सूत्रम् (१) अश्वमेधेन यजेतेति विधेरनुवादो 'योऽश्वमेधेन यजते तरति मृत्युं तरति पाप्मानमित्यादि' विहित स्तोतुम् । (२) उदिते होतव्यमिति विधेरनुवाद 'यदुदिते जुहोति यदनुदिते जुहोति श्यावो वास्याहुतिमभ्यवहरतीत्यादि' विहितातिक्रम निन्दितुम् । (३) सोमयागो विहितो दर्शपूर्णमासौ च, तयोरनुवादो 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादि' अनुष्ठानक्रम बोधयितुम् । सूत्रप्रकरणमुपसंहरति यथा लौकिक इति ।

"नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः" ॥ ६७ ॥

"पुनरुक्तमसाधु साधुरनुवाद इत्यय विशेषो नोपपद्यते। कस्मात्? उभयत्र हि प्रतीतार्थं शब्दोऽभ्यस्यते। चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति" ॥ ६७ ॥

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६८ ॥

नानुवादपुनरुक्तयोरविशेष। कस्मात्? अर्थवतोऽभ्यासस्यानुवादभावात्। समानेऽभ्यासे पुनरुक्तमनर्थकम्, अर्थवानभ्यासोऽनुवाद, शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्र गम्यता शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। उदाहरणार्थं चेदम्। एवमन्योऽप्यभ्यास। पचति पचतीति क्रियानुपरम। ग्रामो ग्रामो रमणीय इति व्याप्ति। परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम्। अध्यधिकुड्य निषण्णमिति सामीप्यम्। तिक्त तिक्तम् इति प्रकार।

एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहितानन्तरार्थता चेति ॥ ६८ ॥

"किं पुन प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्व सिध्यति?" अतश्च—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६९ ॥

"किं पुनरायुर्वेदस्य प्रामाण्यम्?"

यत्तदायुर्वेदेनोपदिश्यते—इद कृत्वेष्टमधिगच्छतीद वर्जयित्वाऽनिष्ट जहाति, तस्यानुष्ठीयमानस्य तथाभाव सत्यार्थताऽविपर्यय। मन्त्रपदाना च विषभूताशनिप्रतिषेधार्थाना प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम्।

---

१ भाष्यात्कमनुवादप्रयोजनमविद्वानाक्षिपति—नानुवादेति सूत्रम्।

२ शीघ्रतरेत्यादि समाधानसूत्रम्।

३ अर्थवानिति। अनुवादलक्षणोऽभ्यास सप्रयोजन प्रत्ययविशेषहेतुत्वात् शीघ्रतरगमनोपदेशवदिति।

४ अतश्चेति। यत प्रतिषेधहेतूद्धारादेव शब्दस्य प्रामाण्य न सिध्यति—अत सूत्रकारो हेत्वन्तरैस्तत् साक्षात् साधयति।

५ मन्त्रेत्यादिसूत्रम्। तत्र चकार पूर्वहेत्वनुकर्षणार्थ। अत्र प्रयोग—प्रमाण वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति। अथवा—एककर्तृकत्वेन मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यार्थप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्य।

किं कृतमेतत्? आप्तप्रामाण्यकृतम्?

किं पुनराप्तानां प्रामाण्यम्? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माणः—इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुरिति—भूतान्यनुकम्पन्ते—तेषां खलु वै प्राणभृतां स्वयमनवबुद्ध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति, न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति, हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामस्त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्ति इति एवमाप्तोपदेशः। एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति। एवमाप्तोपदेशः प्रमाणम्। एवमाप्ताः प्रमाणम्।

दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति। आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो "ग्रामकामो यजेत" इत्येवमादिर्दृष्टार्थः। तेनानुमातव्यमिति।

लोके च भूयानुपदेशाश्रयो व्यवहारः। लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्। तत्परिग्रहादाप्तोपदेशः प्रमाणमिति।

द्रष्टृप्रवक्तृसामान्याच्चानुमानम्। य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्—इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति।

"नित्यत्वाद् वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्"।

स शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वम्, न नित्यत्वात्, नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः। "नानित्यत्वे वाचकत्वमिति" चेद्, न, लौकिकेष्वदर्शनात्। "तेऽपि नित्या इति" चेद् न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः। नित्यत्वाद्धि शब्दः प्रमाणमिति। "अनित्य

१ इदं हातव्यमित्यादि साक्षात्कृतधर्मता प्रदर्शयति।

२ हन्तेत्यादि यथाभूतार्थचिख्यापयिषां सूचयति।

३ समानत्वादिति। यथाऽऽयुर्वेद आप्तप्रणीतस्तथा वदाऽपीत्यर्थः।

४ अनाप्तेति। यदि लौकिका अपि शब्दा नित्यास्तर्ह्यनाप्तवचने योऽर्थविसंवादः सकलानुभवगम्यः स न स्यादित्यर्थः।

स इति " चेन्, अविशेषवचनम्। अनाप्तोपदेशो लौकिको न नित्य इति कारण वाच्यमिति। यथानियोग चार्थस्य प्रत्यायनान्नामधेयशब्दाना लोके प्रामाण्यम्। नित्यत्वात्प्रामाण्यानुपपत्ति। यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात्प्रत्यायको भवति, न नित्यत्वात्। [1]मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदाना नित्यत्वम्। आप्तप्रामाण्याच्च प्रामाण्यम्। लौकिकेषु शब्देषु चैतत्समानमिति ॥ ६९ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीया-
ध्यायस्याद्यमाह्निकम्।

---

१ मन्वन्तरेति। महाप्रलये ईश्वरेण वेदान् प्रणीय सृष्ट्यादौ सम्प्रदाय प्रवर्त्यत एवत्याशय।

# अथ द्वितीयाध्यायस्य द्वितीयमाह्निकम्[1]

## ( १ ) प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ।

अयथार्थ[2] प्रमाणोद्देश इति मत्वाऽऽह—

" न[3] चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् " ॥ १ ॥

" न चत्वार्येव प्रमाणानि । किं तर्हि ? ऐतिह्यमर्थापत्ति सम्भवोऽभाव इत्येतान्यपि प्रमाणानि । तानि कस्मान्नोक्तानि ।

" इति होचुरित्यनिर्दिष्टप्रवक्तृक प्रवादपारम्पर्यमैतिह्यम् ।

" अर्थादापत्तिरर्थापत्ति । आपत्ति –प्राप्ति –प्रसङ्ग । यत्राभिधीयमानेऽर्थे योऽन्योऽर्थ प्रसज्यते सोऽर्थापत्ति । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति । किमत्र प्रसज्यते ? सत्सु भवति ।

" सम्भवो नामाविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् आढकस्य ग्रहणात्प्रस्थस्येति ।

" अभावो विरोधी–अभूत भूतस्य, अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसयोगस्य[4] प्रतिपादकम् । विधारके हि वाय्वभ्रसयोगे गुरुत्वादपां पतनकर्म न भवतीति " ॥ १ ॥

सत्यमेतानि[5] प्रमाणानि, न तु प्रमाणान्तराणि । प्रमाणान्तर च मन्यमानेन प्रतिषेध उच्यते । सोऽयम्[6]—

---

१ एव प्रथमाह्निके धर्मिण प्रत्यक्षादीन् शब्दान्तान्निरूप्येदानीं द्वितीयाह्निके चतुष्ट्वादयस्तेषां धर्मा निरूपणीया । तत्र प्रमाणधर्मपरीक्षा द्वितीयाह्निकार्थ ।

२ अयथार्थ इति । प्रमाणाना विभागोद्देशो य सोऽयथार्थ इत्यर्थ ।

३ न चतुष्ट्वमित्यादि पूर्वपक्षसूत्रम् । अभ्युपगतोक्तप्रत्यक्षादिप्रमाणभावोऽनभ्युपगतचतुष्ट्वमात्रोऽत्र पूर्वपक्षी । अथ वा तन्त्रान्तरोक्तप्रमाणान्तरसत्त्वासत्त्वनिश्चयरहित सतीर्थ्य एवात्र प्रष्टा ।

४ वाय्वभ्रेति । अपा पातप्रत्यनीकस्य पातविरोधिन वाय्वभ्रसयोगस्य ग्रहणम् । तदिद क्रियाभावाख्य प्रमाणम् । प्रमीयतेऽनेन ( मेघोदयेऽपि तोयपाताभावेन ) वाय्वभ्रसयोग इत्याशय ।

५ सत्यमिति । सत्यमेतान्यैतिह्यादीनि प्रमाणानि—न तु प्रत्यक्षादिभ्योऽन्यानि । प्रत्यक्षादिभ्योऽन्यत् प्रमाण नास्तीत्येतावन्मात्रऽस्माकमाग्रह । न चैतिह्यादीनां प्रमाणत्वमेव न मृष्यामह इति हृदयम् ।

६ सोऽयमिति—अनुपपन्न प्रतिषेध इत्यग्रिमेण भाष्यग्रन्थेनान्वय ।

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥**

अनुपपन्नः प्रतिषेधः। कथम्? आप्तोपदेशः शब्दः इति। न च शब्दलक्षणमैतिह्याद्व्यावर्तते। सोऽयं भेदः सामान्यात्संगृह्यत इति।

प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थापत्तिसम्भवाभावाः। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव। अविनाभाववृत्त्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः, तदप्यनुमानमेव। अस्मिन्सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते। सोऽयं यथार्थ एव प्रमाणोद्देश इति ॥ २ ॥

'सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणी'त्युक्तम्। अत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते। तथा हीयम्—

**" अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् " ॥३॥**

" असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवतीत्येतदर्थादापद्यते सत्स्वपि चैकदा न भवति। सेयमर्थापत्तिरप्रमाणमिति ' ॥ ३ ॥

नानैकान्तिकत्वमर्थापत्तेः —

**अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥**

असति कारणे कार्यं नोत्पद्यत इति वाक्यात्प्रत्यनीकभूतोऽर्थः सति कारणे कार्यमुत्पद्यत इत्यर्थादापद्यते,–अभावस्य हि भावः प्रत्यनीक इति। सोऽयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति। न खल्वसति कारणे कार्यमुत्पद्यते। तस्मान्नानैकान्तिकी।

---

१ शब्द इत्यादिसिद्धान्तसूत्रमुत्तानो प्रागुक्तस्यैवाप्रमाण्यदर्शनार्थम् ।

२ शब्दलक्षणमिति। [illegible] प्रमाणमेव न भवति। [illegible] इति शब्दलक्षणं नातिवर्तत इत्यर्थः ।

३ वाक्यार्थेति। असत्सु मेघेषु वृष्टिर्न भवतीत्येतद्वाक्यमेतावता तेनानभिहितं 'सत्सु मेघेषु भवति वृष्टि'रित्यर्थापत्तिरुक्ता [illegible]। [illegible] अनुमानमेवेत्यर्थः।

४ अर्थापत्तिरिति पूर्वपक्षसूत्रम् ।

५ अनर्थेति सिद्धान्तसूत्रम् ।

यत्तु "सति कारणे निमित्तप्रतिबन्धात्कार्यं नोत्पद्यते" इति, कारणधर्मोऽसौ न त्वर्थापत्तेः प्रमेयम्। किं तर्ह्यस्याः प्रमेयम्? सति कारणे कार्यमुत्पद्यते इति योऽसौ कार्योत्पादः कारणस्य सत्तां न व्यभिचरति तदस्याः प्रमेयम्। एवं तु सत्यनर्थापत्तावर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति। दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥ ४ ॥

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनानेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः। एवमनैकान्तिको भवति। अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति ॥ ५ ॥

अथ मन्यसे— 'नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति न च प्रतिषेधस्य सद्भावो विषयः'। एवं तर्हि

तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

अर्थापत्तेरपि कार्योत्पादेन कारणसत्ताया अव्यभिचारो विषयः न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ॥ ६ ॥

'अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते।' कथमिति?—

"नाभावप्रामाण्यं प्रमेयासिद्धेः" ॥ ७ ॥

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति ॥ ७ ॥

---

१ न व्यभिचरतीति। ततश्च नानैकान्तिकतेति भावः।

२ उच्यत इति। पूर्वपक्षिणा तृतीयसूत्र इति शेषः।

३ प्रतिषेधेति सिद्धान्तिनः सूत्रम्।

४ एवमिति। एवं ह्यैकान्तिकं स्याद्यद्यर्थापत्तेः प्रामाण्यं सत्तां च प्रतिषेधेत्। न त्वनैकान्तिकत्वात्सत्त्वं प्रतिषेद्धुमर्हति। न भवति यदनैकान्तिकं तत् सर्वं नास्तीति। प्रमेयत्वादीनां नित्यत्वसाधनेऽनैकान्तिकत्वेऽपि सत्त्वादिति हृदयम्।

५ तदिति सिद्धान्तिनः सूत्रम्। तदिति प्रतिषेधं परामृशति।

६ नाभावेति पूर्वपक्षसूत्रम्। नाभावप्रमानं प्रमाणम्। कस्मात्? प्रमेयस्याभावस्यासिद्धेः। यत् किल सर्वोपाख्यारहितं तत् प्रमाणज्ञानविषयभावमनुभवति। केवलं काल्पनिको ह्यभावव्यवहारो लौकिकानामिति पूर्वपक्षिणो हृदयम्।

७ अभावस्येति। पूर्वपक्षपरिहारोऽयम्। सर्वजनीनाभावप्रत्ययव्यवहारो न काल्पनिको भवितुमर्हति। न च कल्पनाऽपि सर्वोपाख्यारहितं गोचरयितुमर्हति।

८ वैयात्यादिति। साहसमात्रादित्यर्थः।

अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

**लक्षितेष्व[1]लक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥ ८ ॥**

तस्याभावस्य सिध्यति प्रमेयम्। कथम्? लक्षितेषु वासःसु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वाल्लक्षणाभावेन लक्षितत्वादिति। उभयसन्निधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासःसु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते, प्रतिपद्य चानयति। प्रतिपत्तिहेतुश्च प्र[2]माणमिति ॥ ८ ॥

**"अस[3]त्यर्थे नाभाव इति" चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥**

"यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते। अलक्षितेषु च वासःसु लक्षणानि भूत्वा न न भवन्ति, तस्मात्तेषु लक्षणाभावोऽनुपपन्न इति"।

नान्यलक्षणोपपत्तेः। यथाऽयमन्येषु वासःसु लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु। सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति ॥ ९ ॥

**"तस्मि[4]न्सिद्धेरलक्षितेष्वहेतुः" ॥ १० ॥**

"तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः। यानि खलु भवन्ति तेषामभावो व्याहत इति" ॥ १० ॥

**न[5] लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥**

---

१ लक्षितेष्विति सिद्धान्तसूत्रमनकधा भिन्नप्रत्यक्षस्योदाहरणार्थम्।

२ प्रमाणमिति। लक्षणस्याभाव एव च प्रतिपत्तेहेतुरिति। लक्षणाभावज्ञान विशिष्टे वाससि प्रत्यय जनयत् साधकतमत्वात्प्रमाण भवतीत्याशय।

३ असत्यर्थ इति पूर्वपक्षानुस्यूत सिद्धान्तसूत्रम्। प्रध्वंस एवाभाव, तस्य भावाधीननिरूपणत्वात्प्राप्तिपूर्वकत्वाद् भावपूर्वकत्वाच्चा याऽन्यभाव इति मन्वानस्य पूर्वपक्ष।

तत्र समाधानम् प्रत्यक्ष हि प्रमाण प्रमेयाभाव व्यवस्थापयति। तच्च प्रध्वंसवत् प्रागभावेऽपि तुल्यम्। प्रतियन्ति हि लौकिका अपि क्षीराभाव प्रध्वंसरूप, क्षीरे च दध्यभाव प्रागभावरूपमिति।

४ तस्मिन्सिद्धेरिति पूर्वपक्षिसूत्रम्। यत्र लक्षणानि सन्ति तत्र तेषामभावो व्याहत। यत्र च न सन्ति तत्राप्यभावोऽनुपपन्न, तस्य भावाधीननिरूपणस्य तद्भावेऽशक्यनिरूपणत्वादित्यर्थः।

५ न लक्षणेति सिद्धान्तसूत्रम्।

न ब्रूमो–यानि लक्षणानि भवन्ति तेषामभाव इति । किन्तु केषु चिल्ल- क्षणान्यवस्थितानि अनवस्थितानि केषु चित् । अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

अभावद्वैतं खलु भवति,–प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चात्मनो हानादविद्यमानता । तत्रालक्षितेषु वासस्सु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्ष णानामभावो नेतर इति ॥ १२ ॥

( २ ) शब्दानित्यताप्रकरणम् ।

'आप्तोपदेशः शब्दः' इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते । तस्मिन् सामान्येन विचारः—किं नित्योऽथानित्य इति ।

विमर्शहेत्वनुयोगे च विप्रतिपत्तेश्च संशयः ।

आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके । गन्धादिसह

१ प्रतिपद्यत इतीति । अभावो हि भावज्ञानाधीननिरूपणो न भावमात्राधीन- निरूपण । प्रागभावोऽपि च शक्यो भविष्यद्भावज्ञानेनान्यत्रावस्थितभावज्ञानेन वा निरूपयितुमिति न प्रागभावाभाव इत्यर्थः ।

२ प्रागुत्पत्तेरिति सिद्धान्तिसूत्रम् ।

३ अस्य प्रकरणस्य प्रयोजनं यथा । पदवाक्यस्फोटस्थ्यशङ्काव्युदासेन नित्यत्वसूहमा- त्रोक्तसिद्धौ वेदप्रामाण्यसिद्धिः । अन्यथा ह्यपौरुषेयत्वे दोषप्रवृत्तौ यथाऽप्रामाण्यं तथा तदर्थोपलम्भप्रतिपादयितृलक्षणगुणनिवृत्तावप्यप्रामाण्यमाशङ्क्येत——अनैयमूलता लोकेऽप्रामाण्यदर्शनात् । अपि च शब्दस्यानित्यत्वसिद्धावाकाशगुणत्वं सिध्येत, तथा चेन्द्रियनियम उपपद्यतेत्येतदपि प्रयोजनम् । अन्यथा गन्धरसरूपस्पर्शशब्दाः पृथि- व्यादिगुणास्तदर्थां इति भज्येत ।

४ अत्र च शब्दसामान्यस्यैव विचार । वर्णात्मकस्य तु तस्य विचारोऽग्रिमे तृतीये प्रकरणे वर्तिष्यते ।

५ आकाशगुण इति जरन्मीमांसकमतमाह । अवधातप्रेरितेन वायुना यावद्देशम- भिप्रतिष्ठमानेन कर्णशष्कुल्यवच्छिन्ननभोभागसम्बन्धतो नित्यः शब्दो व्यज्यत इति तन्मतसङ्क्षेपः ।

६ गन्धादीति साङ्ख्यमतमाह । पञ्चतन्मात्रोपपञ्चभूतसूक्ष्मसमुदायारब्धपृथिव्या- दिविकारो गन्धरसादिवृत्तिः शब्दो योग्यदेशस्थ आहङ्कारिकस्य व्यापकस्य विषयदेशस्थ श्रोत्रेन्द्रियवृत्तेर्भवस्थित एव गृह्यत इति तन्मतसङ्क्षेपः ।

वृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे। आकाश[1]गुणः शब्दः उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे। महाभूत[2]संक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अतः संशयः,—किमत्र तत्त्वमिति।

अनित्यः शब्द इत्युत्तरम्। कथम्?—

आदिम[4]त्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १३ ॥

आदिर्योनिः कारणम्,—आदीयते अस्मादिति। कारणवदनित्यं दृष्टम्। संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति। "का पुनरियमर्थदेशना?" कारणवत्त्वादिति उत्पत्तिधर्मकत्वात्। अनित्यः शब्द इति भूत्वा न भवति, विनाशधर्मक इति।

"सांशयिकमेतत्—किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य, आहोस्विदभिव्यक्तिकारणम्—" इत्यत आह—ऐन्द्रियकत्वात्। इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः।

"किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्? अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति"?

संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम्। दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्य ग्रहणं भवति। तस्मान्न व्यञ्जकः संयोगः।

उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति।

इतश्च शब्द उत्पद्यते नाभिव्यज्यते—कृतकवदुपचारात्। तीव्रं मन्दमिति

---

१ आकाशेति तृतीयं वैशेषिकमतमाह।

२ महाभूतेति बौद्धसिद्धान्तमाह।

३ केचिदन्ये एव मन्यन्ते—"प्रत्यभिज्ञैव भगवती शब्दस्यैक्यसाधिका। तद्वानु गुण्याय व्यापिनः शब्दस्य गुणस्य द्रव्यस्य वा प्रयत्नप्रेरिता वायवः यावद्दूरं प्रतिष्ठमाना श्रोत्रं श्रोत्रावच्छिन्नशब्दविदाय संस्कुर्वन्ति। व्यञ्जका इति कल्प्यते। न च 'समानदेशानां समानेन्द्रियग्राह्याणां नियतस्य व्यञ्जकव्यङ्ग्यत्वं दृष्टमिति' इयं प्रत्यभिज्ञा दूष्यति। सोऽयमनया बाधितविषयो विलीयत' इति।

४ आदिमत्त्वादित्यादि सिद्धान्तसूत्रं पूर्वोक्तं प्रत्याह।

५ तीव्रमन्दत्वानुनासिकत्वादयो धर्माः शब्दस्योपाधिकाः उत नेति संशये

कृतकमुपचर्यते । तीव्रं सुखं मन्दं सुखं, तीव्रं दुःखं मन्दं दुःखमिति । उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति ।

" व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति " चेद्—न, अभिभवोपपत्तेः । " संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति, न तु शब्दो भिद्यते । यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति " । तच्च नैवम्, अभिभवोपपत्तेः । तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति, न मन्दः । न च शब्दग्रहणमभिभावकम् । शब्दश्च न भिद्यते । शब्दे तु भिद्यमाने युक्तोऽभिभवः । तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति ।

अभिभवानुपपत्तिश्च, व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात् । व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इत्येतस्मिन्पक्षे नोपपद्यतेऽभिभवः । न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति ।

" अप्राप्तेऽभिभव इति " चेन्—शब्दमात्राभिभवप्रसङ्गः । अथ मन्येत —" असत्यां प्राप्तावभिभवो भवतीति " । एवं सति यथा भेरीशब्दः कञ्चित्तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानमिव दवीयःस्थोपादानानपि तन्त्रीस्वनानभिभवेद् अप्राप्तेरविशेषात् । तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति । नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण मन्दस्याभिभवो युक्त इति । " कः पुनरयमभिभवो नाम ? " ग्राह्यसमानजातीयग्रहणकृतमग्रहणम् अभिभवः, यथोल्काप्रकाशस्य ग्रहणार्हस्यादित्यप्रकाशेनेति ॥ १३ ॥

" न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च " ॥१४॥

---

सिद्धान्तः । वर्णसमवेताऽनुनासिकत्वादि प्रतीयमाना वर्णधर्म एव भवति नौपाधिक इति । तथा च युगपद्विरुद्धधर्मयोगात्परस्परमन्यत्वमकारादीनामिति युक्तम् ।

१ यथोल्केति । अन्यत् खल्वन्येन समानजातीयेनाभिभूयते न तु तदेव तेन । नहि मध्यन्दिनोल्काप्रकाशसम्बन्धः पटः पटुना सावित्रेण प्रकाशेन प्रकाशमानमात्मानमात्मनाऽभिभवति । एवं गकारोऽपि तीव्रध्वनिप्रकाश्यः गकारमात्मानमभिभवेद्यदि स्वयं मन्दध्वनिप्रकाश्यः गकारस्तीव्रध्वनिप्रकाश्याद्गकारादन्यो भवति । मध्यन्दिनोल्काप्रकाशस्तु सवितृप्रकाशेनात्मनोऽन्येनाप्यन्यत्वादभिभूयते ।

२ न घटेत्यादि सिद्धान्ताक्षेपसूत्रं सिद्धान्तहेतूनामनैकान्तिकत्वस्थापनार्थम् । घटाभावस्य नित्यत्वात्, सामान्यस्य नित्यत्वात्, नित्येष्वनित्यवदुपचाराच्चेत्यन्वयः ।

न खल्वादिमत्त्वादनित्यः शब्दः । कस्मात्? व्यभिचारात् । आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम् । कथमादिमान्? कारणविभागेभ्यो हि घटो न भवति । कथमस्य नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदाचिन्निवर्त्यत इति । यदप्यैन्द्रियकत्वादिति–तदपि व्यभिचरति । ऐन्द्रियकं च सामान्यं नित्यं चेति । यदपि कृतकवदुपचारादिति–एतदपि व्यभिचरति । नित्येष्वनित्यवदुपचारो दृष्टः । यथा हि भवति वृक्षस्य प्रदेशः, कम्बलस्य प्रदेशः, एवमाकाशस्य[1] प्रदेशः, आत्मनः प्रदेश इति भवतीति"॥ १४ ॥

तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः[2] ॥ १५ ॥

नित्यमित्यत्र किं तावत्तत्त्वम्? अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्तिर्नित्यत्वम् । तच्चा[3]भावे नोपपद्यते ।

भाक्तं तु भवति । यत्तत्रात्मानमहासीत्, यद् भूत्वा न भवति, न जातु तत्पुनर्भवति तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति । तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किंचिन्नित्यं दृश्यत इत्यव्यभिचार ॥ १५ ॥

यदपि[4]—"सामान्यनित्यत्वादिति", इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति"—

सन्तानानुमानविशेषणात्[5] ॥ १६ ॥

नित्येष्वप्यव्यभिचार इति प्रकृतम् । नेन्द्रिय[6]ग्रहणसामर्थ्याच्छब्दस्यानित्य

---

१ आकाशस्येति । 'आकाशस्य प्रदेश' इत्यत्र यथा प्रदेशरहिते आकाशे प्रदेशास्तिर्नित्यस्यापि तस्यानित्यत्वं व्यनक्ति तादृश्येव नित्येऽपि शब्देऽनित्यत्वोक्तिरिति सम्भाव्यते ।

२ तत्त्वभाक्तयोरित्याक्षेपपरिहारसूत्रम् ।

३ तच्चेति । सत्तासम्बन्ध उभयान्तावच्छिन्नत्वं चेत्यतदुभयमित्यर्थः ।

४ यदपीति चतुर्दशसूत्रोक्तमाक्षेपं परामृशति ।

५ सन्तानेत्यादि सिद्धान्तिसूत्रम् ।

६ न वयमैन्द्रियकत्वेनानित्यत्वं प्रतिपादयामोऽपि तु शब्दस्याभिव्यक्तिं प्रतिषेधाम । नहि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति वार्तिककाराः ।

त्वम्। किं तर्हि? इन्द्रियप्रत्यासत्तिग्राह्यत्वात्[1] सन्तानानुमानम्, तेनानित्यत्व मिति ॥ १६ ॥

यदपि[2] "नित्येष्वप्यनित्यवदुपचाराद् इति"। न—

## कारणद्रव्यस्य[3] प्रदेशशब्देनाभिधानात् ॥ १७ ॥

नित्येष्वप्यव्यभिचार इति। एवमाकाशप्रदेश आत्मप्रदेश इति नात्राकाशात्मनो कारणद्रव्यमभिधीयते, यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते? अविद्यमानता च प्रमाणतोऽनुपलब्धेः। किन्तर्हि तत्राभिधीयते? संयोगस्याव्याप्यवृत्तित्वम्[4]। परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाकाशं व्याप्नोति—अव्याप्य वर्तत इति। तदस्य कृतकेन द्रव्येण सामान्यम्। न ह्यामलकयोः संयोग आश्रयं व्याप्नोति। सामान्यकृता च भक्तिराकाशस्य प्रदेश इति।

अनेनात्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति। परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति।

"कस्मात्[5] पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयत इति?" शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति। तत्र शास्त्रसिद्धान्ततत्त्वावधारणं प्रतिपत्तुमर्हनीति मन्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ॥ १७ ॥

---

१ ऐन्द्रियकत्वं चात्र इन्द्रियप्रत्यासत्तिग्राह्यत्वम्। तेन शब्दस्य सन्तानोऽनुमीयते, स तावद्वृत्तिरतश्चास्य नित्यत्वमिति सूत्रार्थः।

२ यदपीति चतुर्दशसूत्रोक्तमाक्षेपान्तरं परामृशति।

३ कारणद्रव्यस्येत्यादि अभिधानादित्यन्तमेव सूत्रम्। नित्येष्वप्यव्यभिचार इति तु भाष्यग्रन्थ एव सूत्रत्वान्वितः। वृक्षकम्बलादिषु कार्यद्रव्यविषयेषु प्रदेशशब्देन कारणद्रव्यमेवाभिधीयते। तस्य चाकाशादावसम्भवात्तद्गुणिमत्त्वं।

४ अव्याप्येति। शब्द आकाशेऽव्याप्यवृत्तिः आत्मनि च बुद्ध्यादिरिति।

५ कस्मादिति। निष्प्रदेशमाकाशं निष्प्रदेशश्चात्मेत्येतदर्थसाधकं सूत्रमस्तीति प्राश्निकस्य हृदयम्।

समदशसूत्र उभयोरपि प्रतिपादितत्वाद्यं प्रश्न सङ्गच्छत इति कश्चित्। परन्तु 'कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्' इतिसूत्रमाकाशात्मनोः निष्प्रदेशत्वं साधयति सूत्र इति कृत्वैव प्रश्नस्य सङ्गतिः। उक्तामवाप्सङ्गतिमनविचीन मनसि कृत्वा वार्तिककार प्रश्नमन्यथावर्णयाञ्चकार—शब्दसन्तानप्रतिपादने वा न सूत्रमिति प्राश्निकस्य भाव इति।

अथापि खल्विदमस्ति इदं नास्तीति कुत एतत्प्रतिपत्तव्यमिति? प्रमाणत उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः—

## प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥

प्रागुच्चारणान्नास्ति शब्दः। कस्मात्? अनुपलब्धेः। "सतोऽनुपलब्धिरावरणादिभ्यः।" एतन्नोपपद्यते। कस्मात्? आवरणादीनामनुपलब्धिकारणानामग्रहणात्। अनेनावृतः शब्दो नोपलभ्यते असन्निकृष्टश्चेन्द्रियव्यवधानादित्येवमादि अनुपलब्धिकारणं न गृह्यत इति। सोऽयमनुच्चारितो नास्तीति।

"उच्चारणमस्य व्यञ्जकम्। तदभावात्प्रागुच्चारणादनुपलब्धिरिति"॥

किमिदमुच्चारणं नामेति? विवक्षाजनितेन प्रयत्नेन कोष्ठ्यस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः, यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति। संयोगविशेषो वै प्रतिघातः। प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वम्। तस्मान्न व्यञ्जकाभावादग्रहणम्, अपि त्वभावादेवेति। सोऽयमुच्चार्यमाणः श्रूयते, श्रूयमाणश्चाभूत्वा भवतीत्यनुमीयते। ऊर्ध्वं चोच्चारणान्न श्रूयते, स भूत्वा न भवति, अभावान्न श्रूयत इति। कथम्? आवरणाद्यनुपलब्धेरित्युक्तम्। तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १८ ॥

एवं च सति तत्त्वं पांशुभिरिवावकिरन्निदमाह—

## "तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः" ॥ १९ ॥

---

१ अथापीति—अस्य पर्यनुयोगस्य का विषयः। अनुपलभ्यमानास्ति वम्। ये शब्द नित्यमिच्छन्ति त इदमनुयोज्या—इदमस्तीदं नास्तीति एतद्भवन्तः कथं प्रतिपद्यन्त इति। एवमनुयुक्तास्सन्तः प्रतिब्रुवते—प्रमाणत उपलब्धेरनुपलब्धेश्चेति। ततश्चानिष्टप्रसङ्ग इति सूचनाय सूत्रम् प्रागुच्चारणादित्यादि।

अन्यथाऽपि सूत्रावतरणिका वार्तिककार आह।

यच्चोभयपक्षसम्प्रतिपन्नं घटाद्यनित्यत्वेन-तेन चानुया।ज्या—यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते तत्कथमनित्यमिति। एवमनुयुक्ता यदि घटाद्यनित्यत्वे न्यायं प्रतिपद्यन्ते स शब्देऽपीति सूचनार्थं सूत्रम्।

२ तत्त्व उक्ते पूर्वपक्षी जात्या प्रत्यवतिष्ठते तदनुपलब्धेरिति सूत्रेण।

" यद्य[1]नुपलम्भादावरणं नास्ति, आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति–तस्या[2] अभावादप्रतिषिद्धमावरणमिति "।

कथं पुनर्जानीते भवानावरणानुपलब्धिरुपलभ्यत इति ? किमत्र ज्ञेयम्। प्रत्यात्मवेदनीयत्वात् समानम् । अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते नावरणमुपलभ इति,–यथा कुड्येनावृतस्यावरणमुपलभमानः प्रत्यात्ममेव संवेदयते।

सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति[3] ।

एवं च सत्यपहृतविषयमुत्तरवाक्यमस्तीति ॥ १९ ॥

अभ्य[4]नुज्ञावादेन तूच्यते जातिवादिना—

" अ[5]नुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् " ॥ २० ॥

" यथाऽनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति। यद्यभ्यनुजानाति भवान्, अनुपलभ्यमानाप्यावरणानुपलब्धिरस्तीति, अभ्यनुज्ञाय च वदति–नास्त्यावरणमनुपलम्भादिति, एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति " ॥ २० ॥

अ[6]नुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

---

१ यथा आवरणाद्यनुपलब्धिरनुपलभ्यमानाऽप्यस्ति, तथाऽऽवरणमप्यनुपलभ्यमानमप्यस्तीत्यर्थः । आवरणानुपलब्धेस्तावदुपलब्धिर्न सम्भवति, अनुपलब्धिस्वरूपविरोधात् । तस्मादावरणानुपलब्धिरेव वक्तव्या । तथा चावरणानुपलब्धेरभावे सत्यावरणोपलब्धि । तया स्वावरणसद्भाव ज्ञानस्य निरालम्बनत्वायोगादिति हृदयम् ।

२ तस्या इति । आवरणानुपलब्धेरित्यर्थः ।

३ एवञ्चेति सिद्धान्तिन उक्तिः । यद्यावरणानुपलब्धिरुपलभ्यते मानसेन प्रत्यक्षेण तदा नानैकान्तिकत्वं न चावरणसद्भाव इति पूर्वपक्षिण उक्तविंशसूत्रोक्त जात्युत्तरवाक्यमपहृतविषयम्भवतीत्यर्थः ।

४ अभ्यनुज्ञेति । सिद्धान्तिन उक्तिमनुज्ञायापि जातिवादी प्रत्यवतिष्ठतेऽग्रिमेण सूत्रेणेत्यर्थः ।

५ अनुपलम्भादिति जातिवादिनो द्वितीय सूत्रम् । यदि पूर्वोक्तदोषभयाद् नुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति तथाप्यनुपलब्धेरनैकान्तिकत्वं प्रसज्यत इति भाव ।

६ अनुपलम्भात्मकत्वादिति सिद्धान्तिसूत्रम् । अस्यार्थः । 'अनुपलब्धेः' आवरणानुपलब्धेः 'अनुपलम्भात्मकत्वात्' आवरणोपलब्धिनिषेधात्मकत्वात्— 'तदनुपलब्धेरनुपलम्भादिति' उक्तविंशसूत्रोक्तः 'अहेतुः'—आवरणोपपन्नाविति दोषः –असिद्धत्वात् इति ।

यदुपलभ्यते तदस्ति, यन्नोपलभ्यते तन्नास्ति, इति अनुपलम्भात्मकम-सदिति व्यवस्थितम्। उपलब्ध्यभावश्चानुपलब्धिरिति। सेयमभावत्वान्नोपलभ्यते। सच सत्त्वावरणम्। तस्योपलब्ध्या भवितव्यम्। न चोपलभ्यते। तस्मान्नास्तीति। तत्र यदुक्तं—"नावरणानुपपत्तिरनुपलम्भादिति" अयुक्तमिति ॥ २१ ॥

अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद्धेतोः प्रतीजानीते?—

"अस्पर्शत्वात्" ॥ २२ ॥

"अस्पर्शमाकाशं नित्यं दृष्टमिति। तथा च शब्द इति" ॥ २२ ॥

सोयमुभयतः सव्यभिचारः। स्पर्शवांश्चाणुर्नित्यः, अस्पर्शं च कर्मानित्यं दृष्टम्। अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम्—

न, कर्मानित्यत्वात् ॥ २३ ॥

साध्यवैधर्म्येणोदाहरणम्—

नाणुनित्यत्वात् ॥ २४ ॥

उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥ २४ ॥

"अथ तर्हि हेतुः"—

"सम्प्रदानात्" ॥ २५ ॥

"सम्प्रदीयमानमवस्थितं दृष्टम्। सम्प्रदीयते च शब्द आचार्येणान्तेवासिने। तस्मादवस्थित इति" ॥ २५ ॥

---

अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः। यथाजातीयकः शब्दो नित्यस्तथाजातीयकं किञ्चिन्नित्यन्न दृष्टमित्याशयः।

१ 'उपलभ्यत' इति विधिविषयेण प्रमाणेनेति भावः। 'न उपलभ्यते'-निषेध विषयेण प्रमाणेनेति भावः। तस्मादनुपलम्भात्मकं निषेधविषयप्रमाणमिदं असत्—इति स्थितम्।

२ नोपलभ्यते—विधिविषयेण प्रमाणेनेत्यर्थः।

३ अस्पर्शत्वादिति विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नसूत्रम्।

४ न कर्मेति तस्य व्यभिचारप्रदर्शनार्थं सूत्रम्।

५ नाण्विति सिद्धान्तिसूत्रं व्यभिचारान्तरप्रदर्शनार्थम्। अस्पर्शेन कर्मणवोभयतो व्यभिचारे लब्धे नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्वयोरसमव्याप्तिकत्व-निराकरणार्थं द्रष्टव्यम्।

६ सम्प्रदानादिति पूर्वपक्षिसूत्रम्। सम्प्रदीयमानत्वादित्यर्थः।

[1]तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

येन सम्प्रदीयते यस्मै च, तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते ?

सम्प्रदीयमानो ह्यवस्थितः सम्प्रदातुरपैति सम्प्रदानं च प्राप्नोति–इत्यवर्जनीयमेतत् ॥ २६ ॥

“ [2]अध्यापनादप्रतिषेधः ” ॥ २७ ॥

“ अध्यापनं लिङ्गम्। असति सम्प्रदानेऽध्यापनं न स्यादिति ” ॥ २७ ॥

[3]उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥

समानमध्यापनमुभयोः पक्षयोः, संशयानिवृत्तेः[4]। किमाचार्यस्थः शब्दोऽन्तेवासिनमापद्यते तदध्यापनम्, आहोस्विन्नृत्योपदेशवद् गृहीतस्यानुकरणमध्यापनमिति ? एवमध्यापनमलिङ्गं[5] सम्प्रदानस्येति ॥ २८ ॥

“ अथ तर्हि हेतुः ”—

“ [6]अभ्यासात् ” ॥ २९ ॥

“ अभ्यस्यमानमवस्थितं दृष्टम्। पञ्चकृत्वः पश्यतीति रूपमवस्थितं पुनः पुनर्दृश्यते। भवति च शब्देऽभ्यासः,–दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति। तस्मादवस्थितस्य पुनः पुनरुच्चारणमभ्यास इति ” ॥ २९ ॥

नान्यत्वेऽप्य[7]भ्यासस्योपचारात् ॥ ३० ॥

---

१ तदन्तरालेति परिहारसूत्रम्।

२ पञ्चविंशसूत्रोक्तं हेतुं पूर्वपक्षी विशदयति–अध्यापनादिति सूत्रेण।

अयमत्र प्रयोगः—दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्ति, अध्यापनात् गुरुणा शिष्याय दीयमानत्वात् धनुर्वेदविदा आचार्येण शिष्याय दीयमानेष्वादिवत्—इति।

३ उभयोरिति सिद्धान्तिसूत्रम्।

४ सांशयिकत्वादहेतुः पूर्वपक्षोक्तो हेतुरिति सूत्रार्थः।

५ अलिङ्गमिति। सिद्धसाधनत्वात्। वयमपि ब्रूमः आचार्योच्चरितशब्दसन्तानवृत्त्या सम्प्रदानमेतत्, अवस्थाने न हेतुः।

६ पूर्वपक्षी हेत्वन्तरमुपन्यस्यति–अभ्यासादिति सूत्रम्।

७ अनिरपेक्षत्वाभ्यास इत्यनैकान्तिकः अभ्यासस्वरूपानवधारणासिद्धश्च। अभ्यासो ह्येकविषयोऽनेकवारोच्चारणाद् एकाकारविषयो वा। तत्राद्यमभ्यासः एकविषय एकाकारविषयो वेति सन्दिग्धासिद्धिरित्यादि उक्तं हेतुं दूषयति–नान्यत्व इति सूत्रम्।

अनवस्थानेऽप्यभ्यासस्याभिधानं भवति–द्विर्नृत्यतु भवान् , त्रिर्नृत्यतु भवानिति, द्विरनृत्यत्, त्रिरनृत्यत्, द्विरग्निहोत्रं जुहोति, द्विर्भुङ्क्ते । एवं, व्यभिचारात् ॥ ३० ॥

" प्रतिषिद्धहेतावन्यशब्दस्य प्रयोगः प्रतिषिध्यते[1]"—

" अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः " ॥ ३१ ॥

" यदिदमन्यदिति मन्यसे तत् स्वात्मनोऽनन्यत्वादन्यन्न भवति । एवमन्यताया अभावः । तत्र यदुक्तम्–'अन्यत्वेऽप्यभ्यासोपचारात्'–इत्येतद् युक्तमिति " ॥ ३१ ॥

शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

तदभावे[3] नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥

अन्यस्मादनन्यतामुपपादयति भवान्, उपपाद्य चान्यत् प्रत्याचष्टे— अनन्यदिति च शब्दमनुजानाति–प्रयुङ्क्ते चानन्यदिति । एतत् समासपदम् । अन्यशब्दोऽयं प्रतिषेधेन सह समस्यते । यदि चात्रोत्तरं पदं नास्ति कस्यायं प्रतिषेधेन सह समासः ? तस्मात्तयोरन्यानन्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिद्ध्यतीति । तत्र यदुक्तमन्यताया अभाव इत्येतदयुक्तमिति[4] ॥ ३२ ॥

" अस्तु तर्हीदानीं शब्दस्य नित्यत्वम् "—

" विनाशकारणानुपलब्धेश्च[5] " ॥ ३३ ॥

" यदनित्यं तस्य विनाशः कारणाद्भवति । यथा लोष्टस्य कारणद्रव्यविभागात् । शब्दश्चेदनित्यस्तस्य विनाशो यस्मात्कारणाद्भवति तदुपलभ्येत । न चोपलभ्यते । तस्मान्नित्य इति " ॥ ३३ ॥

---

१ प्रतिषिध्यत इति–पूर्वपक्षिणेति शेषः ।

२ यदि 'अन्यत्' नाम जगति भवेत् ततः 'अन्यत्वेऽप्यभ्यासोपचारात्' इत्यनेनानैकान्तिकत्वमुद्भाव्येत । तदेव तु नास्तीति वाक्छलेन प्रत्यवतिष्ठते पूर्वपक्षी– अन्यदिति सूत्रम् ।

३ परिहरति सिद्धान्ती–तदभाव इति सूत्रम् । यदि 'अन्यत्' इति प्रयोगो न सम्भवति तर्हि 'अनन्यत्' इत्यपि न सम्भवत्येवेत्यर्थः ।

४ अयुक्तमिति । न च स्वस्मात् 'अनन्यत्' परस्मादपि 'अनन्यत्' भवितुमर्हति । नहि लोष्टस्य स्वस्मात् 'अनन्यत्' इति परस्मादपि 'अनन्यत्' भवति । अन्यदेव हि लोष्टमन्यस्मादिति परमार्थः ।

५ पूर्वहेतौ निरस्ते पूर्वपक्षी शब्दनित्यतायां हेत्वन्तरमुपन्यस्यति– विनाशेति सूत्रम् ।

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥**[1]

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग एवमश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः । "व्यञ्जकाभावादश्रवणमिति"-चेत्? प्रतिषिद्धं व्यञ्जकम् । अथ विद्यमानस्य निर्निमित्तमश्रवणमिति"-विद्यमानस्य निर्निमित्तो विनाश इति-समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥३४॥

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥**[2]

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः,-यथा यस्माद्विषाणी तस्मादश्व इति । किमनुमानमिति चेत्-सन्तानोपपत्तिः । उपपादितः शब्दसन्तानः-संयोगविभागजाच्छब्दाच्छब्दान्तरं ततोऽप्यन्यत्ततोऽप्यन्यदिति । तत्र कार्यः शब्दः कारणशब्दं निरुणद्धि । प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य[3] शब्दस्य निरोधकः । दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य, श्रवणं दूरस्थेनाप्यसति व्यवधान इति ।

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानोऽविच्छेदेन श्रूयते । तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं सन्तानवृत्ति वाऽभिव्यक्तिकारणं वाच्यं, येन श्रुतिसन्तानो भवतीति । शब्दभेदे[4] चासति श्रुतिभेद उपपादयितव्य इति ।

---

१ अश्रवणेति सिद्धान्तसूत्रम् ।

२ उपलभ्यमान इति सिद्धान्तसूत्रम् । 'अनपदेश' इति अहेतुरित्यर्थः ।

३ प्रतिघातीति । शब्दस्य गुणत्वाद्गुणे च गुणान्तरासम्भवात् तस्य संयोगो वैशेषिकराद्धान्तविरुद्ध इति कृत्वा प्रतिघातिद्रव्यमत्र आकाशमेवेति तात्पर्यकाराः । तथा चायम्-एतदुक्तं भवति । घनतरद्रव्यसंयुक्तं नभो न शब्दसमवायिकारणतां प्रतिपद्यते । ततश्च समवाय्यसमवायिकारणः शब्दो न शब्दान्तरमारभत इति । प्रतिघाति द्रव्यमत्र शब्दनिमित्तकारणीभूतो वायुरेवेति न्यायकन्दलीकाराः ।

४ शब्दभेद इति । नित्यस्य शब्दस्य न स्वाभाविको भेदो नाप्यौपाधिक इत्युपपादितम् । तथा च सति यदि घण्टास्थेन व्यञ्जकेनान्यवृत्तिना वाऽवस्थितेन सन्तानवृत्तिना वा नित्यः शब्दो व्यज्येत तर्हि तार-तारतर-तारतम—मन्द-मन्दतर-मन्दतमादिश्रुतिभेदो न स्यादवश्यायम् । यदि च तारतमादयस्तावन्त एव शब्दा नित्यास्तावन्त एव युगपदेव गृह्येरन् विशेषाभावात् । एको हि व्यञ्जक एव स्थिर इति । घण्टास्थस्य सन्तानवृत्तेः कारणत्वे युक्तं यत् तारतमादिभेदेन कारणभेदात्कार्यभेद इति ।

अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटु मन्दमनुवर्तते। तस्यानुवृत्त्या शब्दसन्तानानुवृत्ति। पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य। तत्कृतश्च श्रुतिभेद इति॥ ३५॥

"न वै निमित्तान्तरं संस्कार उपलभ्यते। अनुपलब्धेर्नास्तीति"।

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः॥ ३६॥[1]

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति। तस्मिंश्च सति शब्दसन्तानो नोपलभ्यते। अतः श्रवणानुपपत्तिः। तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते। तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते। अनुत्पत्तौ श्रुतिविच्छेदः। यथा—प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति। कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः। कांस्यपात्रादिषु पाणिसंश्लेषो[2] लिङ्गं संस्कारसन्तानस्येति। तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति॥ ३६॥

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः॥ ३७॥[3]

यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते, अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते, एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतम्, न तेषां विनाशकारणं भवतोपपाद्यते, अनुपपादनादवस्थानमवस्थानात्

---

१ पाणीति सिद्धान्तिसूत्रम्। अत्र सूत्रार्थे मतभेदः। पाणिरूपस्य शब्दाभावनिमित्तस्य 'प्रश्लेषात्' संयोगात् 'शब्दाभावे' उपलभ्यमाने शब्दाभावकारणस्य 'नानुपलब्धिः' इति केचित्। अन्ये तु 'पाणि'—'रूपनिमित्तस्य 'प्रश्लेष' कार्यत्वरूपसम्बन्धो यत्र स शब्द उत्तरशब्दः, तस्मात् 'शब्दाभावे' शब्दध्वंसे सति —विनाशकारणस्य 'नानुपलब्धिः' इति। प्रथममेव भाष्यसम्मतं प्रतिभाति। तत्र च 'नानुपलब्धिः' इत्यस्य 'संस्कारस्यानुपलब्धिरिति न' इत्येवमन्वयः कार्यः।

२ 'पाणिसंश्लेषः' इति सर्वत्र पाठः। कांस्यपात्रादिषु (१) स्पर्शनेन्द्रियग्राह्यस्य कम्पसन्तानस्य उपरमः, तथा च (२) पाणिसंश्लेषः—इत्येतदुभयमेव संस्कारसन्तानस्य लिङ्गमिति सम्बन्धः।

'पाणिसंश्लेषे' इति पाठे तु—'कांस्यपात्रादिषु पाणिसंश्लेषे सति स्पर्शनेन्द्रियग्राह्यस्य कम्पसन्तानस्य उपरमः संस्कारसन्तानस्य लिङ्गं सूचकं भवतीत्येव' सम्बन्धः कार्यः।

३ विनाशकारणानुपलब्धेरिति त्रयस्त्रिंशसूत्रोक्तं पूर्वपक्षहेतुं प्रत्याचष्टे।

तेषां निरात्वं प्रसज्यत इति। अथ नैवं, न तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३७ ॥

"[1]कम्पसमानाश्रयस्य [2]चानुनादस्य पाणिप्रश्लेषात् कम्पवत् कारणोपरमादभावः। [3]वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैवोपरमः स्यादिति"।

अस्पर्शत्वादप्रतिषेधः ॥ ३८ ॥

यदिदमाकाशगुणः शब्द इति प्रतिषिध्यते, अयमनुपपन्नः–अस्पर्शत्वाच्छब्दाश्रयस्य। रूपादि[4]समानदेशस्याग्रहणे शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते,[5] न कम्पसमानाश्रय इति ॥ ३८ ॥

प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दः समानदेशो व्यज्यत इति नोपपद्यते। कथम्?—

[6]विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥

---

१ भाष्ये प्रत्यवतिष्ठते–कम्पसमानाश्रयस्येत्यादि स्यादित्यन्तम्।

२ अनुवृत्तो नादः शब्दोऽनुनादः।

३ वैयधिकरण्ये हीति। द्रव्यप्रश्लेषे समानाधिकरणस्यैव संस्कारस्योच्छेदः स्यात्, न व्यधिकरणस्य शब्दस्य। व्यधिकरणस्य तूच्छेदाभ्युपगमेऽतिप्रसङ्गः स्यात्। तस्मात्कम्पसन्तानसंस्कारसमानाश्रयः शब्दोऽभ्युपगन्तव्यः। तदनेनाकाशाश्रयत्वं शब्दस्य प्रतिषिद्धमिति हृदयम्।

४ रूपादिसमानदेशस्य–शब्दस्येत्यर्थः।

५ ज्ञायत इति। प्राप्यकारित्वमिन्द्रियाणां व्यवस्थितम्। घण्टाद्याश्रयः शब्दो न श्रोत्रम्प्राप्नोति। स हि प्राप्नुयाद् यदि घण्टा कर्णशष्कुलीमागच्छेत्–कर्णशष्कुली वा घण्टाम्। न चैतदुभयमस्ति। न चाहङ्कारिकमिन्द्रियं व्यापीत्युक्तमेव। तस्माच्छब्दाधारो निःस्पर्शो व्यापी वा आकाशः, तदाधारः शब्दः श्रोत्रमायाति सन्तानवृत्त्येति युक्तम्। तथैव च श्रवणमस्योपपद्यते नान्यथेत्याशयः।

६ विभक्तीति सिद्धान्तिसूत्रम्। रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यम्। तत्र 'समासे' समुदाये स्थित एव शब्दो व्यज्यत इति सांख्यदर्शनम्। तस्मिन् समुदाये सांख्याभिमते 'विभक्त्यन्तरोपपत्तेश्च' न व्यज्यते शब्द इति सूत्रार्थः। विभक्तिश्च विभक्त्यन्तरं चेति 'विभक्त्यन्तरम्'। यदि समुदाये व्यज्येत शब्दः 'विभक्ति' षड्जर्षभगान्धारादिभेदेन–'विभक्त्यन्तरं च'–षड्जजातीयस्यैव तारमन्द्राद्यवान्तरभेदेन नोपपद्येत। तस्माद् 'विभक्त्यन्तरोपपत्तेः' न समासे व्यज्यते शब्दः, अपि त्वाकाशगुण इत्येव साम्प्रतम्।

सन्तानोपपत्तेश्चेति चार्थं । तद्व्याख्यातम् । यदि रूपादय शब्दश्च प्रतिद्रव्य समस्ता समुदितास्तस्मिन् समासे समुदाये यो यथाजातीयक सन्निविष्टस्तस्य यथाजातीयस्यैव ग्रहणेन भवितव्य, शब्दे रूपादिवत् । तत्र योऽयं विभाग –एकद्रव्ये नानारूपा भिन्नश्रुतयो[1] विधर्माण शब्दा अभिव्यज्यमाना श्रूयन्ते, यच्च विभागान्तर[2]–सरूपा समानश्रुतय सधर्माण शब्दास्तीव्रमन्दधर्मतया भिन्ना श्रूयन्ते,–तदुभय नोपपद्यते । नानाभूतानामुत्पद्यमानानामय धर्मो नैकस्य व्यज्यमानस्येति । अस्ति चाय विभागो विभागान्तर च । तेन विभागोपपत्तेर्मन्यामहे न प्रतिद्रव्य रूपादिभि सह शब्द सन्निविष्टो व्यज्यत इति ॥ ३९ ॥

( ३ ) शब्दपरिणामप्रकरणम् ।

द्विविधश्चाय[3] शब्दो वर्णात्मको ध्वनिमात्रश्च । तत्र वर्णात्मनि तावत्–

**विकारादेशोपदेशात्संशयः ॥ ४० ॥**

" दध्यत्रेति " केचिद् इकार इत्व हित्वा यत्वमापद्यत इति विकार[4] मन्यन्ते । केचिदिकारस्य प्रयोगे विषयकृते यदिकार स्थानं जहाति तत्र यकारस्य प्रयोग ब्रुवते । संहिताया विषये इकारो न प्रयुज्यते, तस्य स्थाने यकार प्रयुज्यते, स आदेश इति । उभयमिदमुपदिश्यते । तत्र न ज्ञायते[5] किं तत्त्वमिति ?

---

१ भिन्नश्रुतय इति । षड्जादिरूपा इत्यर्थ ।

२ विभागान्तरमिति–षड्जस्यैव तारमन्द्राद्यवान्तरभेदेन याद्वय ।

३ तदेव रूपादिसन्निविष्ट शब्दो व्यज्यत इति साङ्ख्यमते दूषिते स एव साङ्ख्यो वर्णेषु प्रकृतिविकारभावधते मृत्सुवर्णादिवत् परिणामि नित्या वर्णा इति यदि प्रत्यवतिष्ठते तत्र परीक्षामारभते–द्विविध इति । ' वर्णात्मक अकारादि, ' ध्वनिमात्र ' शङ्खादिनिमित्त ।

४ विकार इति । विकारो हि नाम न बौद्धनयवत् पूर्वस्य निरन्वयनिवृत्तावुत्तरस्य प्रादुर्भाव साङ्ख्यस्य विवक्षित –किन्त्ववस्थितस्यैव धर्मिण पूर्वधर्मतिरोभावे धर्मान्तरस्याविर्भाव । न चकारस्य धर्मस्य धर्मी कश्चिदुपलम्भगोचरो य इकारधर्मनिवृत्तावप्यनुवृत्ताकारतया परिणमेत ।

५ न ज्ञायत इति । इका यणश्चास्यत्र उक्तन्यायेनानुविप्रतिपत्ते संशय । तथा परीक्ष्य तत्त्वमवधारयितुम् ।

आदेशोपदेश[1]स्तत्त्वम् ।

विकारोपदेशे ह्यन्वयस्याग्रहणाद्विकारानुमानम् । सत्यन्वये किञ्चिन्निवर्तते किञ्चिदुपजायत इति शक्येत विकारोऽनुमातुम् । न चान्वयो गृह्यते । तस्माद्विकारो नास्तीति ।

भिन्नकरणयोश्च[2] वर्णयोरप्रयोगे प्रयोगोपपत्तिः । विवृतकरण इकार ईषत्स्पृष्टकरणो यकारः । ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ । तयोरेकस्याप्रयोगेऽन्यस्य प्रयोग उपपन्न इति ।

अविकारे[3] चाविशेषः । यत्रेमाविकारयकारौ न विकारभूतौ–यतते, यच्छति, प्रायंस्त इति, इकार, इदमिति च, यत्र च विकारभूतौ–इष्ट्वा, दध्याहरेति,–उभयत्र प्रयोक्तुरविशेषो यत्नः, श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः ।

प्रयुज्यमाना[4]ग्रहणाच्च । न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते । किं तर्हि ? इकारस्य प्रयोगे यकारः प्रयुज्यते । तस्मादविकार इति ।

अविकारे च[5] न शब्दान्वाख्यानलोपः । न विक्रियन्ते वर्णा इति–न[6] चैतस्मिन्पक्षे शब्दान्वाख्यानस्यासम्भवो येन वर्णविकारं प्रतिपद्येमहीति ।

---

१ आदेशोपदश इति । सुवर्णजातीया स्वावयवा अन्यतमव्यूहपरित्यागेनान्यतमव्यूहमापद्यमानाः 'रुचक' इति वा 'वर्धमान' इति वा परिणमन्ते । अस्ति हि तेषु सर्वेषु सुवर्णजातीयानामवयवानामनुगमः । न तु यकारे इकारस्य वा तदारम्भकस्य वाऽवयवस्यानुगममीक्षामहे । तस्माद्विकाराभावादादेशपक्षस्य निश्चितम् ।

२ उपपत्त्यन्तरं चाविकारे दर्शयति–भिन्नकरणयोरिति । यदि हि इकारविकारो यकारः स्याद् यकारप्रयोगाय इकारमुपाददानास्तत्कारणं विवृतकरणं पूर्वमुपाददीरन् । नचैतदपेक्षास्तु यकारप्रयोक्तारः ईषत्स्पृष्टकरणमुपाददते । तस्मान्नेकारविकारो यकार इति युक्तमुत्पश्यामः ।

३ उपपत्त्यन्तरमाह–अविकार इति ।

४ प्रयुज्यमानेति । यथा हि क्षीरं कालविपाकापेक्षं दधि भवत् दृश्यते, न तथा इकारो यकारो भवन्निरर्थः ।

५ यदि न विकारः कथन्तर्हि शब्दान्वाख्यानम्–इको यणचीत्यत आह–अविकारे चेति ।

६ न चैतस्मिन्निति । इकः प्रयोगप्रसङ्गे संहितायां यणः प्रयोगमाह सूत्रम्, न पुनरिग्विकारं यणमित्यर्थः ।

न खलु वर्णस्य वर्णान्तरं कार्यम्। न हि इकाराद्यकार उत्पद्यते, यकाराद्वा इकारः। पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णाः। तेषामन्योऽन्यस्य स्थाने प्रयुज्यत इति युक्तम्।

एतावच्चैतत्परिणामो विकारः स्यात् कार्यकारणभावो वा। उभयं च नास्ति। तस्मान्न सन्ति वर्णविकाराः।

वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः। 'अस्तेर्भूः' 'ब्रुवो वचि' रिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं, शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते, तथा वर्णस्य वर्णान्तरमिति ॥ ४० ॥

इतश्च न सन्ति विकाराः—

## प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४१ ॥

प्रकृत्यनुविधानं विकारेषु दृष्टम्। यकारे ह्रस्वदीर्घानुविधानं नास्ति, येन विकारत्वमनुमीयेत इति ॥ ४१ ॥

## "न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः" ॥ ४२ ॥

"द्रव्यविकारा न्यूनाः समाः अधिकाश्च गृह्यन्ते। तद्वदयं विकारो न्यूनः स्यादिति" ॥ ४२ ॥

१ ननु मा भूद्विकारः, परिणामोऽर्थान्तरन्तु भविष्यति ततो नित्या वर्णा भविष्यन्तीत्यत आह—एतावच्चैतदिति।

२ उभयमिति। इगनपेक्षस्य यणो निष्पत्तेर्न तयोः कार्यकारणभावः। तदभावे च न परिमाणादिसम्भव इत्यर्थः।

३ इकोयणचीति सूत्रमादेशोपदेश एव न विकारोपदेश इत्यत्र हेत्वन्तरम्—वर्णसमुदायेति। एव ह्यत्र प्रयोगः। योऽयमिकः स्थाने संहितायां यण् उपदिश्यते नासौ तस्य विकारः, ततो वर्णानिरिक्तत्वात्, 'अस्तिस्थाने प्रयुक्त'भू'वत्—इति।

४ अनुमीयत इति। महद्भिः खलु तूलपिण्डैरारब्धः स्थूलः पिण्डः, अल्पैरारब्धो महानल्प इति दृष्टम्। तद्वदिहापि दीर्घकारविकारस्य यकारस्य ह्रस्वेकारविकाराद् भवितव्यं विशेषेण। न चास्ति विशेषः। तस्मान्न प्रकृतिविकृतिभावः।

५ न्यूनेत्याक्षेपसूत्रम्। अल्पेन न्यग्रोधबीजेनारब्धो न्यग्रोधतरुर्महान्। ततोऽतिमहता वा नारिकेलबीजेनारब्धो नारिकेलतरुस्तदपेक्षयाऽल्पः। नारिकेलबीजैरेव परम्परापेक्षया समैरारब्धः सम इति।

**द्विविधस्यापि[1] हेतोरभावादसाधनं दृष्टान्तः ॥ ४३ ॥**

अत्र नोदाहरणसाधर्म्याद्धेतुरस्ति, न वैधर्म्यात्।

अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति।

प्रतिदृष्टान्ते चानियमः प्रसज्येत। यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति, एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति। न चात्र नियमहेतुरस्ति—दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥ ४३ ॥

द्रव्यविकारोदाहरणं च—

**न[2], अतुल्यप्रकृतीनां विकारविकल्पात् ॥ ४४ ॥**

अतुल्यानां[3] द्रव्याणां प्रकृतिभावो विकल्पते, विकाराश्च प्रकृतीरनुविधीयन्ते। न त्विवर्णमनुविधीयते यकारः। तस्मादनुदाहरणं द्रव्यविकार इति ॥ ४४ ॥

**"द्रव्य[4]विकारवैषम्यवद्वर्णविकारविकल्पः" ॥ ४५ ॥**

"यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम्, एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति" ॥ ४५ ॥

---

१ द्विविधस्येत्यादिपरिहारसूत्रम्।

न्यूनसमाधिकोपलब्धेरिति साधनन्न भवितुमर्हति। दृष्टान्तसाधर्म्येण दृष्टान्तवैधर्म्येणोभयविधस्यापि हेतोरभावात् प्रतिदृष्टान्तस्य च सम्भवात्—इति परिहाराशयः।

२ यदि च न्यूनसमाधिकोपलब्धेरिति न साधनमपि तु सिद्धान्तोक्तहेतोरनैकान्तिकत्वोद्भावनं तदा तत्र परिहारसूत्रम्—नातुल्येत्यादि।

३ अतुल्यायाः प्रकृतेर्विकारा विकल्पन्ते, अथ च विकाराः प्रकृतिभेदमनुविधीयन्ते। तद्यथा न्यग्रोधबीजं न्यग्रोधवृक्षस्य प्रकृतिरथ च न्यग्रोधबीजान्न्यग्रोधवृक्ष एव जायते न नारिकेलवृक्षः। एतदेव च प्रकृत्यनुविधानं सिद्धान्तिनोक्तम्—न पुनः प्रकृतिवृद्धिह्रासाभ्यां विकृतिवृद्धिह्रासाविति।

४ द्रव्यविकार इत्याक्षेपसूत्रम्।

न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः। द्रव्यत्वेन तुल्यत्वेऽपि प्रकृतीनां विकारवैषम्यदर्शनात्। एवं वर्णत्वेन तुल्यत्वेऽपि विकारवैषम्यं भवितुमर्हतीति दूषकस्य हृदयम्।

## ने, विकारधर्मानुपपत्तेः ॥ ४६ ॥

अयं विकारधर्मो द्रव्यसामान्ये–यदात्मक द्रव्य, मृद्वा सुवर्णं वा, तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते व्यूहान्तर चोपजायते, तं विकारमाचक्षते। न वर्णसामान्ये कश्चिच्छब्दात्माऽन्वयी य इत्वं जहाति यत्व चापद्यते। तत्र यथा सति द्रव्यभावे विकारवैषम्ये नाऽनड्डुहोऽश्वो विकारो विकारधर्मानुपपत्ते, एवमिवर्णस्य न यकारो विकारो विकारधर्मानुपपत्तेरिति ॥ ४६ ॥

इतश्च न सन्ति वर्णविकारा —

## विकारप्राप्तानामपुनरापत्तेः ॥ ४७ ॥

अनुपपन्ना पुनरापत्ति । कथम्? पुनरापत्तेरननुमानादिति। इकारो यकारत्वमापन्न पुनरिकारो भवति, न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति ॥ ४७ ॥

## "सुवर्णादीना पुनरापत्तेरहेतुः" ॥ ४८ ॥

"अननुमानादिति न। इद ह्यनुमानम्—

सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्व हित्वा पुन कुण्डलत्वमापद्यते। एवमिकारोऽपि यकारत्वमापन्न पुनरिकारो भवतीति" ॥ ४८ ॥

व्यभिचारादननुमानम्। यथा पयो दधिभावमापन्न न पुन पयो भवति, एव वर्णाना न पुनरापत्ति। अथ सुवर्णवत् पुनरापत्तिरिति? सुवर्णोदाहरणोपपत्तिश्च—

---

१ आक्षेपव्याख्यानसूत्रम्—न विकारेति।

२ सिद्धान्तपोषक सूत्रम्—विकारेति। नो खलु क्षीरविकारो दधि पुन क्षीर भवद् दृष्टमिति भाव।

३ अननुमानादिति। प्रमाणाभावादित्यर्थ।

४ आक्षेपसूत्रम्—सुवर्णादीनामिति। विकारेत्यादि सिद्धान्तयुक्तोऽसद्धेतुरित्यर्थ। विकारप्राप्तानामपि पुनरापत्तिदर्शनादनेकान्त इत्याशय।

५ पूर्वपक्षयुक्तहतो साधनपक्षे तद्दूषणम्—व्यभिचारादिति।

६ तस्यैव सिद्धान्तदूषणमात्रत्वे तदुत्तरम्—अथ सुवर्णवदित्यादि।

७ ये सुवर्णजातीया अवयवा रुचकत्वमापन्नास्त एव पूर्वव्यूहपरित्यागेन वर्धमानतामापन्ना पुना रुचकत्वमापद्यन्ते, तदवयवानान्तत्र प्रत्यभिज्ञायमानत्वात्। न

## न—तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४९ ॥

अवस्थितं सुवर्णं हीयमानेन धर्मेणोपजायमानेन च धर्मेण धर्मि भवति। नैव कश्चिच्छब्दात्मा हीयमानेन इत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते। तस्मात्सुवर्णोदाहरणं नोपपद्यते इति।

"वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेध —

वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति, यथा सुवर्णविकार सुवर्णत्वमिति"॥

सामान्यवतो धर्मयोगो न सामान्यस्य—

कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य। एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ? वर्णत्वं सामान्यं, न तस्येमौ धर्मौ भवितुमर्हत। न च निवर्तमानो धर्म उपजायमानस्य प्रकृति। तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ४९ ॥

इतश्च वर्णविकारानुपपत्ति —

## नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥ ५० ॥

नित्या वर्णा इत्येतस्मिन्पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद्विकारानुपपत्ति। नित्यत्वेऽविनाशित्वात् क कस्य विकार इति। अथानित्या वर्णा इति पक्ष, एवमप्यनवस्थानं वर्णानाम्। "किमिदमनवस्थानं वर्णानाम्"? उत्पद्य निरोध। उत्पद्य निरुद्धे इकारे यकार उत्पद्यते, यकारे चोत्पद्य निरुद्धे

---

स्थितेकारो यकारानुगत इकारयकारानुगतो वाऽस्य कश्चिद्धर्मी दृश्यते य इत्वम्परित्यज्य यत्वमाद्यते। वर्णत्वमनुगतमपि न धर्मि किन्तु धर्म एव। वर्णत्वस्य हि धर्मित्वे इको यणचीति नियमो न स्यात्, वर्णत्वस्य पञ्चाशत्साधारणत्वात्। न च निवर्तमान इकारो यकारस्य धर्मो भवितुमर्हति धर्मधर्मिणो समानकालत्वादिति सद्वेपार्थ।

१ न तद्विकाराणामिति सिद्धान्तिसूत्रम्।

२ वर्णत्वाव्यतिरेकादित्याक्षेपभाष्यम्।

३ सामान्यवत इति परिहारभाष्यम्।

४ नित्यत्व इति सिद्धान्तिसूत्रम्।

इकार उत्पद्यते—क कस्य विकार ? तदेतदवगृह्य सन्धाने सन्धाय चावग्रहे वेदितव्यमिति ॥ ५० ॥

"नित्यपक्षे तु तावत्समाधि "—

**"नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः" ॥ ५१ ॥**

'नित्या वर्णा न विक्रियन्ते इति विप्रतिषेध । यथा नित्यत्वे सति किञ्चिदतीन्द्रिय किञ्चिदिन्द्रियग्राह्यम्, इन्द्रियग्राह्याश्च वर्णा, एव नित्यत्वे सति किञ्चिन्न विक्रियते वर्णास्तु विक्रियन्त " इति ।

विरोधादहेतुस्तद्धर्मविकल्प । नित्य नोपजायते नापैति । अनुपजनापायधर्मक नित्यम्, अनित्य पुनरुपजनापाययुक्तम् । न चान्तरेणोपजनापायौ विकार सम्भवति । तद्यदि वर्णा विक्रियन्ते, नित्यत्वमेषा निवर्त्तते । अथ नित्या, विकारधर्मत्वमेषा निवर्त्तते । सोऽय विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥ ५१ ॥

अनित्यपक्षे समाधि —

**'अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः" ॥५२॥**

"यथाऽनवस्थायिना वर्णाना श्रवण भवत्येवमेषा विकारो भवतीति "।

---

१ ननु दध्यत्रेति प्रयोगे कदा इकारस्याल्पद्य निरोध इत्यत आह—तदेतदिति । 'अवग्रह ' असहिता । 'दधि—अत्र इति उच्चाय दध्यत्रेत्युच्चायते । दध्यत्रेति वा सन्धाय दधि—अत्रेत्यवगृह्यत । अयमेव चकारस्याल्पद्य निराध इत्याशय ।

२ समाधिरिति । शब्दनित्यतावादिन इति शेष ।

३ नित्यानामित्यादि जात्युत्तररूप सूत्रम् ।

४ विक्रियन्त इति । यथा हि सत्यपि नित्यत्वे केचिदतीन्द्रिया —यथा परमाण्वाकाशादय, केचिदिन्द्रियका यथा गोत्वादय, एव सत्यपि नित्यत्व परमाण्वाकाशादयो न प्रकृतिविकारभूता वर्णास्तु प्रकृतिविकारभावमापत्स्यन्ते नित्या अपीति हृदयम् ।

५ सेय विकल्पसमा जातिरित्याह—विरोधादिति । न खल्वैन्द्रियकत्वानैन्द्रियकत्वाभ्यामस्ति कश्चिन्नित्यत्वस्य विरोध । प्रकृतिविकारभावेन त्वस्ति विरोधो नित्यत्वस्य । न हि सम्भवति कार्य च नित्य चेत्यर्थ ।

६ अनित्यपक्षे जात्युत्तर पूर्वपक्षिण —अनवस्थायित्व इति सूत्रम् ।

७ यथेति । यथा सत्यप्यनवस्थायित्व वर्णा इन्द्रियेण सम्बध्य स्वविषय ज्ञान जनयन्ति—एव विकारमपि करिष्यन्तीति हृदयम् ।

असम्बन्धादसमर्थाऽर्थप्रतिपादिका वर्णोपलब्धिर्न विकारेण सम्बन्धाद्- समर्था, या गृह्यमाणा वर्णविकारमर्थमनुमापयेदिति। तत्र यादृगिद-यथा गन्धगुणा पृथिव्येव शब्दसुखादिगुणापीति-तादृगेतद्भवतीति। न च वर्णोप- लब्धिर्वर्णनिवृत्तौ वर्णान्तरप्रयोगस्य निवर्तिका। योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगो-यद्यय वर्णोपलब्ध्या निवर्त्तेत तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यते इति गृह्येत। तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ॥ ५२ ॥

## विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चा- प्रतिषेधः ॥ ५३ ॥

तद्धर्मविकल्पादिति न युक्त प्रतिषेध । न खलु विकारधर्मक किञ्चि- न्नित्यमुपलभ्यत इति। वर्णोपलब्धिवदिति न युक्त प्रतिषेध । अवग्रहे हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा तत सहिताया प्रयुङ्क्ते-दध्यत्रेति। चिरनिवृत्ते चायमिवर्णे यकार प्रयुज्यमान कस्य विकार इति प्रतीयते? कारणाभावान् कार्याभाव इति अनुयोग प्रसज्यत इति ॥ ५३ ॥

इतश्च वर्णविकारानुपपत्ति --

## प्रकृत्यनियमात् ॥ ५४ ॥

---

१ सय साधर्म्यसमा जातिरित्याह-असम्बन्धादिति। कतिपयक्षणावस्थानेन वर्णाना क्षणिकानामपि स्वविषयज्ञानहेतुभावो युज्यते। अवगृह्य चिर स्थित्वा यदा सन्धीयते-सन्धाय वा चिर स्थित्वा यदाऽवगृह्यते-तदा वर्णानामनित्याना न तावन्त कालमवस्थानमस्तीति नोपलब्धिहेतुत्वेन विकारकर्तृत्व वर्णाना तुल्यम्। तस्मात्- असम्बन्धात् असमर्था वर्णोपलब्धि वर्णविकारप्रतिपादने इत्याशय ।

२ एव ह्यत्र वाक्यान्वय । या वर्णोपलब्धि वर्णविकारमनुमापयेत् ( सा ) विकारेण न-सम्बद्धा ( सती ) असमर्था-इति ।

३ एतदिति जात्युत्तर परामृशति ।

४ ननु मा भूद्वर्णोपलब्धिर्वर्णविकारेण साक्षात्सम्बद्धा-आदर्शविराधितया तु तन्निवृत्त्या पारिशेष्याद् विकार साधयिष्यति-इत्यत आह-न च वर्णेति ।

५ तदेव जात्युत्तरमुत्थितमेव मारित भाष्यकारेण। तत्रैवार्थे सूत्रम्-विकार धर्मित्व इति ।

६ प्रकृतीति सिद्धान्तिसूत्रम् ।

प्रकृत्यनियमादिति। क्षीरजातीयस्य दधिजातीयो विकारः। न पुन कदा चिदपि दधिजातीयस्य क्षीरजातं वा विकारा उपलभ्यन्ते। इह तु यथा इकारजातं यस्य

इकारस्थाने यकार श्रूयते यकारस्थाने खल्विकारो विधीयते–विध्यति। तद्यदि स्यात् प्रकृतिविकारभावो वर्णानां, तस्य प्रकृतिनियमः स्यात्। दृष्टो विकारधर्मित्वे प्रकृतिनियम इति ॥ ५४ ॥

"अनियमे[1] नियमान्नानियमः" ॥ ५५ ॥

"योऽयं प्रकृतेरनियम उक्त स नियतो यथाविषयं व्यवस्थितो नियतत्वान्नियम इति भवति। एवं सत्यनियमो नास्ति। तत्र यदुक्तं "प्रकृत्यनियमादित्येतदयुक्तमिति" ॥ ५५ ॥

नियमानियमविरोधादनियमे[2] नियमाच्चाप्रतिषेधः ॥ ५६ ॥

नियम इत्यत्रार्थाभ्यनुज्ञा, अनियम इति तस्य प्रतिषेध। अनुज्ञात निषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति। अनियमश्च नियतत्वान्नियमो न भवतीति नात्रार्थस्य[3] तथाभाव प्रतिषिध्यते। किं तर्हि? तथाभूतस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते। सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ॥ ५६ ॥

न चेयं[4] वर्णविकारोपपत्ति परिणामात् कार्यकारणभावाद्वा। किं तर्हि?–

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥ ५७ ॥

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थ[5]। स भिद्यते गुणान्तरापत्ति—उदात्तस्यानुदात्त इत्येवमादि। उपमर्दो[6] नाम—एकरूपनिवृत्तौ रूपान्तरोपजन। ह्रासो–दीर्घस्य ह्रस्व। वृद्धिर्ह्रस्वस्य दीर्घ., तयोर्वा

---

यकारजातीयो विकारो दध्यत्रेति दृश्यते–एव यकारजातीयस्यापि विकार इकारजातीयो दृश्यते। यथा व्यधिधातोयकारस्य इकारो विध्यतीत्यत्र। तदेवमनियमान्न प्रकृति विकारभाव इति।

१ छलवादी प्रत्यवतिष्ठते–अनियमे इति सूत्रम्।

२ नियमानियमेत्यादि सूत्रमुक्तस्य वाक्छलत्वमापादयति।

३ नात्रार्थस्येति। नियमानियमसामानाधिकरण्य हि विरुध्यते, न त्वाधाराधेयभाव इति भाव।

४ तदेवं प्रकृतिविकारभाव निराकृत्य शब्दाना विकारवचनव्यक्तिमादेशपक्षे समर्थयते—न चेयमिति।

५ एकस्याप्रयोगेऽन्यस्य प्रयोगो विकार इति सामान्यलक्षणमभिप्रेतम्।

६ उपमर्द इति—यथा अस्तेर्भूः।

प्लुत । लेशो—लाघवम्, स्त इत्यस्तेर्विकार । श्लेष—आगम , प्रकृते प्रत्ययस्य वा । एत एव विशेषा विकारा इति, एत एवादेशा । एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५७ ॥

(४) शब्दशक्तिपरीक्षाप्रकरणम् ।

**ते विभक्त्यन्ताः पदम् ॥ ५८ ॥**

यथादर्शन विकृता वर्णा विभक्त्यन्ता पदसंज्ञा भवन्ति । विभक्तिर्द्वयी-नामिक्याख्यातिकी च । 'ब्राह्मण ' 'पचती 'त्युदाहरणम् ।

"उपसर्गनिपातास्तर्हि न पदसंज्ञा । लक्षणान्तर वाच्यम्" इति ।

शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोप तयो पदसंज्ञार्थमिति । पदेनार्थसम्प्रत्यय इति प्रयोजनम्, नामपद चाधिकृत्य परीक्षा । गौरिति पदं खल्विदमुदाहरणम् ॥ ५८ ॥

तदर्थे——

**व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ॥ ५९ ॥**

अविनाभाववृत्ति सन्निधि । अविनाभावेन वर्तमानासु व्यक्त्याकृति जातिषु गौरिति प्रयुज्यते । तत्र न ज्ञायते किमन्यतम पदार्थ उत सर्व इति ॥ ५९ ॥

"शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणम् । तस्मात्–

**"याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्यपचयवर्णसमासानुबन्धाना व्यक्तावुपचाराद्व्यक्तिः" ॥ ६० ॥**

"व्यक्ति पदार्थ । कस्मात्? याशब्दप्रभृतीना व्यक्तावुपचारात् । उपचार प्रयोग । या गौस्तिष्ठति, या गौर्निषण्णेति नेद वाक्य जातेरभिधायकम-

१ लेश इति । यथा स्त इत्यत्र अस्तेरकारलोपे सकारमात्रस्य लेशस्यैक देशस्य व्यवस्थापनम् ।

२ तदेव वर्णानामनित्यता प्रतिपाद्य शब्दप्रामाण्योपयोगि पद निरूपयति—ते विभक्त्यन्ता पदमित्यादिप्रकरणेन ।

सवमेतत्प्रकरण स्फोटवाद लक्षीकृत्यायातम् । स च वादस्तस्य खण्डनञ्च सविस्तर तात्पर्यटीकायामुक्तस्तत एवानुसन्धेयम् ।

३ यथादर्शनमिति । यथाप्रमाणमित्यर्थ । गुणान्तरापत्त्यादिभिरादेशरूपेण विकृता , ननु प्रकृतिविकारभावेन, तस्य प्रमाणबाधितत्वादित्याशय ।

४ याशब्दइत्यादिसूत्र व्यक्तिवादमुत्थापयति ।

भेदात् । भेदात्तु द्रव्याभिधायकम्। गवां समूह इति भेदाद्द्रव्याभिधानम्, न जातेरभेदात् । वैद्याय गां ददातीति द्रव्यस्य त्यागो, न जातेरमूर्तत्वात्, प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रह –स्वत्वेनाभिसम्बन्ध । कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति–द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इति उपपन्नम् । अभिन्ना तु जातिरिति । सङ्ख्या–दश गावो विंशतिर्गाव इति–भिन्न द्रव्य सङ्ख्यायते, न जातिरभेदादिति । वृद्धि –कारणवतो द्रव्यस्यावयवोपचय , अवर्द्धत गौरिति । निरवयवा तु जातिरिति । एतेनापचयो व्याख्यात । वर्ण –शुक्ला गौ कपिला गौरिति द्रव्यस्य गुणयोगो न सामान्यस्य। समास –गोहित गोसुखमिति द्रव्यस्य सुखादियोगो न जातेरिति । अनुबन्ध –सरूपप्रजननसन्तानो, गौर्गां जनयतीति । तदुत्पत्तिधर्मत्वाद् द्रव्ये युक्त, न जातौ, विपर्ययादिति । द्रव्यं व्यक्तिरिति हि नार्थान्तरम् " ॥ ६० ॥

अस्य प्रतिषेध —

न, तदनवस्थानात् ॥ ६१ ॥

न व्यक्ति पदार्थ । कस्मात्? अनवस्थानात् । याशब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दार्थ । या गौस्तिष्ठति या गौर्निषण्णेति न द्रव्यमात्रमविशिष्ट जात्या विनाऽभिधीयते । किं तर्हि? जातिविशिष्टम् । तस्मान्न व्यक्ति पदार्थ । एवं समूहादिषु द्रष्टव्यम् ॥ ६१ ॥

यदि न व्यक्ति पदार्थ कथ तर्हि व्यक्तावुपचार इति? निमित्तादतद्भावेऽपि तदुपचार । दृश्यते खलु—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६२ ॥**

अतद्भावेऽपि तदुपचार इति–अतच्छब्दस्य तेन शब्देनाभिधानमिति । सहचरणात्–यष्टिका भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति । स्थानात्–मञ्चा क्रोशन्तीति मञ्चस्था पुरुषा अभिधीयन्ते । तादर्थ्यात्–कटा-

१ अभेदादिति । एकैव जातिस्तस्या विशेषणमनर्थकमिति भाव ।

२ विपर्ययादिति । अनुत्पत्तिधर्मकत्वाज्जातेरित्यर्थ ।

३ न तदनवस्थानादिति सूत्र व्यक्तिवाद दूषयति ।

४ या शब्दस्यायपर दूषण व्यक्तिवादस्य ।

र्थेषु वीरणेषु व्यूह्यमानेषु कट करोतीति भवति। वृत्तात्–यमो राजा कुबेरो राजेति तद्वद्वर्त्तत इति। मानात्–आढकेन मिता सक्तव आढकसक्तव इति। धारणात्–तुलाया धृत चन्दन तुलाचन्दनमिति। सामीप्यात्–गङ्गाया गाव श्चरन्तीति देशोऽभिधीयते सन्निकृष्ट। योगात्–कृष्णेन रागेण युक्त शाटक कृष्ण इत्यभिधीयते। साधनात्–अन्न प्राणा इति। आधिपत्यात्–अय पुरुष कुलम्, अय गोत्रमिति।

तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति॥ ६२॥

"यदि गौरित्यस्य पदस्य न व्यक्तिरर्थोऽस्तु तर्हि"—

"[1]आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" ॥ ६३॥

"आकृति पदार्थ। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धे। सत्त्वावयवाना तदवयवाना च नियतो व्यूह आकृति। तस्या गृह्यमाणाया सत्त्वव्यवस्थान सिध्यति–अय गौरयमश्व इति, नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थान सिद्ध्यति त शब्दोऽभिधातुमर्हति। सोऽस्यार्थ इति"।

नैतदुपपद्यते। यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते–गौरिति। न चावयवव्यूहस्य जात्या योग। कस्य तर्हि? नियतावयवव्यूहस्य द्रव्यस्य। तस्मान्नाकृति पदार्थ॥ ६३॥

"अस्तु तर्हि जाति पदार्थ"—

"[2]व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीना मृद्गवके, जातिः" ॥ ६४॥

"जाति पदार्थ। कस्मात्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति। गा प्रोक्षय, गामानय, गा देहीति नैतानि मृद्गवके प्रयुज्यन्ते। कस्मात्? जातेरभावात्। अस्ति हि तत्र व्यक्ति, अस्त्याकृति। यदभावात्तत्रासम्प्रत्यय स पदार्थ इति"॥ ६४॥

[3]नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः॥ ६५॥

---

[1] आकृतिरिति सूत्रमाकृतिवादमुपस्थापयति।

[2] व्यक्त्याकृतीति सूत्र जातिवादमुपस्थापयति।

[3] नाकृतीति सूत्रमाकृतिवाद निराकरोति—आकृतरेव प्रधानत्वात्। किन्तत् प्रधानत्वम्? आकृतिविशेषणत्व व्यक्ते। यस्माद्व्यक्त्या विशेष्यमाणा आकृति जातेर्लिङ्ग भवति तस्मात्सैव प्रधानमिति तस्या एव प्राक् निराकरणम्।

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते। नागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्र शुद्ध गृह्यते। तस्मान्न जाति पदार्थ इति ॥ ६५ ॥

न वै पदार्थेन न भवितु शक्यम्। क खल्विदानीं पदार्थ इति?—

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६६ ॥

तुशब्दो विशेषणार्थ। किं विशिष्यते? प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति। यदा हि भेदविवक्षा विशेषगतिश्च, तदा व्यक्ति प्रधानमङ्गन्तु जात्याकृती। यदा तु भेदोऽविवक्षित सामान्यगतिश्च, तदा जाति प्रधानमङ्ग तु व्यक्त्याकृती। तदेतद्बहुल प्रयोगेषु। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्य ॥ ६६ ॥

"कथ पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति?" लक्षणभेदात्। तत्र तावत्—

व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६७ ॥

व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति। न सर्वं द्रव्य व्यक्ति। यो गुण विशेषाणा स्पर्शान्ताना गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिन परिमाणस्याश्रयो यथासम्भव तद् द्रव्यं, मूर्ति मूर्च्छितावयवत्वादिति ॥ ६७ ॥

---

१ तदेव व्यक्त्याकृतिजातीनामन्यतमाभिधाननियमस्थिराकृत्यानियमाभिधान सिद्धान्तमाह—व्यक्त्याकृतिजातय इति सूत्रेण। स्पष्ट सविस्तर च प्रतिपादितोऽय सिद्धान्तस्तात्पर्यटीकायाम्। व्यक्त्याकृतिजातयस्तिस्र एवास्माक पदार्थ। गुण प्रधानभावस्तु कस्यचित्कचिदेवेति परिस्फुटार्थ।

२ उत्प्रेक्षितव्य इति। स्वयमुत्प्रेक्षणीय इत्यर्थ। यथा पिष्टकमय्यो गाव क्रियन्तामित्यत्र।

३ न सर्वमिति। यत्र हि व्यक्त्याकृतिजातीना समावेशस्तत्र व्यक्तिनिर्धारणायेद सूत्रम्। तेनाकाशाद्यनवरोधेऽपि न दोष, तत्राकृतेरभावादिति आस्माकमतम्।

४ 'मूर्च्छिता' परस्पर सयुक्ता 'अवयवा' यस्य तत् 'मूर्च्छितावयवम्'। मूर्च्छन सम्बन्ध, स चेह समवाय एवेति ध्येयम्।

अस्मिन् सूत्रार्थे वार्तिककारस्यारुचि। एव चात्र वार्तिकव्याख्यानम्–वय तु ब्रूमो नाग्रावयवी व्यवच्छेद्योऽपि तु जात्याकृतिपदव्यतिरिक्तस्य व्यक्तिपदस्यार्थो वक्तव्य इति। सा च व्यक्तिया न जातिर्नाकृतिस्तस्या अनन सूत्रेण सङ्ग्रह। गुणाश्च विशेषाश्च तदाश्रयश्च। अत्र तच्छब्दलोपाद्गुणविशेषाश्रयशब्देन द्रव्यमुच्यते। कर्मापि गुणविशेषशब्दाल्लभ्यते–गुणेभ्यो विशेषा व्यावृत्ता गुणविशेषा अक्षेपणादय इति। मूर्ति

आकृतिर्जातिलिङ्गाख्या ॥ ६८ ॥

यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्। सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद् व्यूहादिति। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्। शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्तते, जहाति पदार्थत्वमिति ॥ ६८ ॥

समानप्रसवात्मिका जातिः ॥ ६९ ॥

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं, तत्सामान्यम्। यच्च केषाञ्चिदभेदं कुतश्चिद्भेदं करोति तत् सामान्यविशेषो जातिरिति ॥ ६९ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं द्वितीयाध्यायः ॥ २ ॥

---

शब्देनाभ्युच्यते। एवं चैतल्लक्षणं रूपादिकाशाद्यनुगतं भवति। अथवा गुणविशेषाणामाश्रय इति गुणाश्च विशेषाश्च—तेषामाश्रयो द्रव्यम्। तत्र मूर्च्छत इति मूर्तिः—इति।

१ यद्यपि गोत्वं प्रत्यक्षमेव नाकृतिव्यङ्ग्यम् तथाऽपि विप्रतिपद्यमानं प्रत्युच्यते अनुमितत्वात्।

२ समानेतिसूत्रम्। प्रसूते इति 'प्रसवः', भिन्नेषु समानबुद्धिप्रसवाश्च या जातिः साऽवश्यं सामान्यप्रत्ययं प्रसूते न पुनर्या सामान्यप्रत्ययं प्रसूते सा सर्वा जातिः पाचकादिषु व्यभिचारात्। व्यक्त्याकृतिभ्यां भेदकत्वमात्रेणैतल्लक्षणम्, न तु सर्वथाऽनवद्यमिति तात्पर्यकाराः।

इति सद्योते द्वितीयप्रस्फुरणम्।

पृश्यति, प्रदीपेन पश्यति। अस्ति चायं व्यपदेशः—चक्षुषा पश्यति, मनसा विजानाति, बुद्ध्या विचारयति, शरीरेण सुखदुःखमनुभवतीति। तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसङ्घातस्य, अथान्येनान्यस्य तद्व्यतिरिक्तस्य वेति।

अन्येनायमन्यस्य व्यपदेशः। कस्मात्?

## दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्[1] ॥ १ ॥

दर्शनेन कश्चिदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते—यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति, यं चास्प्राक्षं स्पर्शनेन तं चक्षुषा पश्यामीति। एकविषयौ चेमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते। न च सङ्घातकर्तृकौ नेन्द्रियेणैककर्तृकौ। तद्योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ[2][3] प्रत्ययौ समानविषयौ[4] प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा।

कथं पुनर्नेन्द्रियेणैककर्तृकौ?

इन्द्रियं खलु स्वस्वविषयग्रहणमनन्यकर्तृकं प्रतिसन्धातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति।

'कथं न सङ्घातकर्तृकौ?'

एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते न सङ्घातः। कस्मात्? अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरवदिति ॥ १ ॥

## [5] न विषयव्यवस्थानात् ॥ २ ॥

---

१ दर्शनेत्यादि सूत्रम्। आत्मनः अविषयत्वादिति तात्पर्यम्। अनेकेन्द्रियकरणकः नैकार्थदर्शी कश्चिदेकश्चेतन इति भावः।

२ भिन्ननिमित्ताविति। भिन्नम्-इन्द्रिय-निमित्तं ययोस्तावित्यर्थः।

३ अनन्यकर्तृकाविति। आत्मकर्तृकावित्यर्थः।

४ समानविषयाविति। द्रव्यमेकं विषय इत्यर्थः।

५ न विषयेत्यादि सूत्रम्। दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति सूत्रेण अनेकेन्द्रियकरणकः नैकार्थदर्शी कश्चिदेकश्चेतन इति निश्चितम्। तत्र पूर्वपक्षः प्रतिसन्धानलक्षणं हेतुमवधार्य भाष्यमात्रं विरुन्नाह—न विषयेत्यादि। अस्यार्थः। यदि

"न देहादिसङ्घातादन्यश्चेतनः । कस्मात्? विषयव्यवस्थानात् । व्यवस्थितविषयाणीन्द्रियाणि—चक्षुष्यसति रूपं न गृह्यते । यच्च[1] यस्मिन्नसति न भवति सति भवति तस्य तदिति विज्ञायते । तस्माद्रूपग्रहणं चक्षुषः,—चक्षू रूपं पश्यति । एवं घ्राणादिष्वपीति । तानीन्द्रियाणीमानि स्वस्वविषयग्रहणाच्चेतनानि, इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात् । एवं सति किमन्येन चेतनेन" ।

सन्दिग्धत्वादहेतुः[2] । योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः, स किमयं चेतनत्वादाहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति सन्दिह्यते । चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति ॥ २ ॥

यच्चोक्तं[3]—"विषयव्यवस्थानादिति"—

**तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥**

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात् । यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात्तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही[4] विषयव्यवस्थितेः[5] ततोऽनुमीयते । तत्रेदमभिज्ञानम्[6] अप्रत्याख्येयं[7] चेतनवृत्तमुदाह्रियते——रूपदर्शी खल्वयं

---

चेतनान्तरं कल्पितं तदापि न सर्वं सर्वज्ञं किन्तु कश्चित् क्वचिज्ज्ञानवान् । तथा च वरमिन्द्रियाण्येव स्वस्वविषयव्यवस्थितचैतन्यानि सन्तु कृतमपरेण चेतनेनेति ।

१ यच्चेति । यद्भावाभावानुविधायिनौ ज्ञानभावाभावौ तच्चेतनम् । इन्द्रियभावाभावानुविधायिनौ च ताविति तदेव चेतनमिति भावः ।

२ सन्दिग्धत्वादहेतुरिति सिद्धान्तभाष्यम् । अनन्यथासिद्धावन्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणम्—न तु 'न कर्ता चेतनश्चेतनं करणम्' इत्यत्रेत्यर्थः । इदमुत्तरभाष्याज्ञापितपूर्वपक्षस्य । सूत्रोक्तापितस्य तूत्तरमग्रिमसूत्रेण भविष्यति ।

३ विषयव्यवस्थानं विरुद्धम्—इन्द्रियादीनामचेतनत्वसाधनादित्याह—यच्चोक्तमिति ।

४ सर्वविषयग्राहीति । सर्वेषामिन्द्रियान्तराणां च ये विषयास्तद्ग्राही । इन्द्रियान्तराणि च पुनर्व्यवस्थितविषयाणि । तेनार्वाग्दृगपि सर्वज्ञ इत्यादि सिद्धम् ।

५ विषयव्यवस्थितेः इति । इन्द्रियान्तराणि प्रमाणान्तराणि च पुनः व्यवस्थितविषयाणीत्यर्थः ।

६ अभिज्ञानमिति । असाधारणं चिह्नमिति यावत् ।

७ अप्रत्याख्येयमिति । प्रत्याख्यातुमशक्यमित्यर्थः । चेतनवृत्तमभिज्ञानमप्रत्याख्येयमुदाह्रियत इति सम्बन्धः ।

रसं गन्धं वा पूर्वगृहीतमनुमिनोति। गन्धप्रतिसंवेदी च रूपरसावनुमिनोति। एवं विषयशेषेऽपि वाच्यम्। रूपं दृष्ट्वा गन्धं जिघ्रति, घ्रात्वा च गन्धं रूपं पश्यति। तदेवमनियतपर्यायं[1] सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसन्धत्ते। प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान् स्वात्मकर्तृकान् प्रतिसन्दधाति प्रतिसन्धाय वेदयते। सर्वार्थविषयं च शास्त्रं प्रतिपद्यते अर्थमविषयभूतं श्रोत्रस्य। क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावेन प्रतिसन्धाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेक[2]विषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति। सेयं सर्वज्ञस्य ज्ञेयाऽव्यवस्थाऽनुपदं न शक्या परिक्रमितुम्। आकृति[3]मात्रं तूदाहृतम्। तत्र यदुक्तम् "इन्द्रियचैतन्ये सति किमन्येन चेतनेन" तदयुक्तं भवति ॥ ३ ॥

(२) शरीरव्यतिरिक्तात्मप्रकरणम्।

इतश्च[4] देहादिव्यतिरिक्त आत्मा, न देहादिसङ्घातमात्रम्—

## शरीर[5]दाहे पातकाभावात् ॥ ४ ॥

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासङ्घातः प्राणिभूतो गृह्यते। प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतपापं पातकमित्युच्यते। तस्याभावः—तत्फलेन

१ अनियतपर्यायमिति-अनियतक्रममित्यर्थः।

२ अनेकविषयमिति। अनेकपदार्थो विषयो यस्य अर्थजातस्य तदित्यर्थः।

३ आकृतिमात्रमिति-सामान्यमात्रमित्यर्थः यावत्।

४ इतश्चेति। एवम्प्रथमेन प्रकरणेनेन्द्रियव्यतिरेके प्रसाधिते यदि कश्चिद्दर्शयेत्—"ननु माभूवन्निन्द्रियाणि चेतनानि, व्यवस्थितविषयत्वात् शरीरं तु भविष्यति, अव्यवस्थितविषयं हि तत्। योऽहं गौरः पीनो युवा रूपं दृष्टवान् सोऽहं स्पर्शं स्पृशामीत्यनुभवात्। अतो दर्शनस्पर्शनाभ्यामेकार्थग्रहीतृ शरीरमेवास्मीति"—तत्रेदम्प्रकरणान्तरमुपतिष्ठते।

५ शरीरेत्यादि सूत्रम्। प्राणातिपाते पातकाभावप्रसङ्गादित्यर्थः। अथ यद्यपि भूतचैतन्निकानां नानिष्टप्रसङ्गस्तन्मते पातकादेरभावात्, तथापि शास्त्रान् प्रति द्रष्टव्यम्। ते हि प्राणातिपातकृतं पातकमभ्युपगच्छन्ति।

एवं च न बुद्धिरात्मेति वक्ष्ये देहादिग्रहणमिति। विचित्राभिसन्धित्वात्पुंसां यदि कश्चिद्भूतचैतन्निकः प्राणातिपातकृतं पातकमिच्छेत् तं प्रति दूषणमभिधित्सनीयमेवमर्थमेव।

दाहशब्देनात्र नाशमुपलक्षयति। पातकाभावशब्देन च कालान्तरोपभोगिस्थायिगुणाभावम्। शरीरदाह इति शरीरस्यार्थे अथवा शरीरदाहे सति तत्कर्तरि इति सम्बन्धः। यस्यात्मा नास्ति तस्याय दोष इति प्रतिपादनार्थमेवेदं सूत्रं न पुनरात्मसाधनार्थम्।

कर्तुरसम्बन्धान् अकर्तुश्च सम्बन्धात्। शरीरेन्द्रियबुद्धिवेदनाप्रबन्धे खल्वन्यः सङ्घात उत्पद्यतेऽन्यो निरुध्यते। उत्पादनिरोधसन्ततिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसङ्घातस्यान्यत्वाधिष्ठानत्वात्। अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायत इति। एवं सति यो देहादिसङ्घातः प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन सम्बध्यते। यश्च सम्बध्यते न तेन हिंसा कृता। तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते। सति च सत्त्वोत्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति। तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात्। तद्यदि देहादिसङ्घातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेत्। अनिष्टं चैतत्। तस्माद्देहादिसङ्घातव्यतिरिक्त आत्मा नित्य इति ॥ ४ ॥

"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" ॥ ५ ॥

"यस्यापि नित्येनात्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः। कस्मात्? नित्यत्वादात्मनः। न जातु कश्चिन्नित्यं हिंसितुमर्हति। अथ हिंस्यते? नित्यत्वमस्य न भवति। सेयमेकस्मिन्पक्षे हिंसा निष्फलाऽन्यस्मिंस्त्वनुपपन्नेति" ॥ ५ ॥

न[2] कार्याश्रयकर्तृवधात्[3] ॥ ६ ॥

---

इत्यमेव सूत्रार्थं इत्यभिप्रेत्य सूत्रकल्पेन स्पष्टम्। अत एव—(१) यदि शरीरमेवात्माऽभविष्यत तदा शरीरस्य—मृतकशरीरस्य—दाहे पातकं स्यात्, न च तदस्ति। अथवा (२) शरीरे दग्धे तदनन्तरस्याश्रयाभावात् पुण्यपापाद्यभाव एव स्यात्, तथा च न पुनर्जन्मेति—यदर्थद्वयमस्य सूत्रद्वयस्यार्थोऽभावित तस्य नास्त्यवकाशः।

१ अकर्तुरिति। शास्त्रचोदित फलमनुष्ठातर्यत्युत्सर्गः। यत्र पुनः शास्त्रमन्यत्र फलमाह—यथा श्राद्धे वैश्वानरीयेष्ट्यादौ—तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृताया वा जातेष्टेः पुत्रगामि फलमिति भावः।

२ सूत्रमिदं द्विधा व्याख्यातम्भाष्यकारेण। 'कार्याश्रयस्य' शरीरस्य यानि 'कर्तॄणि' इन्द्रियाणि तेषां वधादिति। अथवा 'कार्याश्रयो देहेन्द्रियबुद्धिसङ्घातः', स एव कर्ता—तस्य वधादिति। द्वितीयमेतत् व्याख्यानं स्वीकृतं वृत्तिकृता।

३ वधादित्यस्य स्थाने बाधादिति पठन्ति न्यायसूत्रविवरणकाराः। तदर्थश्च—न शरीरदाहेऽदृष्टनाशः। 'कार्यम्' अदृष्टम्, तस्य 'आश्रयस्य' कर्तुः आत्मनः 'बाधात्' नाशाभावात्।

न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसा, अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः पीडा, वैकल्यलक्षणः[1] प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति। कार्यं तु सुखदुःखसंवेदनम्। तस्यायतनमधिष्ठानमाश्रयः शरीरम्। कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणां वधो हिंसा, न नित्यस्यात्मनः। तत्र यदुक्तम्–"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" इत्येतदयुक्तम्। यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः।

एतावच्चैतत् स्यात्–सत्त्वोच्छेदो वा हिंसा। अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा। न कल्पान्तरमस्ति। सत्त्वोच्छेदश्च प्रतिषिद्धः। तत्र किमन्यत्? शेषं यथाभूतमिति।

अथवा[2] कार्याश्रयकर्तृवधादिति। कार्याश्रयो देहेन्द्रियबुद्धिसङ्घातः, नित्यस्यात्मनः, तत्र सुखदुःखप्रतिसंवेदनम्, तस्याधिष्ठानमाश्रयः, तदायतनं तद्भवति, न ततोऽन्यदिति स एव कर्ता। तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिः, न तमन्तरेणेति। तस्य वध उपघातः पीडा, प्रमापणं वा हिंसा न नित्यत्वेनात्मोच्छेदः। तत्र यदुक्तम्–"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" एतन्नेति ॥ ६ ॥

## ( ३ ) चक्षुरद्वैतनिराकरणप्रकरणम् ( प्रासङ्गिकम्[3] )

इतश्च देहादिव्यतिरिक्त आत्मा—

---

अन्यदपि व्याख्यानमुल्लिख्य निराकुर्वन्ति विवरणकाराः। तद्यथा—न सात्मकशरीरदाहे पापानुत्पादः। 'कार्यम्' शरीरम् 'तदाश्रयस्य' तत्सम्बन्धस्य 'कर्तुः' आत्मनः 'बाधात्' नाशादिति।

१ वैकल्यलक्षण इति। यथा शरीरमुपघ्नन् हिनस्ति एवं चक्षुराद्युपघ्नन्नपि हिनस्त्येवेति भावः।

२ अथवेति। प्रकारान्तरेण सूत्रं व्याचष्टे।

३ प्रासङ्गिकस्यैतस्य चक्षुरद्वैतनिराकरणपरस्य प्रकरणस्य विषये व्याख्यातृषु महान् मतभेदो दृश्यते। वस्तुतः सप्तविंशतितमसूत्रपर्यन्तमात्मनः स्वतन्त्रस्थितिनिरूपणपरमेकमेव प्रकरणं वर्तते। तत्साधनप्रकारभेदेन तु व्याख्यातारः प्रकरणभेदमत्र कुर्वन्ति। न्यायसूचीनिबन्धे तात्पर्ये च वाचस्पतिमिश्राः सप्तमसूत्रमारभ्य चतुर्दशसूत्रपर्यन्तमेकं प्रकरणमभिप्रेत्य तदर्थम्–चक्षुरिन्द्रियस्य द्वित्वे आत्मनश्चैकत्वे सिद्धे नात्मेन्द्रिययोरभेदः सम्भवतीति–वर्णयन्ति।

## सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्[1] ॥ ७ ॥

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्—'तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ' इति। सव्येन चक्षुषा दृष्टस्येतरेणापि चक्षुषा प्रत्यभिज्ञानाद्—'यमद्राक्षं तमेवैतर्हि पश्यामीति'। इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः। अस्ति त्विदं प्रत्यभिज्ञानं, तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ॥ ७ ॥

## "नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्"[2] ॥ ८ ॥

---

एतत्तु वार्तिककारस्य नाभिप्रेतम्। तदुक्तम्—एके इदं प्रकरणमात्मन इन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति। तच्च पूर्वप्रकरणेनैव तत्सिद्धेः—इति।

भाष्यकारादपि वार्तिककारस्यात्र स्फुटो मतभेदः। भाष्यमते चक्षुरिन्द्रियं द्वित्वम्—वार्तिकमते चक्षुरेकत्वमेव—सिद्धान्तः। चक्षुर्द्वित्वसिद्धान्तपरिग्रहेण हि भाष्याभिमतस्यैवात्मनः साधनं सुकरम्भवतीति भाष्यकारस्य हृदयम्।

भाष्यमतेनैव सूत्रार्थविभागः। सप्तमसूत्रे सिद्धान्तोपक्रमः—वामेन चक्षुषा दृष्टस्य दक्षिणेन प्रत्यभिज्ञानादुभयाधिष्ठाता आत्मा सिद्ध्यतीति। अष्टमसूत्रे तदाक्षेपः—उभयोरपि गोलकयोश्चक्षुरिन्द्रियस्यैकत्वे तत्सत्त्वमेव प्रत्यभिज्ञानमिति। नवमसूत्रे तत्परिहारः—गोलकद्वयस्थितस्येन्द्रियस्यैकत्वं न सम्भवतीति। दशमसूत्रे चक्षुरेकत्ववादिदत्तमुत्तरम्—एकस्य गोलकस्य नाशे चक्षुरिन्द्रियस्यैकमवयवमेव नश्यतीति। तत्परिहार एकादशसूत्रे—चक्षुर्द्वित्वसिद्धान्तप्रतिरोधो न युक्त इति।

एवं च चक्षुर्द्वित्ववादिनो भाष्यकारस्य मतेन सप्तमसूत्रे सिद्धान्तेनोपक्रमः। वार्तिकमते त्वस्मिन् सूत्रे सव्यदृष्टस्येतरेण प्रत्यभिज्ञानमात्मभेदसाधनायोपन्यस्तं सूत्रकारेण निराकरणार्थमेव। तन्निराकरणार्थमेवाष्टमसूत्रे चक्षुरद्वैतसिद्धान्तोपन्यासः। नवमसूत्रे तदाक्षेपः, दशमसूत्रे कैश्चिन्मतेन तदाक्षेपपरिहारः, एकादशसूत्रे च तत्परिहारस्य नवमसूत्रगतस्याक्षेपस्य च खण्डनम्।

द्वादशसूत्रमारभ्य षोडशसूत्रपर्यन्तं तु न कोऽपि भेदः। उभयोरपि मतयोरस्तेषामात्मसाधनपरत्वाभ्युपगमात्।

१ प्रत्यभिज्ञानात्—आत्मैक इति शेषः। चक्षुषोरभेदसिद्धिरिति तु न्यायसूत्रविवरणकाराः। तत्तु न सम्यक्। अकस्माच्चक्षुषोरद्वैतस्योपन्यासेन सूत्रकारस्यासम्बद्धप्रलापित्वमेव स्यात्। आत्मभेदसाधनोपन्यासात् तथा चक्षुर्द्वैतोपन्यास एव प्राकरणिकत्वं स्यादुपन्यासस्य।

२ इदं हेतुं चक्षुरेकत्वेनाक्षिपति—नैकस्मिन्निति।

" एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं, तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो मध्यव्यवहितस्य दीर्घस्येव[1] " ॥ ८ ॥

एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गम्[2]। तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ९ ॥

" अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः[3] " ॥ १० ॥

" एकविनाशे द्वितीयाविनाशादित्यहेतुः। कस्मात्? वृक्षस्य हि कासुचिच्छाखासु छिन्नासूपलभ्यत एव वृक्षः " ॥ १० ॥

दृष्टान्तविरोधादप्रतिषेधः[4] ॥ ११ ॥

न कारणद्रव्यस्य विभागे कार्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात्। बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः। येषां कारणान्यविभक्तानि तानि अवतिष्ठन्ते।

अथ वा दृश्यमानार्थविरोधो दृष्टान्तविरोधः। मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते। न चैतदेकस्मिन्नासास्थिव्यवहिते सम्भवति।

अथ वा एकविनाशस्यानियमाद् द्वाविमावर्थौ, तौ च पृथगावरणोपघातावनुमीयेते विभिन्नाविति।

अवपीडनाच्चैकस्य[5] चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद् दृश्यभेद इव गृह्यते, तच्चैकत्वे विरुद्ध्यते। अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानमिति। तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ११ ॥

---

१ दीर्घस्येति—वक्तव्यमिति शेषः।

२ लिङ्गमिति। विषयग्रहणं लिङ्गं ( ज्ञापकं ) यस्य तत्। विषयग्रहणे लिङ्गमिति मुद्रितवार्तिकपुस्तकपाठः। तदर्थश्च द्वितीयमेव चक्षुः विषयग्रहणे लिङ्गम् ( कारणं ) भवतीति।

३ अपूर्वं सूत्रयति—अवयवनाश इति सूत्रम्।

४ सिद्धान्तिसूत्रम्—दृष्टान्तेति।

५ अवपीडनादिति। द्वाभ्यां चक्षुर्भ्यामवलोकितं वस्त्वेकमेव प्रतिभाति। किन्तु यदैकं नयनमङ्गुल्यावपीडितं तदा तद् वस्तु द्वे इव प्रतिभाति। [illegible] [illegible] निर्मीलनस्य [illegible] सर्वथा पूर्ववत्।

अनुमीयते चायं देहादिसङ्घातव्यतिरिक्तश्चेतन इति—[1]

इन्द्रियान्तरविकारात् ॥ १२ ॥

कस्यचिदम्लफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारो रसानुस्मृतौ रसगर्धिप्रवर्त्तितो दन्तोदकसम्प्लवभूतो गृह्यते। तस्येन्द्रियचैतन्येऽनुपपत्ति, नान्यदृष्टमन्य स्मरति॥१२॥[2]

"न स्मृतेः स्मर्त्तव्यविषयत्वात्" ॥ १३ ॥[3]

"स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते, तस्या स्मर्तव्यो विषय, तत्कृत इन्द्रियान्तरविकारो नात्मकृत इति" ॥ १३ ॥

तदात्मगुणत्वसद्भावादप्रतिषेधः ॥ १४ ॥[4]

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मन । यदि स्मृतिरात्मगुण ? एव सति स्मृतिरुपपद्यते, नान्यदृष्टमन्य स्मरतीति । इन्द्रियचैतन्ये तु

१ प्रतिसन्धानहेतुना ( चक्षुर्द्वैतसाधनद्वारेण ) आत्मनि प्रत्यय प्रमाणयित्वाऽनुमानमिदानीम्प्रमाणयति–अनुमीयते चायमिति । विप्रतिपन्न हि प्रति प्रतिसन्धानमुक्तम् । परमार्थतस्त्वनुभवानुसारमार्गोऽयमिति मन्तव्यम् ।

२ स्मरतीति । रूप गन्धञ्चानुभवति–अथ त सहचरित रस अनुस्मरति–स्मृत्वा चच्छति इच्छातो रसनेन्द्रियविकारा दन्तोदकसम्प्लवलक्षण प्रवर्तेत । तद्दर्शनाच्चास्येच्छाऽनुमीयते–इच्छया च स्मृतिरनुमीयते । सेय स्मृतिरसति सर्वेन्द्रियविषयवेदिन्यात्मनि न भवितुमर्हति ।

न्यायसूत्रविवरणकारा अन्यथा व्याचक्षते सूत्रमनत् । तन्मतेनैतदपि चक्षुर्द्वैतसाधनमेव । तदर्थस्तु–घर्षणादिना पूर्वचक्षुर्नाशे चक्षुरन्तरोत्पादादिति । नैतत्मा स्यान सम्यक प्रतिभाति ।

३ न स्मृतेरित्याक्षेपसूत्रम् । स्मृतिरात्मान कारणत्वेनावगमयेत् विषयत्वेन वा । न तावत्कारणत्वेन, स्मृते संस्कारकारणत्वात् । नापि विषयत्वेन स्मृते स्मर्तव्यविषयत्वात् । स्मृताच्च तस्माद्विषयादिन्द्रियान्तरविकारोत्पत्तिरिति शङ्ककस्य हृदयम् ।

एतदपि सूत्र चक्षुर्द्वैतपरकत्वेनान्यथा व्याचष्ट विवरणकार —स्मृते स्मर्तव्यविषयत्वात्—पूर्वानुभूतविषयत्वमात्रनियमात् —न तु तदिन्द्रियजन्यत्वनियमोऽपीति भाव इति ।

४ तदात्मेति सूत्रम् । तद्व्याख्यान विवरणमतेन यथा—ननु स्मृतिसमवायित्व तत्तदिन्द्रिय स्वीकार्यम् तदन्यस्यानुपस्थितेः —इति कथ पूर्वचक्षुर्नाशे स्मृत्युपपत्तिरित्यत आह–तदात्मेति । तस्या स्मृते आत्मगुणत्वसद्भावात्–आत्मसमवायित्वयाऽनुभवात्–न यथोक्तप्रतिषेध । अनुभवाकारश्च स्मरामीत्यादिरूप –इति ।

'अमुमर्थं ज्ञास्यामि, अमुमर्थं विजानामि, अमुमर्थमज्ञासिषं, अमुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति'। एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते।

संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति। स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत्। न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत्। अतोऽनुमीयते—अस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसन्धत्त इति, यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥१४॥

(४) आत्मनो मनोव्यतिरेकप्रकरणम्।

"नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्" ॥ १५ ॥

'न देहादिसङ्घातव्यतिरिक्त आत्मा। कस्मात्? 'आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्', 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भवो यतः, मनो हि सर्वविषयमिति[1]। तस्मान्न शरीरेन्द्रियमनोबुद्धिसङ्घातव्यतिरिक्त आत्मेति" ॥ १५ ॥

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १६ ॥

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते—चक्षुषा पश्यति, घ्राणेन जिघ्रति, स्पर्शनेन स्पृशति। एवं मन्तुः[2] सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यत इति। एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते, मनःसंज्ञाभ्यनुज्ञायते। मनसि च मनःसंज्ञा न मृष्यते, मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति।

प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः। अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते 'नास्तीति'। एवं रूपादिविषयग्रहणसाधनान्यपि न सन्ति इति सर्वेन्द्रियविलोपः प्रसज्यत इति ॥ १६ ॥

---

१ सर्वविषयमिति। सर्वे बाह्यान्तरभूता विषया यस्य तत्—सर्वज्ञमित्यर्थः।

२ एवं मन्तुरिति। 'मति' स्मृत्यनुमानादिकं ज्ञानम्। यद्यपि चेदं प्रातिस्विकसंस्कारादिकारणकं तथाऽप्यवश्यमेतेनेन्द्रियजेन (अर्थात् शरीरसंयुक्तसंस्कारकद्र-द्रव्यसंयोगजेन) भवितव्यम्—ज्ञानत्वाद् रूपादिज्ञानवत्। तच्चेन्द्रियमस्मति चक्षुरादौ सर्व-र्जात् चक्षुराद्यतिरिक्तं मन इत्युच्यते।

बुद्धिपर्यायत्वेऽपि मतिज्ञानशब्दयोः साक्षात्कारी प्रत्ययो ज्ञानमिह विवक्षितः, तिज्ञासाधीनश्च ज्ञानमिह मतिः।

नियमश्च निरनुमानः ॥ १७ ॥

योऽयं नियम इष्यते—' रूपादिग्रहणसाधनान्यस्य सन्ति, मतिसाधनं सर्वविषयं नास्तीति '—अयं नियमो निरनुमानः । नात्रानुमानमस्ति येन नियमं प्रतिपद्यामहे इति ।

रूपादिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः । यथा चक्षुषा गन्धो न गृह्यत इति, करणान्तरं घ्राणं, एवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्, एवं शेषेष्वपि । तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम् । तच्च ज्ञानायौगपद्यलिङ्गम् । यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गं, तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेश्च न युगपज्ज्ञानान्युत्पद्यन्त इति । तत्र यदुक्तम्—' आत्मप्रतिपत्तिहेतूनां मनसि सम्भवादिति ' तदयुक्तम् ॥ १७ ॥

( ५ ) आत्मनित्यताप्रकरणम् ।

' किंपुनरयं देहादिसङ्घातादन्यो नित्यः, उतानित्य इति । कुतः संशयः ? उभयथा दृष्टत्वात् संशयः । विद्यमानमुभयथा भवति-नित्यमनित्यं च । प्रतिपादिते चात्मसद्भावे संशयानिवृत्तेरिति " ।

१ यद्यपि । यथा कारणमन्तरा कार्यं जनितं कारणं ज्ञापयति तथैव मनः सत्ता मनोलिङ्गज्ञानं जनितं मनो ज्ञापयति । तच्च लिङ्गजं मनोज्ञानं मनसस्तत्सिद्धम् । न च स्वात्मनि वृत्तिविरोधः । न हि मनस्सत्तायां मनः करणम्-मनोज्ञाने वा मनः करणम् यतः स्वात्मनि वृत्तिविरोधः स्यात् । न च केवलं मनः स्वज्ञाने करणं यतः कर्म-करणत्वे स्याताम् । अपि तु मनोज्ञाने लिङ्गज्ञानसहितमेव मनः करणम्—[illegible] तु लिङ्गज्ञानसाहित्यादिति न स्वात्मनि वृत्तिविरोधः ।

एतदनन्तु कर्मकरणत्वयोर्विरोधोऽपि नास्ति । कर्तृव्यापाराश्रयत्वं हि करणत्वम् अनात्मसमवेतक्रियाफलभागित्वं च कर्मत्वम् । न च कर्तृव्यापाराश्रयतायाः परसमवेतक्रियाफलभागितायाः किञ्चिद्विरुध्यते [illegible] वा विरुध्यते ।

२ किंपुनरिति [illegible] परीक्षितुं संशयमाह ।

उपर्युक्तं संशयं [illegible] एतत्प्रकरणारम्भे केचिदाक्षिपन्ति—इन्द्रियबुद्धि[illegible] [illegible] व्यतिरिक्तस्यात्मनो [illegible] [illegible] [illegible] [illegible] [illegible] । [illegible] न [illegible] जनम् । तत् किमर्थमिदं प्रकरणान्तरं [illegible] इति । तत्राहाभाष्य—सिद्धेऽपि देहा-

आत्मसद्भावहेतुभिरेवास्य प्रागूदेहभेदादवस्थानं सिद्धमूर्ध्वमपि देहभेदादवतिष्ठते । कुतः ?

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १८ ॥

जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान् । ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा । स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति । पूर्वाभ्यासश्च पूर्वजन्मनि सति, नान्यथेति सिद्धमेतदवतिष्ठतेऽयमूर्ध्वं शरीरभेदादिति ॥ १८ ॥

"पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः" ॥१९॥

"यथा पद्मादिष्वनित्येषु प्रबोधः सम्मीलनं विकारो भवति, एवम् नित्यस्यात्मनो हर्षभयशोकसम्प्रतिपत्तिर्विकारः स्यात्" ।

हेत्वभावादयुक्तम् । अनेन हेतुना पद्मादिषु प्रबोधसम्मीलनविकारवद् नित्यस्यात्मनो हर्षादिसम्प्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात् साध्यसाधनं हेतुर्न च वैधर्म्यादस्ति । हेत्वभावात् असम्बद्धार्थकमपार्थकमुच्यत इति ।

दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः । या चेयमासेवितेषु विषयेषु हर्षादिसम्प्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिप्रबोधसम्मीलनदृष्टान्तेन न निवर्तते । यथा चेयं न निवर्तते तथा जातस्यापीति । क्रियाजाताश्च

---

व्यतिरेके बाल्यादिषु चानुगमे–किमयमागमापायी शरीरोत्पत्तेरा च मरणात् यावद्देह-सन्तानभावी–आहोस्विदुपरतेऽपि देहादिसन्तानेऽनुवर्तत एवेति विमर्शोऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इति ।

१ देहभेदादिति ल्यब्लोपे पञ्चमी । बाल्यकौमारयौवनवार्धकदेहभेदमभिसमीक्ष्य प्रतिसन्धानादवस्थानमित्यर्थः –इति तात्पर्यकृत ।

प्रतिसन्धानेनैवास्य प्रतिसन्धातुरवस्थानं सिद्धम्, देहस्य भेदात् ' अप्रतिस न्धातृत्वादित्यन्यथा व्याख्यानम्परिशुद्धिकृत ।

२ लिङ्गानुमेयानिति–यथाक्रमं स्मितकम्परुदितानुमेयानिति यावत् । तथा हि निरालम्बनो बालः कम्पते मातुरङ्कात् पतनस्यानिष्टसाधनत्वमनुस्मृत्य इदं च पतन-मिति परामृश्य ( प्रत्यभिज्ञाय ) तस्यापि अनिष्टसाधनतामनुमाय रुदन् मातुरङ्कस्य उर सूत्रं विक्षिप्य हस्तौ वेपमान उपादत्ते स्तन्यपाना चेष्टया अपशङ्कावनुमीयते ।

३ यथा चेयमिति । यथा वृद्धादीनामस्याः सर्वदर्शिता हर्षादिसम्प्रतिपत्तिः पद्मादिदृष्टान्तेन न निवर्तते तथैव जातमात्रस्य बालस्यापि सा न निवर्तयितु शक्यत इति भावः ।

पर्णसंयोगविभागौ प्रबोधसम्मीलने । क्रियाहेतुश्च क्रियानुमेयः । एवं च सति किं दृष्टान्तेन प्रतिषिध्यते ॥ १९ ॥

अथ निर्निमित्ताः पद्मादिषु प्रबोधसम्मीलनविकारा इति मतमेवमात्मनोऽपि हर्षादिसम्प्रतिपत्तिरिति ? तत्र—

न, उष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २० ॥

उष्णादिषु सत्सु भावादसत्स्वभावात्तन्निमित्ता पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसम्मीलनविकारा इति न निर्निमित्ता । एवं हर्षादयोऽपि विकारा निमित्ताद्भवितुमर्हन्ति न निमित्तमन्तरेण । न चान्यत्पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति । न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात् । न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः । नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनाम् । तस्मादयुक्तमेतत् ॥ २० ॥

इतश्च नित्य आत्मा—

प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २१ ॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते । स च नान्तरेणाहाराभ्यासम् । कया युक्त्या ? दृश्यते हि शरीरिणां क्षुधापीड्यमानानामाहाराभ्यासकृतात्स्मरणानुबन्धादाहाराभिलाषः । न च पूर्वशरीराभ्यासमन्तरेणासौ जातमात्रस्योपपद्यते । तेनानुमीयते भूतपूर्वं शरीरं, यत्रानेनाहारोऽभ्यस्त इति । स खल्वयमात्मा पूर्वशरीरात्प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति । तस्मान्न देहभेदादात्मा भिद्यते भवत्येवोर्द्ध्वं देहभेदादिति ॥ २१ ॥

१ दृष्टान्तादिति । आत्मनो नित्यत्वे नानाहेतुभिः सिद्धे कमलपत्रस्यादिदृष्टान्तेन तस्योत्पत्तिविनाशाद्यनुमानमनुचितम् । तदनुमानप्रकारश्च—यद्विकारि तदुत्पत्तिनिरोधधर्मकं यथा पद्मम्—तथा चात्मा—तस्मादनित्य इति ।

२ प्रेत्येति सूत्र आक्षेपः—किमर्थं पुनरिदं सूत्रमारभ्यते यतोऽयमर्थः 'पूर्वाभ्यस्त'सूत्रेऽवगत इति । तत्परिहारश्च—एवमत्रापि सामान्यतोऽवगतस्य विशेषप्रतिपादनार्थं सूत्रमिदमित्याह इति । हर्षादिना सामान्येन दृष्टान्तमात्रमवगतम्, तद्विशेषस्तु स्तन्याभिलाषो रागश्चात्र दृश्यते ।

"अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम्" ॥ २२ ॥

"यथा खल्वयोऽभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति" ॥ २२ ॥

किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तमथ निमित्तादिति ? निर्निमित्तं तावत्—

न, अन्यत्र प्रवृत्त्यभावात् ॥ २३ ॥

यदि निर्निमित्तम् ? लोष्टादयोऽप्ययस्कान्तमुपसर्पेयुः । न जातु नियमे कारणमस्तीति । अथ निमित्तात् ? तत्केनोपलभ्यत इति । क्रियालिङ्गः क्रियाहेतुः, क्रियानियमलिङ्गश्च क्रियाहेतुनियमः । तेनान्यत्र प्रवृत्त्यभावः । बालस्यापि नियतमुपसर्पणं क्रियोपलभ्यते । न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात्स्मरणानुबन्धात् निमित्तं दृष्टान्तेनोपपाद्यते, न चासति निमित्ते कस्यचिदुत्पत्तिः । न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते । तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति ।

अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति न जात्वयो लोष्टमुपसर्पति । किं कृतोऽस्य नियम इति । यदि कारणनियमात् ? स च क्रियानियमलिङ्गः । एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति । तच्च कारणमभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते । दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति ॥ २३ ॥

इतश्च नित्य आत्मा । कस्मात् ?

---

१ अयस इत्याक्षेपसूत्रम् । प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थम् । न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणम्, अयसोऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धो भवेत् जात्यन्धबधिरादयस्तज्जन्मानुभूतानि रसस्पर्शगन्धादीन् जात्यन्तरानुभूतान् रूपशब्दादीनपि स्मरेयुरित्याक्षेप्तुरभिप्रायः ।

२ दृष्टो हीति । यौवनाद्यवस्थायां हि चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति । तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसम्बन्धावगमात् वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृते कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च यदेकस्य स्मरति तेनापरमपि स्मर्तव्यमिति नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादीनाचक्षीरन् । अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अतश्चैकदानुभूतेषु कस्यचिदेव स्मरति आत्मा न सर्वस्येति तात्पर्यम् ।

वीतरागजन्मादर्शनात् ॥ २४ ॥

सरागो जायत इत्यर्थादापद्यते। अयं जायमानो रागानुबद्धो जायते। रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः। पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यते। सोऽयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते। तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः। एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरशरीरस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः। अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २४ ॥

"कथं पुनर्ज्ञायते पूर्वानुभूतविषयानुचिन्तनजनितो जातस्य रागो न पुनः"--

"सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः" ॥ २५ ॥

"यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते। अत्रायमुदितानुवादो निदर्शनार्थः" ॥२५॥

न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २६ ॥

न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च। कस्मात्? 'सङ्कल्पनिमित्तत्वाद्रागादीनाम्'। अयं खलु प्राणिनां विषयानासेवमानानां सङ्कल्पजनितो रागो गृह्यते। सङ्कल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः। तेनानुमीयते- 'जातस्यापि पूर्वानुभूतार्थानुचिन्तनकृतो रागः' इति। आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्।

१ वीतरागेति सूत्रम्। स्तन्याभिलाषोऽन्यास्मपुनरुक्तिमेव मन्वानेन जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः, सम्प्रति तु पतङ्गादीनां कणादिभक्षणाभिलाषस्य धारणे रागमात्रमित्यपौनरुक्त्यमिति 'प्रेत्याहारा'दिसूत्रेऽपुनरुक्तिमत्र मन्वाना वृत्तिकृत्। पूर्वत्र सूत्रे स्तन्याभिलाषस्मरणप्रवृत्तिहेतुत्वेनोपन्यस्तमत्र तु रागो जन्महेतुत्वेनोपन्यस्त इति न पौनरुक्त्यशङ्कावकाशः।

२ पूर्वानुभूतेति। एकविषयस्मृतिप्रवाहो विजातीयप्रत्ययासम्भिन्नः 'चिन्तनम्'। तच्चानुभवस्य पश्चाद्भवतीति 'अनुचिन्तनम्'। न चैतत् स्मृतिमन्तरेण भवतीत्यर्थः।

३ सगुणेत्याद्यनैकान्तिकत्वप्रतिपादनार्थं सूत्रम्।

४ अत्रायमिति। उक्तमिदं चोद्यमयस्कान्तदृष्टान्तचोद्येन। तथापि तस्यानुवादो निदर्शनार्थः। पूर्वमयस्कान्तो निदर्शनम्, इदानीं तु घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थमित्यर्थः। चोद्यस्योदितानुवादत्वात्परिहारोऽप्युदितानुवाद एवेति हृदयम्।

न चात्मोत्पादः सिद्धो नापि सङ्कल्पादन्यद्रागकारणमस्ति । तस्मादयुक्त-सगुणद्रव्योत्पत्तिवत्तयोरुत्पत्ति'रिति ।

अथापि सङ्कल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते तथापि पूर्वशरीरयोगोऽप्रत्याख्येयः । तत्र हि तस्य निर्वृत्तिर्नास्मिन् जन्मनि । तन्मयत्वाद्राग इति, विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यत इति । जातिविशेषाच्च रागविशेष इति । कर्म खल्विदं जातिविशेषनिर्वर्तकं तादर्थ्यात्ताच्छब्द्यं विज्ञायते । तस्मादनुपपन्नं 'सङ्कल्पादन्यद्रागकारणम्' इति ॥ २६ ॥

## ( ६ ) शरीरपरीक्षाप्रकरणम्

अनादिश्चेतनस्य शरीरयोग इत्युक्तम्, स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानम् । तत्परीक्ष्यते—किं घ्राणादिवदेकप्रकृतिकमुत नानाप्रकृतिकमिति । कुतः संशयः? विप्रतिपत्तेः संशयः । पृथिव्यादीनि भूतानि सङ्ख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति ।

किं तत्र तत्त्वम्?

---

१ तन्मयत्वादिति । रागादीनामदृष्टकारणत्वमभ्युपेत्य पूर्वं परिहृतम्, परमार्थतस्तु तन्मयत्वाद्राग इति तात्पर्यम् ।

२ स्यादेतत्—यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद् रागद्वेषादीनामुत्पादः हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावानामानन्तर्यात् तदनुरूपा एवास्य रागादयो भवेयुः, न करभरूपाः । करभजातेरस्य विजातीयजन्मसहस्रव्यवहितत्वादत आह—जातिविशेषाच्चेति । कर्मणः संस्कारोद्बोधकत्वात् करभजात्यनुबद्धेन कर्मणा जन्मसहस्रव्यवहिताऽपि करभभावनोद्बोध्यते नानन्तराऽपि मनुष्यभावना प्रायणाभिभूतेति भावः ।

३ अनादिश्चेतनस्येति शरीरपरीक्षाप्रकरणमारभ्यते । आत्मनः शरीरादिभिन्नत्वसाधकस्य पूर्वप्रकरणस्यैवाङ्गभूतेनैतेन भवितव्यमिति न प्रकरणान्तरावकाश इति धीरस्मादृशामाशङ्काऽनया परिहृता परिशुद्धिकृता । सर्वेषामुद्दिष्टानाम्परीक्षणे कर्तव्ये पूर्वप्रकरणे शरीरादिभ्यो भेदमात्मनः प्रसाधितम्—इदानीन्तु सम्यैव शरीरस्य परीक्षा कर्तव्यत्वेनोपनिपतते । परीक्षिते च शरीरे तत्स्वभावावगमनन्तरं तत्र निर्विण्णात्मा जुगुप्सत इति परमोद्देश्यम् ।

४ सङ्ख्याविकल्पेनेति । एकद्वित्रिचतुष्पञ्चप्रकृतिकत्वाभ्युपगमेन शरीरस्य वादिन इत्यर्थः ।

पार्थिवं गुणान्तरोपलब्धेः ॥ २७ ॥

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्? गुणान्तरोपलब्धेः। गन्धवती पृथिवी गन्धवच्च शरीरम्। अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात्। न त्विदमबादिभिरसम्पृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पत इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति। भूतसंयोगो[2] हि मिथः पञ्चानां न निषिद्ध इति। आप्यतैजसवायव्यानि लोकान्तरे शरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशयो नाबादिसंयोगमन्तरेण निष्पत्तिरिति ॥ २७ ॥

"पार्थिवाप्यतैजसं तद्गुणोपलब्धेः" ॥ २८ ॥

"निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्" ॥ २९ ॥

"गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्" ॥ ३० ॥

त इमे सन्दिग्धा हेतव इत्युपेक्षितवान्[3] सूत्रकारः। कथं सन्दिग्धाः? सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति च, संयोगाप्रतिषेधात् सन्निहितानामिति। यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृति

१ पार्थिवमिति सूत्रम्। गुणान्तरोपलब्धेरिति—तद्विशेषगुणोपलब्धेरित्यर्थः।

इह पार्थिवत्वेन आप्यत्वादिना वा शरीरलक्षणस्य चेष्टाश्रयत्वादेः किमुपपद्यते किं वा नोपपद्यते येन इत्थमुच्यते इति कश्चिदाक्षेपः। तत्परिहारश्च—भौतिकस्य शरीरस्य निरूपिते भूतभावे घटादिवदर्थेन समवायमसिद्धं भवेत्। तत प्रत्यक्षवदास्य संयोगासमवायिकारणक्रियाश्रयत्वाश्रयत्वमेव सूत्रेण सिद्ध्येत। तदारम्भकदोषीभूता हाराद्यवयवोपचयापचयहेतुभूतेन्द्रियापचयापचयलक्षणमिन्द्रियाश्रयत्वं तदवच्छिन्नस्यात्मनो भोगाधिकरणत्वञ्च तस्याधाश्रयत्वं च सिध्येदिति लक्षणमवद् परीक्ष्यते—इति।

२ भूतसंयोग इति। पार्थिवं शरीरमिति सिद्धान्तस्यायमाशयः। यत् पृथिव्येवास्य समवायिकारणमिति। न चैतावताऽबादीनां भूतान्तराणां संयोगः शरीरारम्भे निषिध्यते। यथा मृदेव घटस्य समवायिकारणम्—किन्तु तदुपष्टम्भे जलादिकमप्यपेक्ष्यत एवेति।

३ उपेक्षितवानिति—तत्परिहारे यत्नं न कृतवानित्यर्थः।

४ तदिदमिति। अत्र व्याख्यातमिदं वार्तिककारेण। तद्यथा—

पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यानारम्भकत्वात्। पृथिव्यनलाभ्यामारभ्यमाणमगन्धमरसं च कारणगन्धरसयोः करणत्वानारम्भकत्वात्। पृथिव्यनिलाभ्यामगन्धमरसमरूपं च वाय्वारम्भकत्वात्। पृथिव्याकाशाभ्यामगन्धमरसमरूपमस्पर्शं च आकाशे गन्धाद्यभावात्। सर्वत्र समानो न्यायः कारणगुणपूर्व

शरीरमगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यात्। न त्विदमित्थम्भूतम्। तस्मात्पार्थिवं गुणान्तरोपलब्धेः ॥ २८॥ २९ ॥ ३० ॥

**श्रुतिप्रामाण्याच्च ॥ ३१ ॥**

'सूर्यं ते चक्षुर्गच्छतात्' इत्यत्र मन्त्रे 'पृथिवीं ते शरीरमिति' श्रूयते। तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति। 'सूर्यं ते चक्षुः स्पृणोमि' इत्यत्र मन्त्रान्तरे 'पृथिवीं ते शरीरं स्पृणोमी'ति श्रूयते। सेयं[1] कारणाद्विकारस्य स्पृतिरभिधीयत इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद्-भिन्नजातीयानामेककार्यारम्भानुपपत्तिः ॥ ३१ ॥

( ७ ) इन्द्रियभौतिकत्वपरीक्षाप्रकरणम्।

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते—किमाव्यक्तिकान्याहोस्विद् भौतिकानीति। कुतः संशयः ?—

केवलस्यानारम्भकत्वात्। जलानलाभ्यामगन्धश्चारसं च, जलवायुभ्यामगन्धश्चारसश्चा-रूपश्च, जलाकाशाभ्यामगन्धमरसमरूपमस्पर्शश्च, तेजोऽनिलाभ्यामगन्धश्चारसश्चारूपश्च, अनलाकाशाभ्यामगन्धमरसमरूपमस्पर्शश्च, अनिलाकाशाभ्यामेवमेव भूजलानलैरग-न्धमेव, भूजलानिलैरेवमेव, भूजलाकाशैरेवमेव, पृथिव्यनिलानलैरगन्धमरसश्च, पृथि-व्यनलाकाशैरेवमेव, पृथिव्यनिलाकाशैरगन्धमरसमरूपश्च, जलानिलानलैरगन्धमरसश्च, जलानलाकाशैरेवमेव, जलानिलाकाशैरगन्धश्चारसश्चारूपश्च, अनलानिलाकाशैरेवमेव, पृथिव्युदकतेजोवायुभिरगन्धः पृथिव्युदकज्वलनाकाशैरेवमेव, अवनिजलाकाशैरेवमेव, पृथिव्यनिलज्वलनाकाशैरगन्धमरूपश्च, जलानिलानलाकाशैरेवमेव, पृथिव्युदकतेजो-वाय्वाकाशैरगन्धश्चारणगुणस्यैकस्यानारम्भकत्वादिति वाच्यम्। एककारणत्वे तु सत नोऽत्यन्तानुत्पत्तौ नित्यत्वप्रसङ्गश्चेत्युक्तम्।

१ सेयमिति। अस्यापि मन्त्रस्यायमर्थो यद् यस्मादायात तद् तस्मिन्नेव लयं गच्छतीति प्रकृतौ विकारस्य लयाभिधानम्। प्रकृतिशब्देन च कार्यशून्यं कारणमुच्यते, न पुनः कारणे कार्यस्य लयः।

२ स्थाल्यादिष्विति। अयन्तावत्प्रमाणार्थः। विवादाध्यासितं द्व्यणुकं गन्धव-द्भ्यामेव परमाणुभ्यामारभ्यते गन्धवत्वात् उभयवादिसिद्धपार्थिवद्व्यणुकवत्।

३ भाष्यमतेनात्र साङ्ख्यनैयायिकयोरेव विप्रतिपत्तिः। तात्पर्यकृन्मते तु बौद्ध-नैयायिकयोरपीति ध्येयम्। तथा चोक्तन्तात्पर्ये—उपलक्षणं चैतत्। यद्यपि भौतिकानि तदापि किं कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियमाहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः। तत्र पूर्वः संशयः साङ्ख्यनैयायिकयोर्विप्रतिपत्तेः। उत्तरस्तु सौगतनैयायि-कयोरिति।

४ आव्यक्तिकानीति। साङ्ख्यमते इन्द्रियाणामुत्पत्तिर्नाव्यक्तात्साक्षात्

कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात्संशयः ॥३२॥

कृष्णसारं भौतिकं, तस्मिन्ननुपहते रूपोपलब्धिः, उपहते चानुपलब्धिरिति । व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्य उपलम्भो न कृष्णसारप्राप्तस्य । न चाप्राप्यकारित्वमिन्द्रियाणां तदिदमभौतिकत्वे विभुत्वात्सम्भवति । एवमुभयधर्मोपलब्धेः संशयः ॥ ३२ ॥

अभौतिकानीत्याह । कस्मात् ?—

महदणुग्रहणात् ॥ ३३ ॥

महदिति महत्तरं महत्तमं चोपलभ्यते, यथा न्यग्रोधपर्वतादि । अण्विति अणुतरमणुतमं च गृह्यते, यथा न्यग्रोधधानादि । तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते । भौतिकं हि यावत्तावदेव व्याप्नोति । अभौतिकन्तु विभुत्वात्सर्वव्यापकमिति ॥ ३३ ॥

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु—

रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३४ ॥

---

किञ्चाहङ्कारादेव । अत एवोक्तं साङ्ख्यवृद्धैः—सात्त्विकमाहङ्कारिकत्वं इन्द्रियाणाम् । अहङ्कारादि बुद्धिविकाराद्वैकारिकात्तैजसादिन्द्रियाणि जायन्त इति साङ्ख्याः । आत्मनि करणत्वस्य भौतिकत्वाभावादनुमितिः ।

१ संशयकारणोद्भावनपरं सूत्रं 'कृष्णसार' इति । व्यतिरिच्य चोपलम्भोऽहङ्कारिकत्वे सत्येव सम्भवति, अहङ्कारस्य विभुत्वेनाप्रतिघातात् । भौतिकत्वे काचाभ्रपटलादिभिर्भौतिकैः प्रतिघातसम्भवात् ।

२ व्यतिरिच्येति । कृष्णसारव्यतिरेकेण विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिरित्यर्थः ।

३ अभौतिकानीति । साङ्ख्यमतमिदानीं गृहीत्वा अभिवक्तीतीन्द्रियमिति वादिपक्षं दूषयति ।

४ अभौतिकत्वप्रतिपादनपरं सूत्रम्—महदिति । तेजस इन्द्रियम्—अप्राप्यकारित्वेऽतिप्रसङ्गात् । इत्यतः साङ्ख्यानामिति भौतिकमिति वाच्यमभौतिकत्ववादिभिः । महदणुग्रहणम् । चक्षुषा हि स्थूलपरिमाणस्य महत्परिमाणं च गृह्यते भौतिकत्वे तद्सम्भवादित्यर्थः ।

५ न महदिति । पूर्वसूत्रोक्तं साङ्ख्यमतं न्यायमतेन दूषयति ।

६ रश्म्यर्थेत्यस्यायमनन्तरप्रतिपादकं सूत्रम् ।

तयोर्महदण्वोर्महण चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषाद्भवति, यथा प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसन्निकर्षविशेषश्चावरणलिङ्ग । चाक्षुषो हि रश्मि कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति ॥ ३४ ॥

आवरणानुमयत्वे सतीदमाह—

"तदनुपलब्धेरहेतुः" ॥ ३५ ॥

"रूपस्पर्शवद्धि तेज, महत्त्वादनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरिति प्रदीपवत् प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति" ॥ ३५ ॥

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३६ ॥

सन्निकर्षप्रतिषेधार्थेनावरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नासावभाव प्रतिपादयति यथा चन्द्रमस परभागस्य पृथिव्याश्चाधोभागस्य ॥ ३६ ॥

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३७ ॥

भिन्न खल्वय द्रव्यधर्मो गुणधर्मश्च । महदनेकद्रव्यवच्च विषक्तावयवमाप्य द्रव्य प्रत्यक्षतो नोपलभ्यते, स्पर्शस्तु शीतो गृह्यते । तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्प्येते । तथाविधमेव च तैजस द्रव्यमनुद्भूतरूप सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्ण उपलभ्यते । तस्य द्रव्यस्यानुबन्धाद् ग्रीष्मवसन्तौ कल्प्येते ॥ ३७ ॥

---

१ सन्निकर्षविशेषादिति । योऽय सन्निकर्षो विशेषप्रतिपत्तिहेतुभूतावयवस्यार्थैरनुगृह्यत सोऽयमवान्तरसयोगापेक्षयाऽवयवीन्द्रियसन्निकर्ष सन्निकर्षविशेष इत्युच्यते । स चेन्द्रियावयवानामर्थावयवै —इन्द्रियावयवानामर्थेनावयविना—अर्थावयवानामिन्द्रियेण—इन्द्रियस्य चार्थेनेति । स च रश्म्यर्थसन्निकर्षविशेषो महदण्वास्तुल्यो भवतीत्यन्यथा महदण्वाग्रहण सिध्यतीति हृदयम् ।

२ तदनुपलब्धेरिति सूत्र न्यायमतमाक्षिपति । न चाक्षुषा रश्मिर्विद्यत इति सूत्रार्थ । उपलब्धिलक्षणप्राप्तमनुपलभ्यमानमनुमातु न शक्यते । तथा सति नरविषाणादीनामप्यनुमानप्रसङ्ग इति हृदयम् ।

३ महत्त्वादिति वैशेषिकसूत्रमनुवदति । तच्च सूत्र यथा महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति ४ १ ६ ।

४ नानुमीयमानस्येति–आक्षेपपरिहारपर सूत्रम् । प्रत्यक्षमात्रेणानुपलब्धिर्नैकान्ततोऽभावमेव साधयतीत्यर्थ ।

५ आप्य द्रव्यमिति । वायुनीत जलीयत्र्यणुकाद्यर्थ ।

यत्र[1] त्वेषा भवति—

**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ३८ ॥**

यत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते, रूपविशेषस्तु यद्भावात् क्वचिद्रूपोपलब्धिः यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः—स रूपधर्मोऽयमुद्भवसमाख्यात इति। अनुद्भूतरूपश्चायं नायनो रश्मिः। तस्मात् प्रत्यक्षतो नोपलभ्यत इति। दृष्टश्च तेजसो धर्मभेदः। उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथा आदित्यरश्मयः। उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं तेजो यथा प्रदीपरश्मयः। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति ॥ ३८ ॥

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३९ ॥**

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्प्यते तथेन्द्रियाणि व्यूढानि। विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था। द्रव्यविशेषे च प्रतिघातादावरणोपपत्तिर्व्यवहारार्था। सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारितः पुरुषार्थतन्त्रः। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति।

[3]अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः। यश्चावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मो न भूतानि व्यभिचरति—नाभौतिकं प्रतिघातधर्मकं दृष्टमिति। अप्रतिघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति।

१ यत्र त्विति। यत्रैषा रूपोपलब्धिः (तत्र) अनेकद्रव्यसमवायात् रूपविशेषाच्च भवति इति सम्बन्धः सूत्रेण। सूत्रे 'रूपविशेषा'दिति रूपविशेषः उद्भवसमाख्योऽभिधीयते न रूपत्वम्। न रूपत्वं रूपं रूपान्तराद् विशिनष्टि, अपि तूद्भवो विशेषकत्वात् विशेष इत्युच्यते। उद्भवश्च कार्यगम्यः—यस्याभावाद् विद्यमानस्य रूपस्य हेमन्ते न गृह्यते तैजसस्य ग्रीष्मे, यस्य भावात् प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च स उद्भवो नाम विशेषः। स तस्मिन्नायने रश्मौ रूपविशेषो नास्तीत्यतश्चाक्षुषो रश्मिर्नोपलभ्यते।

२ पुरुषार्थतन्त्र इति—पुरुषार्थकारित इत्यर्थः।

३ अव्यभिचाराच्चेत्यादि न सूत्रम्। न्यायसूचीनिबन्धे वृत्तौ विवरणे प्राचीनपुस्तकेषु च तथाविधसूत्रस्याभावात्।

यद्यपि मन्यते "प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघातादभौतिकानीति प्राप्तम्। दृष्टश्चाप्रतिघात काचाभ्रपटलस्फटिकान्तरितोपलब्धे.—" तन्न युक्तम्। कस्मात्? यस्माद्भौतिकमपि न प्रतिहन्यते। काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्। स्थाल्यादिषु च पाचकस्य तेजसोऽप्रतिघात ॥ ३९ ॥

उपपद्यते चानुपलब्धि कारणभेदात्—

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ४० ॥**

यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूत। एव महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारण चाक्षुषो रश्मिर्नोपलभ्यते *निमित्तान्तरत* । तच्च[1] व्याख्यातमनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति[2]। अत्यन्तानुपलब्धिश्चाभावकारणम् ॥ ४० ॥

यो हि ब्रवीति—"लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यते इति, तस्यैतत्स्यात्?"

**न[3], रात्रावप्यनुपलब्धेः ॥ ४१ ॥**

अप्यनुमानतोऽनुपलब्धेरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति। न त्वेवं चाक्षुषो रश्मिरिति ॥ ४१ ॥

उपपन्नरूपा चेयम्—

**बाह्य[4]प्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४२ ॥**

---

१ तच्चेति—निमित्तान्तरमिति यावत्।

२ व्याख्यातमिति—अनेकद्रव्यसमवायादिति सूत्रभाष्ये।

३ न रात्राविति सूत्रम्। स्यादेतत्—आदित्यप्रकाशाभिभवान्मध्यन्दिनोल्काप्रकाशानुपलब्धिरिति यदुक्तं—तदयुक्तम्। तथा सति सर्वपदार्थाना रश्मिमत्त्वप्रसङ्गात्। एव सति सर्वं लोष्टादिरश्मिमत् प्राप्नोति। लोष्टादिरश्मय कस्मान्नोपलभ्यन्त इत्यनुक्तो ब्रूयात्—आदित्यरश्म्यभिभवादिति—एतस्यैवोत्तररूपमेतत् सूत्रम्।

४ बाह्यप्रकाशेति सूत्र दृष्टान्तोपन्यासरूपम्। यद्यत् बाह्यप्रकाशमपेक्षते तस्य तस्यानुपलब्धौ रूपानभिव्यक्तित एव न पुनरभिभवात्। स्वोपलब्धौ बाह्यप्रकाशमनपेक्षमाणानामेवानुपलब्धिरभिभवाद् भवति यथा दिवस तारकाणाम्। विपक्वावयवस्याप्यद्रव्यस्याकाशवर्तिनो यदनुपलब्धिस्तत्तद्रूपस्यानभिव्यक्तेरेव, आप्यद्रव्याणां स्वग्रहणे बाह्यप्रकाशापेक्षत्वात्। एवमेव चाक्षुषस्यापि रश्मे स्वग्रहणे बाह्यप्रकाशापेक्षत्वात् तस्याप्यनुपलब्धिस्तद्रूपानभिव्यक्तेरेव स्यान्न पुनरभिभवात् इति हृदयम्।

बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकम्। तदभावेऽनुपलब्धिः। सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहणं रूपस्यानुद्भूतत्वात्। सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा। तत्र यदुक्तं 'तदनुपलब्धेरहेतुः' इत्येतदयुक्तम्॥४२॥

कस्मात्पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति?—

**अभिव्यक्तौ चाभिभवात्॥४३॥**

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः। यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवो विपर्ययेऽभिभवाभावात्। अनुद्भूतरूपत्वाच्चानुपलभ्यमाने बाह्यप्रकाशानुग्रहाच्चोपलभ्यमाने नाभिभूयत इति। एवमुपपन्नमस्ति चाक्षुषो रश्मिरिति॥४३॥

**नक्तञ्चरनयनरश्मिदर्शनाच्च॥४४॥**

दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनाम्। तेन शेषस्यानुमानमिति।

"जातिभेदवदिन्द्रियभेद इति चेत्?" धर्मभेदमात्रं चानुपपन्नमावरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति॥४४॥

---

१ वृषदंशेति। वृषदंशा[illegible] [illegible] —इन्द्रियत्वं [illegible] विचारणीयम्।

२ अनुमानमिति। अनुमानप्रकारो यथा—

(१) [illegible] —प्रदीपवदिति। (२) अथवा—रश्मिमच्चक्षुः— [illegible] —प्रदीपवदिति। अथवा (३) [illegible] —[illegible]।

३ जातिभेदवदिति। [illegible]

४ धर्मभेदमात्र[illegible]। [illegible]

५ [illegible]

" इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः । कस्मात् ?"—

"अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः" ॥४५॥

" तृणादिसर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्टमव्यवहितेन सन्निकृष्यते व्याहन्यते वै प्राप्तिर्व्यवधानेनेति । यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्याद् न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात् । अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः । सा ज्ञापयत्यप्राप्यकारीणीन्द्रियाणि । अत एवाभौतिकानि । प्राप्यकारित्वं हि भौतिकधर्म इति " ॥ ४५ ॥

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४६ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥४६॥

" *प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात्* " ।

अप्रतिघातात्सन्निकर्षोपपत्तिः ॥ ४७ ॥

न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति । सोऽप्रतिहन्यमानः सन्निकृष्यत इति[1] ॥ ४७ ॥

यच्च मन्यते " न भौतिकस्याप्रतिघात " इति, तन्न–

आदित्यरश्मेः[2] स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४८ ॥

आदित्यरश्मेरविघातात्—स्फटिकान्तरितेऽप्यविघातात्–दाह्येऽविघातात् । 'अविघातादि'ति पदाभिसम्बन्धभेदाद्वाक्यभेद इति । प्रतिवाक्यं चार्थभेद इति । आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते, अविघातात् कुम्भस्थमुदकं तपति । प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः । अप्रतिघातात्प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते । तत्राविघातात्प्राप्तिः । प्राप्तौ तु दाहः । नाप्राप्यकारि तेज इति ।

अविघातादिति च केवलं पदमुपादीयते । कोऽयमविघातो नाम ?

---

१ सन्निकृष्यत इति–काचं निर्भिद्य काचान्तर्गतेनार्थेन सम्बध्यत इत्यर्थः ।

२ आदित्यरश्मेरिति सूत्रम् । भाष्यमतेनात्र तिस्र उक्तयः —

( १ ) आदित्यरश्मेरविघातः ( २ ) स्फटिकान्तरितेऽविघातः , ( ३ ) दाह्येऽविघातः । किन्तु स्फटिकान्तरितेऽपि दाह्ये आदित्यरश्मेरविघात इत्येकैवोक्तिर्ग्रन्थस्य समीचीना प्रतिभाति । स्फटिकान्तरितैरप्यादित्यरश्मिभिस्तूलकादिकं दह्यत एवेति सूत्रकारस्य हृद्गतो भाव इव भासते ।

अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः—क्रियाहेतोरप्रतिबन्धः—प्राप्तेरप्रतिषेध इति। दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम्। न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः। दृष्टौ च प्रस्पन्दपरिस्रवौ। तत्र काचाभ्रपटलादिभिर्नायनरश्मेरप्रतिघाताद्विभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ४८ ॥

"नेतरेतरधर्मप्रसङ्गात्" ॥ ४९ ॥

"काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतिघात इति प्रसज्यते। नियमे कारणं वाच्यमिति" ॥४९॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥५०॥

आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात्। प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम्। यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात्तन्निमित्तं भवति—आदर्शरूपोपघाते तदभावात् कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति—एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥ ५० ॥

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ ५१ ॥

प्रमाणस्य तत्त्वविषयत्वात्। न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्था शक्या नियोक्तुमेवं भवतेति—नापि प्रतिषेद्धुमेवं न भवतेति। न

---

१ अव्यूह्यमानावयवेनेति। यस्य द्रव्यस्य भर्जनकपालादेः अवयवा न व्यूह्यन्ते—पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्यान्तरजनकसंयोगोत्पादेन 'व्यूहनम्'—तन्न क्रियते—तस्य द्रव्यस्य भर्जनकपालादेः अन्तरावयवैः योऽभिसम्बन्धो यद्धे, स एव 'अप्रतिघातः'। एतदुक्तं भवति—सान्तरत्वादवयविद्रव्याणां तदविनाशेनाग्नेयोऽनुप्रवेशः स 'अप्रतिघात'।

२ प्रवेशोऽप्रतिघातमुक्त्वा निस्सरणेऽप्यविघातप्रदर्शयितुमाह—दृष्ट इति। घटस्य जलं यदा परिस्रवते तदा घटच्छिद्रद्वारा निस्सृत्य घर्मरश्मयोऽभ्यन्तरस्थं जलं नाशयन्ति। तत्रापि घटस्य नाशो न भवति।

३ दृष्टाविति। एतदपि सूचयति यत् जलनिस्सरणादपि घटनाशो न भवतीति।

४ रूपविशेष इति। स च द्रव्यान्तरासंयुक्तसमवाय एव, तस्य वा रूपोपलम्भनसामर्थ्यम्। तस्य वा विद्यमानता उदकादिषु सदैव स्वाभाव्यम्।

हीदमुपपद्यते रूपवद्गन्धोऽपि चाक्षुषो भवत्विति—गन्धवद्वा रूपं चाक्षुषं मा भूदिति—अग्निप्रतिपत्तिवद् धूमेनोदकप्रतिपत्तिरपि भवत्विति—उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति । किं कारणम्? यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथाभूताः प्रमाणेन प्रतिपद्यन्त इति । तथाभूतविषयकं हि प्रमाणमिति । इमौ खलु नियोगप्रतिषेधौ भवता देशितौ, काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु, कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति । न । दृष्टानुमिताः खल्विमे द्रव्यधर्माः । प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके । व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः । व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति ॥ ५१ ॥

( ८ ) इन्द्रियनानात्व[1]प्रकरणम् ।

अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा । कुतः संशयः?—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥५२॥**

---

१ एवं भौतिकत्वं प्राप्यकारित्वं चेन्द्रियाणां प्रसाध्येन्द्रियनानात्वप्रकरणमारम्भणीयम् । तस्य चोपोद्घातादवतारः । नानात्वासिद्धौ हि भौतिकत्वञ्च सिध्येत्—तदसिद्धौ च न प्राप्यकारित्वम् । एकत्वे हि रूपादिषु मध्ये नियमेन रूपस्य प्रकाशकत्वादित्यादीनां भौतिकत्वसाधकानामसिद्धिः स्यादिति । तथा च न प्राप्यकारित्वमत्र सिध्येत्, तस्य भूतधर्मत्वादिति । प्रयोजनं चास्य—इन्द्रियनानात्वसिद्धौ सत्यां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादिभिरिन्द्रियातिरिक्तात्मसिद्धिः, अन्यथेन्द्रियस्यैकत्वात्स्वयं प्रतिसन्दधीतेति यदि परिशुद्धौ स्पष्टम् ।

२ स्थानान्यत्व इति सूत्रम् । केचिदिदं सूत्रं भाष्यमनानपेक्ष्य यथाश्रुति व्याचक्षते । स्थानान्यत्वे नानात्वं दृष्टम्—यथा बहूनां घटानामिति, एकस्य च नानास्थानत्वम्—यथाऽवयविन इति ।

तदेतदसमञ्जसमिति वार्तिकतात्पर्ययोः स्पष्टम् । 'स्थानान्यत्व' च स्थानस्य अन्यत्वमुच्यते—'नानास्थानत्व' च नानास्थानानि यस्येत्यन्यपदार्थं 'स्थानान्यत्वात्' अन्य । समानकारणं चैक एव धर्मो, न धर्मद्वयमित्येकतरस्यैकानेकसाधारणं वाच्यम् । तत्र ( १ ) यदि तावदेवं संशयः क्रियते—स्थानान्यत्वे नानात्वैकत्वदर्शनात् संशय इति तदा सूत्रार्थालोचनेनैकत्र स्थानान्यत्वस्यादर्शनात् न समानधर्मः । सूत्रं खल्वेकस्य नानास्थानत्वमाह, न स्थानान्यत्वमात्रम् । अनेकत्रमात्रे हि स्थानान्यत्वमुक्तं सूत्रकारेण—'स्थानान्यत्वे नानात्वादिति' । ( २ ) अथ नानास्थानत्वे सत्येकत्वानेकत्वदर्शनात्संशय इति संशयः क्रियते तदा द्रव्य नाना

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते । नानास्थानश्च सन्नेकोऽवयवी चेति । तेनेन्द्रियेषु भिन्नस्थानेषु[1] संशय इति ॥ ५२ ॥

" एकमिन्द्रियम्[2]—

" त्वगव्यतिरेकात् " ॥ ५३ ॥

त्वगेकमिन्द्रियमित्याह । कस्मात्? अव्यतिरेकात् । न त्वचा किञ्चिदिन्द्रियाधिष्ठानं न प्राप्तम्, न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति । यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति " ।

नेन्द्रियान्तरार्थानुपलब्धेः[3] । स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः । न स्पर्शग्राहकादिन्द्रियादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः, न च गृह्यन्ते । तस्मान्नैकमिन्द्रियं त्वगिति ।

---

स्थानमनेकं न किञ्चिद् दृष्टमिति न समानधर्मत्वम् । 'अवयविनानास्थानत्वादिति' सूत्रं नानास्थानत्वेनैकत्वमाह न तु नानात्वमपि । यत् पुनर्घटाद्यनेकम् न तन्नानास्थानमुक्तं सूत्रकृता अपि तु स्थानान्यत्वमेव—'स्थानान्यत्वे नानात्वात्' इत्यनेनेति ।

वर्धमानोपाध्यायाश्चात्र संशयबीजमन्यथा वर्णितवन्तः । सूत्राक्षरानुसारेण स्थानान्यत्वेन नानात्वसूचनमुद्भावितम्—न पुनरेकत्वम्—एकत्वं च संशयबीजम् । नानास्थानत्वादेकत्वस्य द्वितीयसूत्रांशेन सूचितम्—तत्र च नानात्वमुद्भावितम् । उभयथापि संशयबीजमनुक्तमेव वर्तत इति ।

एवं सूत्रं यथाश्रुतमसम्बद्धं ज्ञात्वा तदुच्छृङ्खलतामवधीर्यार्थमेव व्याख्यातवान् भाष्यकारः ।

सूत्रार्थस्तु स्पष्ट एव—यदा वस्तूनि नानास्थानमधितिष्ठन्ति तदा तान्यपि नानैव भवन्ति, यथा घटपटौ । एकमेव च वस्तु नानास्थानान्यधितिष्ठद् दृष्टम्—यथा नानावयवव्यापकोऽवयवी । एवं च यदा वयमिन्द्रियाणि नानास्थानान्यधितिष्ठन्तीति पश्यामस्तदा जायते संशयः—किमेतानि घटपटवन्नाना—उतावयविवदेकं भवन्ति ।

1 भिन्नस्थानेष्विति । अत्र नानास्थानत्वनिमित्त इन्द्रियेष्वेकानेकत्वसंशयः ।
2 एकमिन्द्रियमिति पूर्वपक्षः । तदुद्भावकं सूत्रम्—त्वगव्यतिरेकादिति ।
3 नेन्द्रियान्तरार्थेति पूर्वपक्षप्रत्युत्तरभाष्यम् ।

"त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः । यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति"।

व्याहतत्वादहेतुः । त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा 'त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिः' इत्युच्यते । एवञ्च सति नानाभूतानि विषयग्राहकाणि विषयव्यवस्थानात्—तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात्। तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति।

सन्दिग्धश्चाव्यतिरेकः । पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि । न च तेष्वसत्सु विषयग्रहणं भवतीति । तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५३ ॥

न युगपदर्थानुपलब्धेः ॥ ५४ ॥

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमिति—आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्युः । न च युगपद्-

१ व्याहन्यत इति । प्रागेकमिन्द्रियं त्वगित्यभ्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिज्ञामनुजानातीति व्याघातः ।

२ न युगपदिति सिद्धान्तनिरूपणपरं सूत्रम् । नैतदस्ति 'एकमिन्द्रियमिति'—कस्मात्—युगपदर्थानुपलब्धेरिति सम्बन्धः ।

३ आत्मा मनसेत्यादिभाष्यकारीयव्याख्यानं वार्तिककारस्यारुचि । तद्बीजं च तत्रैवोपन्यस्तम् । तथा—यथैकेन्द्रियवादिनो युगपदनेकार्थसन्निधाने सति युगपदुपलब्धिदोषो भवति, तथानेकेन्द्रियवादिनोऽप्येकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गः । स एव चात्र परिहारः स एवैकेन्द्रियवादिनोऽपीति ।

वस्तुतस्तु न ज्ञानानां यौगपद्यमिह विवक्षितम्-किन्तु एकदैवार्थानां ग्रहणमिति परिशुद्धिः ।

भाष्यकारीयव्याख्यानं दूषयित्वा सूत्रमन्यथा व्याख्यातवान् वार्तिककारः । यत्तदेकमिन्द्रियं सर्वार्थमित्येकेन्द्रियवादी मन्यते तत् किं प्राप्यकारि उत न । यदि प्राप्यकारि, तर्हि किं तदिति वक्तव्यम् । यदि त्वगेव तत—तर्हि त्वचाऽप्राप्तानां रूपाणामग्रहणप्रसङ्गः । यथाप्राप्तमेव रूपं गृह्णीते—स्पर्शादिष्वप्येवमेव प्रसङ्गः । अथ किञ्चिदिन्द्रियमप्राप्तं गृह्णाति किञ्चित्प्राप्तम्-एवं सति करणधर्मातिक्रमः ।" ननु करणधर्मातिक्रमः । किं मा भूदिति' इति चेत्—तन्निराकरणपरमिदं सूत्रम्-'न युगपदि'ति । यथाऽनेकेन्द्रियवादिन एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गे करणधर्मादिति' परिहारस्तथैव —तथायमेकेन्द्रियपक्षे न सम्भवति, तथाभूतस्य करणधर्मातिक्रमोऽनुपगमादित्याशय इति ।

पादयो गृह्यन्ते। तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति। असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम्। साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ॥ ५४ ॥

## विप्रतिषेधाच्च न त्वगेका ॥ ५५ ॥

न खलु त्वगेकमिन्द्रियं—व्याघातात्। त्वचा रूपाण्यप्राप्तानि गृह्यन्त इत्यप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः। स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनामप्राप्तानामग्रहणमिति प्राप्तम्।

"प्राप्याप्राप्यकारित्वमिति" चेत्—आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्येत—"प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति" एवं सति नास्त्यावरणम्। आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति ॥ ५५ ॥

एकत्वप्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते[1]—

## इन्द्रियार्थपञ्चत्वात् ॥ ५६ ॥

अर्थः प्रयोजनं, तत् पञ्चविधमिन्द्रियाणाम्। स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते। स्पर्शरूपग्रहणे च ताभ्यामेव न गन्धो गृह्यत इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते। त्रयाणां ग्रहणे न तैरेव रसो गृह्यत इति रसग्रहणप्रयोजनं रसनमनुमीयते। न चतुर्णां ग्रहणे तैरेव शब्दः श्रूयत इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात्पञ्चैवेन्द्रियाणि ॥ ५६ ॥

## "न, तदर्थबहुत्वात्" ॥ ५७ ॥

१ एकत्वप्रतिषेधादिति। अत्र वाक्ये—(१) 'एकत्वप्रतिषेधात्'—अनन्तरम्—नानात्वसिद्धौ स्थापनाहेतुरुपादीयते—(२) अथवा प्रतिषेधहेतुभिरेव 'एकत्वप्रतिषेधात्' एव 'नानात्वसिद्धौ' समायातम्—'स्थापनाहेतुरपि' 'शिष्यशिक्षार्थमुपादीयत इति च—उभयथा सम्बन्धः ॥

अत्र वार्त्तिकोद्दिष्टम्—यद्यपि साधनदूषणमात्रेण साध्यं न निवर्तते तथाऽपि परसाध्यनिवृत्तिरेव यत्र साध्यते तत्र तद्विपरीतसिद्धिः। एतदभिप्रायेणैवैतद्भाष्यम्। प्रयोगस्त्वेवम्—एकत्र शरीरे नैकमिन्द्रियम् युगपद्विषयसन्निधानेऽपि क्रमवृत्तित्वात् —यत् पुनरेकं न तत् युगपद्विषयसन्निधानेऽपि क्रमवृत्ति—यथा चक्षुः—तथा चेन्द्रियम्—तस्मान्नैकमिति।

"न खल्विन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणीति सिद्ध्यति। कस्मात्? तेषामर्थानां बहुत्वात्। बहवः खल्विमे इन्द्रियार्थाः। स्पर्शास्तावच्छीतोष्णानुष्णाशीता इति। रूपाणि शुक्लहरितादीनि। गन्धा इष्टानिष्टोपेक्षणीयाः। रसाः कटुकादयः। शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः। तद्यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद्बहूनीन्द्रियाणि प्रसज्यन्त इति" ॥ ५७ ॥

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५८ ॥

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थाना गन्धादीनां यानि गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद्ग्राहकान्तराणि न प्रयोजयन्ति। अर्थसमूहोऽनुमानमुक्तो नार्थैकदेशः। अर्थैकदेशं चाश्रित्य विषयपञ्चत्वमात्रं भवान्प्रतिषेधति। तस्मादयुक्तोऽयं प्रतिषेध इति।

"कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति"?

स्पर्शः खल्वयं त्रिविधः—शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन सङ्गृहीतः। गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति, स्पर्शभेदानामेकसाधनसाध्यत्वाद् येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानां, रूपत्वेन रूपाणां, रसत्वेन रसानां, शब्दत्वेन शब्दानामिति।

गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद् ग्राहकान्तराणां प्रयोजकानि। तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति ॥ ५८ ॥

" यदि सामान्यं सङ्ग्राहकं, प्राप्तमिन्द्रियाणाम्—

" विषयत्वाव्यतिरेकादेकत्वम् " ॥ ५९ ॥

विषयत्वेन हि सामान्येन गन्धादयः सङ्गृहीता इति " ॥ ५९ ॥

न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ६० ॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या अनुमीयन्ते। अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्याः। तस्मादसम्बद्धमेतत्।

अयमेव चार्थोऽनूद्यते—बुद्धिलक्षणपञ्चत्वादिति। बुद्धय एव लक्षणानि, विषयग्रहणलिङ्गत्वादिन्द्रियाणाम्। तदेतत्—'इन्द्रियार्थपञ्चत्वात्' इत्येतस्मिन् सूत्रे कृतभाष्यमिति। तस्माद् बुद्धिलक्षणपञ्चत्वात् पञ्चेन्द्रियाणि।

अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणाम्। सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम्। कृष्णसाराधिष्ठानं चक्षुः बहिर्निःसृतं रूपग्रहणलिङ्गम्। नासाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, कर्णच्छिद्राधिष्ठानं श्रोत्रम्, गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति।

गतिभेदादपीन्द्रियभेदः। कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति। स्पर्शनादीनि त्विन्द्रियाणि विषया एवाश्रयोपसर्पणात् प्रत्यासीदन्ति। सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति।

आकृतिः खलु परिमाणमियत्ता। सा पञ्चधा। स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि। चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि। श्रोत्रं नान्यदाकाशात्। तच्च विभु, शब्दमात्रानुभवानुमेयं, पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकमिति।

जातिरिति योनिं प्रचक्षते। पञ्च खल्विन्द्रिययोनयः—पृथिव्यादीनि भूतानि। तस्मात्प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥ ६० ॥

"कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति"—

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६१ ॥

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः। वायुः स्पर्शव्यञ्जकः। आपो रसव्यञ्जिकाः। तेजो रूपव्यञ्जकम्। पार्थिवं किञ्चिद् द्रव्यं कस्यचिद् द्रव्यस्य गन्धव्यञ्जकम्। अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः[1]। तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ॥ ६१ ॥

१ भूतगुणविशेषोपलब्धिनियम इति। 'पार्थिवं घ्राणम्, रूपरसगन्धस्पर्शेषु नियमेन गन्धस्य व्यञ्जकत्वात्' इत्येवंरूपो नियमोऽत्र विवक्षितः।

अत्रेदमवधेयम्। इन्द्रियपञ्चत्वेन हस्तपादपायूपस्थवाचामिन्द्रियत्वनिषेधोऽपि सूचितः, तेषामिन्द्रियलक्षणविरहात्। यच्छरीरसंयुक्तं संस्कारदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रियलक्षणम्। न चैतदस्ति हस्तादिषु। "शरीराश्रितमसाधारणकारीन्द्रियमिति लक्षणं हस्तादिष्वपि वर्तते" इति चेत्—वक्तव्यं हस्तादीनामसाधारणं कार्यम्। "उक्तमेतत्—वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानामिति" चेत्—आदानविहरणोत्सर्गा वक्रहस्तादिभिरपि शक्या कर्तुम्। अपि चास्ति कण्ठहृदयाऽऽमाशयपक्वाशयादीनामपि निगरणादि तदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन्—इति तात्पर्यकाराः।

"नायं गुणनियमयोगः साधुः । कस्मात्? यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते । पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते, गन्ध एव एको गृह्यते । एवं शेषेष्वपीति" ॥ ६४ ॥

कथं तर्हीमे गुणा विनियोक्तव्या इति?—

"एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः" ॥ ६५ ॥

"गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः । अतस्तदनुपलब्धिः—तेषां तयोः तस्य चानुपलब्धिः—घ्राणेन रसरूपस्पर्शानां, रसनेन रूपस्पर्शयोः, चक्षुषा स्पर्शस्येति" ।

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति? 'संसर्गाच्चानेकगुणग्रहणम्। अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते । एवं शेषेष्वपीति" ॥ ६५ ॥

नियमस्तर्हि न प्राप्नोति । संसर्गस्यानियमाच्चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरिति ।

नियमश्चापपद्यते । कथम्?—

"विष्टं ह्यपरं परेण" ॥ ६६ ॥

पृथिव्यादीनां पूर्वपूर्वमुत्तरेणोत्तरेण विष्टम् । अतः संसर्गनियम इति । तच्चैतद् भूतसृष्टौ वेदितव्यं नैतर्हीति" ॥ ६६ ॥

न, पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥

नेति त्रिसूत्रीं प्रत्याचष्टे । कस्मात्? पार्थिवस्य द्रव्यस्याप्यस्य च

१ एवं शेषेष्विति । पृथिव्यादिप्रकृतीनां घ्राणादीनां गन्धादिप्रतिव्यक्तिनियम एवमुपपद्यते यदि गन्धमात्रगुणा पृथिवी रसमात्रगुणा आप इत्यादि, न त्वन्यथा । अन्यथा तु पार्थिवेन घ्राणेन गन्धवद् रूपरसस्पर्शा अपि व्यज्यरन्निति हृदयम् ।

२ विष्टमिति सूत्रम् । तत्र षड्दर्शन व्याख्यानभाष्यसम्मतश्च प्रतिभाति । तदभिमतं तु प्रदानान्तात्पर्यं तद्यथा— 'अपरं' पृथिव्यादि 'परेण' अबादिना 'विष्टम्' व्याप्तम् । नाबादिमन्तरेणास्ति पृथिवी । तेन पृथिव्यामबादिगुणानां रसादीनां नियमेनोपलम्भः, न त्वबादिषु पृथिवीगुणानाम् । एवमेवाप्सु अनलादिगुणा व्याख्याता इति ।

३ भूतसृष्टाविति । भूतसृष्ट्यादिप्रतिपादकेषु पुराणादिग्रन्थेष्वित्यर्थः ।

४ नैतर्हीति । नेदानीमिति यावत्—इदानीन्तनैरस्माभिस्तदननुभवादित्याशयः ।

प्रत्यक्षत्वात्। महत्त्वानेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा, रूपाभावात्। तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वान्न संसर्गादनेकगुणग्रहणं भूतानामिति। भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते। नियमं वा कारणमुच्यतामिति।

रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवो रसः षड्विधः, आप्यो मधुर एव। न चैतत्संसर्गाद्भवितुमर्हति। रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः। संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति। एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः। पार्थिवं हरितलोहितपीताद्यनेकविधं रूपमाप्यं तु शुक्लमप्रकाशकम्। न चैतदेकगुणानां संसर्गे सत्युपपद्यत इति।

उदाहरणमात्रं चैतत्। अतः परं प्रपञ्चः।

स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात्। पार्थिवोऽनुष्णाशीतः स्पर्श उष्णस्तैजसः प्रत्यक्षः। न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यत इति।

अथ वा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात्। चतुर्गुणं पार्थिवं द्रव्यम्, त्रिगुणमाप्यं प्रत्यक्षम्। तेन तत्कारणमनुमीयते तथागुण्यमिति। तस्य कार्यं लिङ्गम्, कारणभावाद्धि कार्यभाव इति। एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थाऽनुमानमिति।

---

१ महत्त्वेति। त्रिविधं हि द्रव्यं चाक्षुषमिष्यते-पार्थिवमाप्यं तैजसं च। तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्यात्, नेतरत्, अरूपवत्त्वात्। न च "रूपिद्रव्यसमवायाच्चाक्षुषत्वमस्त्ययोरपि पार्थिवाप्ययोः" इति वाच्यम्। तथा सति नभोनभस्वतोरपि अरूपवतोः चाक्षुषत्वप्रसङ्गात्। अस्ति हि रूपवता तेजसा तयोरपि संयोग इति।

२ रसयोरित्यादि 'उपपद्यत' इत्यन्तस्य ग्रन्थसन्दर्भस्य सङ्क्षेपार्थो वर्णितस्तात्पर्यकारेण—पार्थिवाप्यसम्बन्धिनो रसभेदस्य रूपभेदस्य चैकानेकविधत्वेन प्रत्यक्षत्वमिति सूत्रस्थहेतोरन्यथा व्याख्यानमिति।

३ उदाहरणमात्रमिति। पार्थिवतैजसयोरप्येवमेव व्याख्यानं युक्तमिति भावः।

४ तथागुण्यमिति। कार्यस्य व्यवस्थितगुणस्य दर्शनात् कारणमपि व्यवस्थितगुणमनुमीयत इत्यर्थः।

दृष्टश्च विवेकः—पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते, आप्यं च पराभ्याम्, तैजसं च वायुना। न चैकैकगुणं गृह्यत इति। निरनुमानं तु—'विष्टं ह्यपरं परेण' इत्येतदिति। नात्र लिङ्गमनुमापकं गृह्यत इति येनैतदेवं प्रतिपद्येमहि।

यच्चोक्तम्—"विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति"—नियमकारणाभावादयुक्तम्। दृष्टं च साम्प्रतमपरं परेण विष्टमिति—वायुना च विष्टं तेज इति। विष्टत्वं संयोगः। स च द्वयोः समानः। वायुना च विष्टत्वात् स्पर्शवत्तेजो, न तु तेजसा विष्टत्वाद् रूपवान्वायुरिति नियमकारणं नास्तीति। दृष्टं च तैजसेन स्पर्शेन वायव्यस्य स्पर्शस्याभिभवादग्रहणमिति। न च तेनैव तस्याभिभव इति ॥ ६७ ॥

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य 'न सर्वगुणानुपलब्धे'रिति चोदितं समाधीयते—

पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६८ ॥

---

१ नियमकारणाभावादिति। नियमः—गन्धश्च वै पृथिव्यामित्येवमादिः। तस्य कारणं प्रमाणं त्वन्मते नास्ति—तद्बाधकस्यैव प्रमाणस्य सत्यत्वात्। तस्माद् भूतसृष्टिं कथंचिदुपचारतो व्याख्येयस्य।

२ विष्टत्वमिति। आस्तामितरप्रत्यक्षबाधः। विकल्पतोऽपि विष्टत्वमनुपपद्यत इत्यभिप्रायः।

३ द्वयोः समान इति। अन्यगुणो यद् यत्रोपलभ्यते तत् किं संयोगात्, उत व्याप्तेः। यदि व्याप्तेः तदयोगोऽल्के वह्निमस्पृशन् वह्निगुणो गृह्येत, तयोर्व्याप्यव्यापकभावाभावात्। तस्मादन्यसंयोग एव हेतुः। स च द्वयोरविशिष्ट इति तेजसा संयुक्तस्य वायोरपि रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इति।

४ पूर्वपूर्वेति सूत्रम्। घ्राणादीनां मध्ये यत् पूर्वं पूर्वं तत् गुणस्यैकस्य उत्कर्षात् (अर्थात् अभिव्यक्तिसामर्थ्यात्) तत्तत्प्रधानम् (स स गुणः प्रधानो यस्य तत्)। एवं च घ्राणं गन्धप्रधानम्, रसनं रसप्रधानमित्यादि सूत्रार्थो भाष्यसम्मतः।

अत्र तु वार्त्तिककारस्यानभिरुचिः। विषयग्राहकत्वं यत् प्रधानत्वं तत् सर्वेषामिन्द्रियाणां विषयग्राहकत्वात् सर्वाणि प्रधानानि—इत्यस्याशयो बीजम्।

किन्तु यस्मिन् व्याख्याने वार्त्तिककारस्यारुचिः तद्भाष्यकारस्य विवक्षितमिति ध्येयम्। 'तत्तत्प्रधानम्' इत्यस्य नायमर्थो यत् पूर्वं पूर्वमिन्द्रियं परस्मात्प्रधानम्—अपि तु स स गुणः प्रधानो यस्य तदेव पूर्वं पूर्वमिन्द्रियमिति। न चात्र व्याख्याने वार्त्तिकोक्तदूषणस्यावकाशः।

तस्मान्न सर्वगुणोपलब्धि । घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्तत्प्रधानम् । का प्रधानता ? विषयग्राहकत्वम् । को गुणोत्कर्ष ? अभिव्यक्तौ समर्थत्वम् । यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वं, गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्, एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वम्, गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपग्राहकत्वम् । तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिरिति ।

यस्तु प्रतिजानीते—गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकमेवं रसनादिष्वपीति तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यत इति ॥ ६८ ॥

'किं कृतं पुनर्व्यवस्थानं—किञ्चित्पार्थिवमिन्द्रियं, न सर्वाणि, कानिचिदाप्यतैजसवायव्यानि इन्द्रियाणि न सर्वाणीति ?''—

## तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गे पुरुषसंस्कारकारितो भूयस्त्वम्' । दृष्टो हि प्रकर्षे भूयस्त्वशब्द —प्रकृष्टो यथा विषयो भूयानित्युच्यते । यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कारवशाद्विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते, न सर्वं सर्वार्थम्, एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्वर्त्यन्ते, न सर्वविषयग्रहणसमर्थानीति ॥ ६९ ॥

"स्वगुणान्नोपलभन्त[3] इन्द्रियाणि कस्मादिति चेत्"—

---

वर्धमानोपाध्यायास्त्वेवं व्याचक्षते । पूर्वं पूर्वं घ्राणादिषु गुणानां गन्धादीनामुत्कर्षात्—उत्तररसनाद्यवृत्तित्वे सति पूर्ववृत्तित्वात्—तत्तत्प्रधानम् । तेन तेन गुणेन प्रधानमित्यर्थ यतस्तस्माद् घ्राणादिना न सर्वगुणोपलब्धि । तथा च यत्रैव गुणोत्कर्षरूपं प्रधानं स एवाद्भूतस्तेन गृह्यते न सर्व—इति भाव इति ।

१ उत्कर्षादिति । सर्वेषां समवायाविशेषेऽपि गन्धस्यैव घ्राणे उत्कर्ष इति गन्धमेव गृह्णाति । तेनागन्धवत्त्वनिषेधपरं प्राधान्याभिधानम् । न पुनर्गन्धवत्त्वं गन्धग्रहणे प्रयोजकमपि तु गन्धस्योत्कर्ष इति सिद्धम् ।

२ तस्य यथा गुणयोगमिति । "गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं न तु गन्धस्य तत्रोत्कर्षात्" इति य प्रतिजानीते तस्य वादिन सर्वेषामेव पार्थिवानां गुणानां घ्राणग्राह्यत्वप्रसङ्ग इति भाव ।

३ स्वगुणानिति—सूत्रोपोद्घातपरं वाक्यम् । वृत्तिकृतस्त्वन्यथैवोपोद्घातमाहु — घ्राणादीनां गन्धादिगुणवत्त्वे मानमाहेति ।

-न्या सू १२

## सगुणानामिन्द्रियभावात् ॥ ७० ॥

" स्वान् गन्धादीन्नोपलभन्ते घ्राणादीनि। केन कारणेनेति चेत् "- स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्। घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति। तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति। एवं शेषाणामपि ॥ ७० ॥

"यदि पुनर्गन्धः सहकारी च स्याद् घ्राणस्य, ग्राह्यश्चे"त्यत आह—

## तेनैव तस्याग्रहणाच्च ॥ ७१ ॥

न स्वगुणोपलब्धिरिन्द्रियाणाम्। यो ब्रूते-' यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति '-तादृगिदम्। तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ७१ ॥

## " न, शब्दगुणोपलब्धेः " ॥ ७२ ॥

" स्वगुणान्नोपलभन्त इन्द्रियाणीति,-एतन्न भवति। उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति " ॥ ७२ ॥

## तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति। न शब्दः शब्दस्य व्यञ्जकः। न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षम्-नाप्यनुमीयते। अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं च आकाशस्येति। परिशेषश्चानुमानं वदितव्यम्। आत्मा तावच्छ्रोता, न करणम्। मनसः श्रोत्रत्वे बधिरत्वाभावः। पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं श्रोत्रभावे चासामर्थ्यम्। अस्ति चेदं श्रोत्रम्। आकाशं च शिष्यते। परिशेषादाकाशं श्रोत्रमिति ॥ ७३ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्याद्यमाह्निकम् ॥

---

१ तेनैवेतिसूत्रं वृत्तिकारोऽन्यथा व्याख्यातवान्। तद्यथा इत्थं च गन्धादिसिद्धौ अप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाह-तेनैवेति। 'तेन' इन्द्रियेण 'तस्य' सगुणस्य इन्द्रियस्य अग्रहणात् अनुद्भूतत्वकल्पनमिति।

२ तदुपलब्धिरितिसूत्रम्। यथेतराणीन्द्रियाणि सगुणानि न तथाऽऽकाशम्। कस्मात्? शब्दस्येतरगुणवैधर्म्यात् आकाशस्य चेतरद्रव्यवैधर्म्यादित्यर्थः। न श्रोत्रं सशब्दमिन्द्रियमिति भावः।

# अथ तृतीयाध्यायस्य द्वितीयमाह्निकम्।

## (१) बुद्ध्यनित्यताप्रकरणम्।

[1]परीक्षितानीन्द्रियाण्यर्थाश्च। बुद्धेरिदानीं परीक्षाक्रम। सा किमनित्या नित्या वेति? कुत संशय?

**कर्माकाशसाधर्म्यात् संशयः॥ १॥**

अस्पर्शवत्त्व ताभ्यां समानो धर्म उपलभ्यते बुद्धौ। विशेषश्चोपजनापायधर्मवत्त्व विपर्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते। तेन संशय इति॥ १॥

"[3]अनुपपन्नरूप खल्वय संशय। सर्वशरीरिणा हि प्रत्यात्मवेदनीया अनित्या बुद्धि सुखादिवत्। भवति च संवित्ति–ज्ञास्यामि जानामि अज्ञासिषमिति। न चोपजनापायावन्तरेण त्रैकाल्यव्यक्ति। ततश्च त्रैकाल्यव्यक्तेर नित्या बुद्धिरित्येतत्सिद्धम्। प्रमाणसिद्ध चेद शास्त्रेऽप्युक्तम्–'इन्द्रियार्थसन्निकर्षोत्पन्नम्,'—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इत्येवमादि। तस्मात्संशयप्रक्रियानुपपत्तिरिति"।

---

१ परीक्षितानीति। बाह्यप्रमेयपरीक्षा विधाय शरीरा तवृत्तिप्रमेयपरीक्षामारभते–इति परिशुद्धि। तत्र निबन्धप्रकाशकृत —शरीरान्तर्वृत्ति व न तावच्छरीरान्तस्सम वत्तवम् बुद्धिमनसोरतथा वात्। नापि तत्संयुक्तत्वम् बुद्धौ तदभावात् शरीराद्यति व्यापकत्वाच्च।

एव च शरीरावच्छेद्यव्याप्यभागानुकूलसम्बन्धवद्वृत्तिकारणप्रमेयविभाजकोपाधिमत्प्रमेयपरीक्षैव द्वितीयाह्निकार्थ इति वक्तु युक्तम्। तद्रूपस्य निर्वेदापयोगेन तत्र जिज्ञासोपपत्त। न चातिव्याप्ति। आत्मादिचतुष्क भागानुकूलसम्बन्धस्य शरीरानवच्छेद्यत्वात्। अतिप्रसक्तनापि रूपेणैकवाक्यतानिर्वाहाद्वा। तेन रूपेण बुद्धिमनसोरेव विवक्षितत्वात्। यद्यप्येतावताऽपि नाह्निकया सङ्गतिरुक्ता बुद्धिमात्रस्याह्निकार्थाभावनान्तराह्निकार्थानभिधानात्—तथाऽपि बुद्धिपदस्योपलक्षणतया मनसोऽप्युपसंग्रहो भवत्येवेति।

२ विशेषश्चेति। विशेषश्च उपजनापायधर्मवत्त्वम्–अनित्यनित्ययो विपर्यय बुद्धौ नोपलभ्यते –इति सम्बन्ध।

३ अनुपपन्नेति। यद्युपलभ्यमानज्ञानविषय संशय, सोऽनुपपन्न साङ्ख्यानामपि तदनित्यत्वस्याभ्युपगमात्। अथ साङ्ख्याभिमतमहत्तत्त्वविषय तस्य महत्त

दृष्टिप्रवादोपालम्भार्थं तु प्रकरणम् ।

एवं हि पश्यन्तः प्रवदन्ति सांख्याः —" पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति "।

साधनं च प्रचक्षते—

" विषयप्रत्यभिज्ञानात् " ॥ २ ॥

" किं पुनरिदं प्रत्यभिज्ञानम् ? यं पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्। एतच्चावस्थिताया बुद्धेरुपपन्नम्। नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः । नान्यज्ञातमन्यः प्रत्यभिजानातीति " ॥ २ ॥

साध्यसमत्वादहेतुः ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपीति । किं कारणम् ? चेतनधर्मस्य करणेऽनुपपत्तिः । पुरुषधर्मः खल्वयं—ज्ञानं दर्शनमुपलब्धिर्बोधः

स्वस्य सत्त्व एव विप्रतिपत्तिरिति कुतस्तद्गतधर्मविचारः । सति धर्मिणि धर्मश्चिन्त्यते न सन्दिग्धसत्त्व इति ।

१ दृष्टिप्रवादेति। सांख्यानां हि दर्शनं प्रवादो महदन्तःकरणं बुद्धिरिति—'तदुपालम्भनार्थं दूषणार्थं प्रकरणमिति। अयमभिप्रायः—नेह नित्यानित्यविचारः प्रधानतः अपि त्वनया द्वारा वृत्तिव्यतिरिक्ता सांख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण। यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयव्ययवतीभ्यो व्यतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात्। अथ तु नित्यत्वसाधनानि प्रतिसन्धानादीनि न बुद्धिनित्यत्वसाधनायालमिति वृत्तय एव बुद्धयो न तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति सिध्यति बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् (सूत्र १।१।१५) इति बुद्धिलक्षणम्। तथा चास्य विचारस्य लक्षणं एव सङ्गतिः । इतरथा तु प्रधानतो नित्यानित्यविचारो न लक्षणेन सङ्गच्छते।

२ बुद्धिनित्यत्वसाधनप्रदर्शनपरं सूत्रम्—विषयप्रत्यभिज्ञानादिति। वृत्तिमान् किल विषयं प्रत्यभिजानन् आत्मानमपि प्रत्यभिजानाति। न च चेतना वृत्तिमान् तस्य कूटस्थनित्यत्वात्। अन्यथा तु पूर्वापरावस्थाभेदवान् कूटस्थनित्यः स्यात्। परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यत इति भावः ।

३ पूर्वसूत्रोक्तसाधनदूषणपरं सूत्रम्—साध्यसमत्वादिति। वृत्तयो हि वृत्तिमतो भिन्नाः। तेन तासामनित्यत्वेऽपि न वृत्तिमान् कौटस्थ्याच्च्यवते। तथा च प्रत्यभिजानात् प्रत्यभिज्ञाता आत्मैव नित्यः स्यात्, न त्वन्तःकरणं बुद्धिसंज्ञकम्। न हि तत् प्रत्यभिज्ञानं प्रकाशने इत्याशयः ।

प्रत्ययोऽध्यवसाय इति । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति । तस्यैतस्माद्धेतोर्नित्यत्व युक्तमिति । करणचैतन्याभ्युपगमे तु चेतनस्वरूप वचनीयम् । नानिर्दिष्टस्वरूपमात्मान्तर शक्यमस्तीति प्रतिपत्तुम् । ज्ञान चेद्बुद्धेरन्त करणस्याभ्युपगम्यते, चेतनस्येदानीं किं स्वरूप को धर्म किं तत्त्वम्? ज्ञानेन च बुद्धौ वर्तमाननाय चेतन किं करोतीति?

"चेतयत इति चेत्" न, ज्ञानादर्थान्तरवचनम् । पुरुषश्चेतयते बुद्धिर्जानातीति नेद ज्ञानादर्थान्तरमुच्यते । चेतयते जानीते बुध्यते पश्यति उपलभते इत्येकोऽयमर्थ इति । "बुद्धिर्ज्ञापयतीति चेत्" अद्धा, जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत् । एव चाभ्युपगमे ज्ञान पुरुषस्येति सिद्ध भवति, न बुद्धेरन्त करणस्येति ।

प्रतिपुरुष च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम् । यश्च प्रतिजानीते—"कश्चित्पुरुषश्चेतयते कश्चिद्बुध्यते कश्चिदुपलभते कश्चित्पश्यतीति" पुरुषान्तराणि खल्विमानि—चेतनो बोद्धोपलब्धा द्रष्टेति नैकस्यैते धर्मा इति । अत्र क प्रतिषेधहेतुरिति ।

"अर्थस्याभेद इति चेत्"—समानम् । "अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्ति"—इत्येव चेन्मन्यसे–समानं भवति–पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते । तत्रोभयोश्चेतनत्वादन्यतरलोप इति ।

"यदि पुनर्बुध्यतेऽनयेति बोधन बुद्धिर्मन एवोच्यते, तच्च नित्यम्"—अस्त्वेतदेवम् । न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम् । दृष्ट हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानम्–'सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति' चक्षुर्वत्, प्रदीपवच्च प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति । तस्माज्ज्ञातुरय नित्यत्वे हेतुरिति ॥ ३ ॥

---

१ अर्थस्य अभेद इति वार्तिकसम्मत पाठ । 'चेतयते'—'बुध्यते'—इत्यादिशब्दानामेकमेवाभिधेयम्—ततश्च एकेनैव नाम्ना पुरुषेण तथा सर्वेषामभिसम्बन्ध इति न युक्तं भवति । एव यदि पूर्वपक्षिणोऽभिप्रायस्तर्हि स एवार्थाभेदस्तस्यापि पक्षे न युज्यत एव । तथा हि 'बुद्धिर्जानाति — पुरुषश्चेतयते'—इत्यनयोर्वाक्ययोः ज्ञानचेतनयोरेकार्थत्वात्तया सम्बन्धस्य बुद्धिपुरुषयोर्द्वैधात् कतरत् युक्तमेव भवति । वरमेकस्यैव सम्बन्धोऽभ्युपगन्तुमित्याशय ।

प्राचीनतालपत्रपुस्तकानुसारेण 'अर्थस्य भेद' इत्येव पाठ । स एव च भाष्यचन्द्रसम्मत । तदनुसारेण सन्दर्भस्यास्यार्थश्चन्द्रादेवावगन्तव्य ।

यच्च मन्यते—" बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति, वृत्तिश्च वृत्तिमतो नान्येति "—

तच्च—

न[1], युगपदग्रहणात् ॥ ४ ॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति, यानीमानि विषयग्रहणानि तान्यवतिष्ठन्त इति युगपद् विषयाणां ग्रहणं प्रसज्यत इति ॥ ४ ॥

अप्रत्यभिज्ञाने[2] च विनाशप्रसङ्गः ॥ ५ ॥

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते, विपर्यये च नानात्वमिति ॥ ५ ॥

अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यत इति—

क्रम[3]वृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानाम्। वृत्ति[4]वृत्तिमतोर्नानात्वादिति। एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

अप्रत्यभिज्ञानमनुपलब्धिः। अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते, वृत्तिवृत्तिमतोर्नानात्वात्, एकत्वे हि अनर्थको व्यासङ्ग इति ॥ ७ ॥

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः—

न, गत्यभावात्[5] ॥ ८ ॥

---

१ न युगपदितिसूत्रम्। वृत्तिमतोऽवस्थानात् वृत्त्यवस्थानप्रसङ्ग इति तदर्थः।

२ अप्रत्यभिज्ञान इतिसूत्रम्। वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति तदर्थः।

३ क्रमवृत्तित्वादयुगपद्ग्रहणमितिसूत्रम्। 'अयुगपद्ग्रहणम्' 'इन्द्रियार्थानाम्' —इति भाष्येण सम्बन्धः।

४ वृत्तीनि। यत इन्द्रियार्थानामयुगपद्ग्रहणं भवति तत एव वृत्तिवृत्तिमतोर्नानात्वमिति।

५ न गत्यभावादितिसूत्रम्। प्राप्ताान्यन्तःकरणेनेन्द्रियाणीति तदर्थः।

प्राप्तानीन्द्रियाण्यन्त करणेनेति प्राप्त्यर्थस्य गमनस्याभाव । तत्र क्रम वृत्तित्वाभावादयुगपद् ग्रहणानुपपत्तिरिति। गत्यभावाच्च प्रतिपिद्ध विभुनोऽन्त करणस्यायुगपद्ग्रहण न लिङ्गान्तरेणानुमीयत इति। यथा चक्षुपो गति प्रति पिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात्पाणिचन्द्रमसोर्व्यवधानेन प्रतीघाते सानुमीयत इति ।

सोऽय नान्त करणे विवादो न तस्य नित्यत्वे। सिद्ध हि मनोऽन्त करण•नित्य चेति।

" क तर्हि विवाद "।

तस्य विभुत्वे। तच्च प्रमाणतोऽनुपलब्धे प्रतिपिद्धमिति ।

एक चान्त करण नाना चैता ज्ञानात्मिका वृत्तय —चक्षुर्विज्ञान घ्राण-विज्ञान रूपविज्ञान गन्धविज्ञानम्। एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति। पुरुषो[1] जानीते नान्त करणमिति । एतेन[2] विपयान्तरव्यासङ्ग प्रत्युक्त । विपयान्तरग्रहणलक्षणो विपयान्तरव्यासङ्ग पुरुपस्य नान्त करणस्येति। केनचिदिन्द्रियेण सन्निधि केनचिदसन्निधिरित्यय तु व्यासङ्गोऽनुज्ञायते मनस इति ॥ ८ ॥

" एकमन्त[3] करण नाना वृत्तय इति । सत्यभेदे वृत्तेरिदमुच्यते—

---

१ पुरुषो जानीत इति—स्वमतसाधनपर भाष्यम्। यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्व तस्यान्त करणसाधन चक्षुरादिसाधनश्चात्माऽर्थानुपलभत इति युक्तमेवेत्यर्थ ।

२ एतेनेति—यदपि साङ्ख्या आचचक्षिरे " विपयान्तरव्यासक्तेऽन्त करणे चक्षुरादिसम्बद्धस्याप्यर्थस्याज्ञानादन्त करणवृत्तिर्ज्ञानमिति '—तन्निराकरणपर भाष्यम्। ' एतेन '—पुरुषो जानीते नान्त करणमिति हेतुना—' विपयान्तरव्यासङ्ग '—अन्त करणस्य—' प्रत्युक्त '। व्यासक्तो हि स भवति यो जानीत। न चान्त करण जानाति, किन्तु पुरुप इति एतस्यैवेदृशो विपयान्तरग्रहणरूपो व्यासङ्गो, नान्त करणस्य। अन्यादृशस्त्वन्त करणस्य व्यासङ्ग इन्द्रियसयोगरूपो न निषिध्यत इत्याशय ।

३ एकमन्त करणमिति चोद्यभाष्यम्। ' वृत्ते '—( वृत्तिमत ) ' अभेदे ' ( सति ), ' एकमन्त करण नानावृत्तय इति—' इदम् उच्यते ' यत्—तत्र ' स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमान ' एवेति सूत्रेण सम्बन्ध । अय च पूर्वपक्षाशय —यद्यपि वृत्तयो नाना प्रतिभान्ति, तथाऽपि भ्रान्तिरियम्, एकस्मादन्त करणादभिन्नाना नानात्वानुपपत्त । तस्मात् स्फटिकस्य यथैकस्यापि तापिच्छजपा कर्णिकारादिकुसुमोपधानभेदाद्भेद औपाधिक —एवमन्त करणस्यापि स्वच्छस्येन्द्रियप्रणालिकया तत्तदर्थोपरक्तस्यौपाधिक नानात्वम्—इति ॥

" स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः" ॥ ९ ॥

" तस्या वृत्तौ नानात्वाभिमानः । यथा द्रव्यान्तरोपहितस्फटिकद्रव्येऽन्यत्वाभिमानो—नीलो लोहित इति, एवं विषयान्तरोपधानादिति " ।

न, हेत्वभावात् । स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति—हेत्वभावादनुपपन्न इति ।

"समानो हेत्वभाव इति चेत्"—न, ज्ञानानां क्रमेणोपजनापायदर्शनात् । क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चापयन्ति चेति दृश्यते । तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ ९ ॥

( २ ) क्षणभङ्गप्रकरणम्—औपोद्घातिकम् ।

'स्फटिकान्यत्वाभिमानवत्' इत्येतदमृष्यमाणः क्षणिकवाद्याह—

" स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः [2] ॥ १० ॥

" स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः । कस्मात्? स्फटिकेऽप्यपरापरोत्पत्तेः । स्फटिकेऽपि अन्या

१ सूत्रान्तं दूषयति—न हेत्वभावादिति । योऽत्र दृष्टान्त उक्तः स्फटिकवदिति—तत्र विकल्पः—किमयं स्फटिक उपधानभेदेन भिद्यते उत नेति । यदि भिद्यते—न दृष्टान्तः । अथ न भिद्यते नानात्वाभिमानः कथम्? यद्युपधानभेदान्नानात्वाभिमान इति—तर्हि भिन्नमुपधानमित्येव कथं प्रतिपद्यसे । यदि प्रत्ययभेदात्—तर्हि भवति व्याघातः, प्रत्ययपर्यायत्वात् वृत्तेः । न च प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्तः ।

एवं स्वमतेन सांख्यपक्षं दूषयित्वा बौद्धैर्यत् सांख्यसिद्धान्ते दूषणमुक्तं तद् दूषयितुं बौद्धमतमुपन्यस्यत्यग्रे प्रकरणे । प्रयोजनं चास्य सर्वज्ञाद्यधिकारविशेषेऽपि प्राधान्येन आत्मसिद्धिरेव । स्थैर्ये हि सत्येव दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिन्द्रियव्यतिरेकादयः प्रतिसन्धानहेतवो निष्प्रत्यूहा भवन्ति । गुणगुणिभेदसिद्धौ चेच्छादयः क्वचिदाश्रिताः कार्यत्वात् गुणत्वाद्रूपवदित्यादयश्च ।

एतत्प्रकरणं कश्चित्पूर्वप्रकरणाद्भिन्नत्वेन व्याचष्टे । तस्याधिकरणं चैतत्प्रकरणोपसंहारवाक्यं सम्प्रत्यसूत्रभाष्यमन्यम्— 'इत्युपपन्नमनित्या बुद्धिरिति' उपन्यस्तवन्तः । तद्यतस्मिन्नेतत्प्रकरणविषयो नितान्तं भिन्न एव । उक्तं भाष्यवाक्यं च केवलमुभयोः प्रकरणयोरस्य सम्बन्धनार्थमित्यवधेयम् ।

२ स्फटिकेऽप्यपरापरोत्पत्तेरिति बौद्धाभिप्रायं सूत्रम् । स्फटिकान्यत्वाभिमानवदिति गौतमसूत्रांशम्—'अहेतु'—स्फटिकेऽपि अपरापरोत्पत्तेः । प्रतिक्षणं विलक्षणस्फटिकोत्पत्तिरित्यर्थः । तत्र मानम्— व्यक्तीनां क्षणिकत्वादिति ।

व्यक्तय उत्पद्यन्ते अन्या निरुध्यन्त इति । कथम्? क्षणिकत्वाद् व्यक्तीनाम् । क्षणश्चाल्पीयान्कालः, क्षणस्थितिकाः क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तय इति? उ[1]पचयापचयप्रबन्धदर्शनाच्छरीरादिषु । पक्तिनिर्वृत्तस्याहाररसस्य शरीरे रुधिरादिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्तते । उपचयाद् व्यक्तीनामुत्पादः, अपचयाद्व्यक्तिनिरोधः । एवं[2] च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यत इति । सोऽयं व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति' ॥ १० ॥

नियम[3]हेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ ११ ॥

सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः । कस्मात्? हेत्वभावात् । नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति । तस्माद् 'यथादर्शनमभ्यनुज्ञा' । यत्र यत्रोपचयापचयप्रबन्धो दृश्यते तत्र तत्र व्यक्तीनामपरापरोत्पत्तिरुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते, यथा शरीरादिषु । यत्र यत्र न दृश्यते तत्र तत्र प्रत्याख्यायते, यथा ग्रावप्रभृतिषु । स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते । तस्मादयुक्तं 'स्फटिकेऽप्यपरापरोत्पत्ते'रिति । यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत्तादृगेतदिति ॥ ११ ॥

यश्च अशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकतां मन्यते तस्यैतत्—

नोत्पत्ति[4]विनाशकारणोपलब्धेः ॥ १२ ॥

---

१ उपचयेति । 'शरीरादिषु उपचयापचयप्रबन्धदर्शनात् गम्यते यत् क्षणिका व्यक्तय' इति सम्बन्धः । अत्र प्रयोगः—प्रतिक्षणं शरीरमन्यच्चान्यच्च भवति—बाह्यप्रत्ययाभेदे सत्यन्त्यविशेषदर्शनात्—पच्यमानभूमिपाकजवत् अपच्यमानभूमिपाकजवद्वेति ।

२ एवञ्चेति । अयमत्र बौद्धाभिप्रायः । यत् सत् तत् सर्वं क्षणिकम्—यथा शरीरम्—तथा च स्फटिकः । शरीरस्य च कालपरिपाकवशेन स्थौल्यस्य ह्रासस्य च दर्शनात् प्रतिक्षणं सूक्ष्मः परिणतिभेदोऽनुमीयते । स चान्तरा विनाशं भवति । यस्यापि स्फटिकादेस्तादृशस्थौल्यं ह्रासो वा न दृश्यते तस्यापि सत्त्वेन शरीरवदेव प्रतिक्षणं विनाशः स्यादित्यनुमीयत इति ।

३ बौद्धाभिमतनियमनिराकरणपरं सूत्रम्—नियमेति ।

४ नोत्पत्तीति सूत्रम् । उपचयापचययोरुत्पत्तिविनाशकारणोपलब्धेरित्यर्थः । उपचयापचयौ च तावुत्पत्तिविनाशकारणे चेति कर्मधारयसमासः ।

उत्पत्तिकारण तावदुपलभ्यते अवयवोपचयो वल्मीकादीनाम् । विनाश कारण चोपलभ्यते घटादीनामवयवविभाग । यस्य तु अनपचितावयव निरुध्यते अनुपचितावयव चोत्पद्यते तस्याशेषनिरोधे निरन्वये वाऽपूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यत इति ॥ १२ ॥

" क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः ॥ १३ ॥

" यथानुपलभ्यमान क्षीरविनाशकारण दध्युत्पत्तिकारण चाभ्यनुज्ञायते तथा स्फटिकेऽपरापरासु व्यक्तिषु विनाशकारणमुत्पादकारण चाभ्यनुज्ञेयमिति " ॥ १३ ॥

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥

क्षीरविनाशलिङ्ग क्षीरविनाशकारण दध्युत्पत्तिलिङ्ग दध्युत्पत्तिकारण च गृह्यतेऽतो नानुपलब्धि । विपर्ययस्तु स्फटिकादिषु द्रव्येषु, अपरापरोत्पत्तौ व्यक्तीना न लिङ्गमस्तीत्यनुत्पत्तिरेवेति ॥ १४ ॥

अत्र कश्चित्परिहारमाह—

न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥

पयस परिणामो न विनाश—इत्येक आह । परिणामश्च अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति ।

गुणान्तरप्रादुर्भाव—इत्यपर आह । गुणान्तरप्रादुर्भावश्च सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति । स खल्वेकपक्षीभाव इव ॥ १५ ॥

अत्र तु प्रतिषेध —

व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शन पूर्वद्रव्यनिवृत्तेरनुमानम् ॥१६

---

१ परिहारमिति—अयान्दामुग्रान्त्वाद्वकृताक्षेपस्यति यावत् ।

२ गुणान्तरेति । द्रव्य तावत्सदव गुणोऽपि मद्यव केवलमनुद्भूत आसात् । एकश्चाद्भूतो गुण तत्र य उद्भूतस्तिरोभवति पूर्वगुणस्य निवृत्तौ तिरोभूतो गुणान्तरमुत्पद्यते तद् भवती त्यथ ।

३ स खल्विति । उभयोरपि पक्षयोरेकमवावसानम् । उभयत्र द्रव्यमवतिष्ठते—एकस्याविर्भावतिरोभावौ एकस्य च विनाशप्रादुर्भावाविति हृदयम् ।

सम्मूर्च्छनलक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्न्युत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते। यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तत इति। मृद्वच्चावयवान्वयः पयोदध्नोर्न अशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति ॥ १६ ॥

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध उच्यत इति —

## क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनामिति नायमेकान्त इति। कस्मात्? हेत्वभावात्, नात्र हेतुरस्ति। अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत्, न पुनर्यथा विनाशकारणभावात् कुम्भस्य विनाश उत्पत्तिकारणभावाच्चोत्पत्तिः। एवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति।

निरधिष्ठानं[३] च दृष्टान्तवचनम्। गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः—क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिकारणानुपलब्धिवच्चेति। तौ तु न गृह्येते। तस्मान्निरधिष्ठानोऽयं दृष्टान्त इति।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः। कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः प्रतिषेद्धुमशक्यत्वात्। क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं, कारणतो विनाशोत्पत्तिदर्शनात्। क्षीर-

१ सम्मूर्च्छनेति। क्षीरावयवा एव हि क्षीरविनाशे सत्युत्पन्नपाकजा विलक्षणं द्रव्यमुत्पादयन्ति। यदि तु सर्वं कार्यं सदेव कारणव्यापारात्प्रागपि—तर्हि व्यर्थः कारणव्यापारः, अभिव्यक्तेरपि कार्यत्वेन सत्त्वात्। असत्त्वे वा यथा सैव न सती क्रियते एवं कार्यान्तराण्यपीत्याशयः।

२ घटत इति। न ह्यनपवृत्तस्य पूर्वावस्थातोऽभिव्यक्त्यनभिव्यक्ती भवतो विनाशप्रादुर्भावौ वेति। तस्मादयुक्तमवस्थितस्य परिणाम इति।

३ निरधिष्ठानमिति। धर्मिणमाश्रित्य तत्समानधर्मा दृष्टान्तो भवति। स्फटिकोत्पादविनाशौ च धर्मिणौ। तत्समानधर्मतया क्षीरदधिविनाशोत्पादयोर्दृष्टान्तवचनं भवितव्यम्। न त्वन स्फटिकोत्पादविनाशौ धर्मिणौ गृह्यते। तस्मान्न तत्समानधर्मतया दृष्टान्तावुक्तौ भवत इति तात्पर्यम्।

दृष्टोविनाशोत्पत्ती पश्यता तत्कारणमनुमेयम् । कार्यलिङ्गं हि कारणम् । इत्युपपन्नमनित्या बुद्धिरिति ॥ १७ ॥

## ( ३ ) बुद्धेरात्मगुणत्वप्रकरणम् ।[1]

इदं तु चिन्त्यते—कस्येयं बुद्धिरात्मेन्द्रियमनोऽर्थानां गुण इति । प्रसिद्धोऽपि[2] खल्वयमर्थः परीक्षाशेषं प्रवर्तयामीति प्रक्रियते । सोऽयं[3] बुद्धौ सन्निकर्षोत्पत्तेः संशयः, विशेषस्याग्रहणादिति ।

तत्रायं[4] विशेषः —

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १८ ॥**[5]

नेन्द्रियाणामर्थानां वा गुणो ज्ञानं, तेषां विनाशेऽपि ज्ञानस्य भावात् । भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति । न च ज्ञातरि

---

१ क्षणभङ्गप्रकरणानन्तरं बुद्धेरात्मगुणत्वप्रतिपादनपरं प्रकरणं प्रारभ्यते । साङ्ख्याभिमतनित्यबुद्धित्वनिराकरणे सति बुद्धेरात्मगुणत्वं संभाव्यते । नित्यबुद्धिसद्भावे ज्ञानस्य तद्धर्मत्वादात्मधर्मत्वानुपपत्तिः । अतः पूर्वप्रकरणमुत्तरस्य हेतुनिर्वाहकं चेति युक्तमित्यनन्तरस्यावतारः ।

प्रयोजनं चास्य प्रकरणस्य शरीरादिव्यतिरिक्तात्मसिद्धिरेव । आत्मप्रकरणे हि प्रतिसन्धानबलेन बुद्ध्याऽऽत्मा साधितः इह तु गुणतयेति विवेकः ।

सत्यस्य क्षणिकत्वे समवायिकारणस्यैवाभावः । तथा चात्मनि बुद्धिर्गुणतया समवैतीति न संभाव्यते । बुद्धेरात्मगुणत्वं यद्यपि तृतीयाध्यायाद्याह्निकस्थचतुर्दशसूत्र एव साधितं तथाऽपि बुद्धिरूपगुणस्याधारत्वेनैवात्मा सिद्ध इति साधितमत्र स्वात्मनो गुणभूता बुद्धिः सतीति साध्यत इति विवेचनीयम् ।

२ प्रसिद्धोऽपीति । यद्यप्ययमर्थः प्रागेव ( ३।१।१ ) परीक्षितस्तथाऽप्यवान्तरविशेषपरिज्ञापनार्थं पुनः परीक्ष्यते । तथाहि—परलोकिनमात्मानं साधयता बुद्धिप्रतिसन्धातृत्ववच्छरीरादिव्यतिरिक्तस्यैव स्मृतिसंस्कारानुभवाश्रयत्वमपि साधितमेव याशयः ।

३ प्रकरणविषये संशयमस्य दर्शयति—सोऽयमिति । बुद्ध्युत्पत्तौ आत्मन इन्द्रियस्य अर्थस्य च सन्निकर्षोऽपेक्ष्यतेऽत एवैतेषामेव गुणः सतीति ज्ञायते । किन्त्वेषां मध्ये कस्यैकस्येति संशयो जागर्ति ।

४ तत्रेति । आत्मन एव गुणो बुद्धिर्नान्यस्येत्यत्र पक्षे साधकीभूतो 'विशेषः' विशिष्टो हेतुः प्रदर्श्यते सूत्र इति शेषः ।

५ नेन्द्रियार्थयोरित्यादिसूत्रम् । न इन्द्रियार्थयोः ( गुणो बुद्धिः ) तयोः ( इन्द्रियार्थयोः ) विनाशेऽपि ज्ञानस्य ( बुद्धेः बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति सूत्रम् ) अवस्थानात् इति सम्बन्धः ।

विनष्टे ज्ञानं भवितुमर्हति । अन्यत् खलु वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं, यदिन्द्रियार्थविनाशे न भवति । इदमन्यदात्ममनःसन्निकर्षजम् । तस्य युक्तो भाव इति । स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया । न च ज्ञातरि नष्टे पूर्वोपलब्धे स्मरणं युक्तम्, न चान्यदृष्टमन्यः स्मरति । न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १८ ॥

" अस्तु तर्हि मनोगुणो ज्ञानम् "—

## युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ १९ ॥

युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम् । तत्र युगपज्ज्ञेयानुपलब्ध्या यदनुमीयते अन्तःकरणं, न तस्य गुणो ज्ञानम् । " कस्य तर्हि ?" ज्ञस्य, वशित्वात् । वशी ज्ञाता, वश्यं करणं, ज्ञानगुणत्वे वा करणभावनिवृत्तिः । घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयते—अन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति । तत्र यज्ज्ञानगुणं मनः स आत्मा, यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तदिति संज्ञाभेदमात्रं नार्थभेद इति ।

युगपज्ज्ञेयानुपलब्धेश्च योगिन इति वा चार्थः । योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु युगपज्ज्ञेयान्युपलभते । तच्चैतद्विभौ ज्ञातर्युपपद्यते, नाणौ मनसीति । विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्वप्रतिषेधः । विभु च मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद्युगपज्ज्ञानान्युत्पद्येरन्निति ॥ १९ ॥

## "[2]तदात्मगुणत्वेऽपि तुल्यम्" ॥ २० ॥

---

१ बुद्धेर्मनोगुणत्वमपाकरोति—युगपदित्यादिसूत्रेण । त्रिधा व्याख्यातोऽस्य सम्बन्धः । स यथा (१) यन्मनो युगपज्ज्ञेयानुपलब्धिहेतोरनुमीयते तस्य मनसो गुणो ज्ञानं न भवतीति । अत्र व्याख्याने 'युगपज्ज्ञेयानुपलब्धे'रिति मनसोऽनुमाने हेतुः न पुनर्ज्ञानस्य मनोगुणत्वाभावे । (२) यतो युगपज्ज्ञेयोपलब्धिर्न भवति ततो न मनसो गुणो ज्ञानमिति । (३) अणुमनोद्वारा योगिनो युगपज्ज्ञेयोपलब्धिर्या भवति तस्या असम्भवः स्याद्यदि मनोगुणो ज्ञानं स्यात् । अनयैवानुपपत्त्या मनोगुणो न ज्ञानमिति सिध्यतीति । अयं हेतुः सूत्रस्थचकारेण समुच्चितो भवतीति भाष्यकारः ।

२ परः प्रत्यवतिष्ठते—तदात्मेतिसूत्रेण । ज्ञानस्य 'आत्मगुणत्वेऽपि' 'तत्'—ज्ञानयौगपद्यम्—'तुल्यम्' । आत्मनो विभुत्वेन तस्य सर्वदा सर्वेन्द्रियैः संयुक्तत्वादिति भावः

" विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति " ॥ २० ॥

**इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २१ ॥**

गन्धाद्युपलब्धेरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणम् । तस्य चायौगपद्यमणुत्वान्मनसः । अयौगपद्यादनुत्पत्तिर्युगपज्ज्ञानानामात्मगुणत्वेऽपीति ॥ २१ ॥

यदि[2] पुनरात्मेन्द्रियार्थसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते ?—

**नोत्पत्तिकारणानपदेशात् ॥ २२ ॥**

आत्मेन्द्रियसन्निकर्षमात्राद्गन्धादिज्ञानमुत्पद्यत इति, नात्रोत्पत्तिकारणमपदिश्यते येनैतत्प्रतिपद्येमहीति ॥ २२ ॥

**" विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥२३॥**

---

यथा ज्ञानस्य विभुमनोगुणत्वे युगपज्ज्ञानोत्पत्तिप्रसङ्गस्तथैव विभ्वात्मगुणत्वेऽपीति समानमेवेषाऽनुपपत्तिरुभयोरपि पक्षयोरतश्च नैकपक्ष्यपरेण पर्यनुयोज्येति हृदयम् ।

१ उक्त प्रत्यवस्थानमपाकरोति–इन्द्रियैरितिसूत्रेण । आत्मनो विभुत्वात्तस्य सन्निकर्षे सत्यपि ज्ञानोत्पत्ताविन्द्रियमनस्सन्निकर्षस्याप्यपेक्षितत्वादणोश्च मनसोऽनेकेन्द्रियैस्सह युगपत्सन्निकर्षस्यासम्भवान्न युगपज्ज्ञानोत्पत्तिसम्भव इत्यर्थः ।

२ मनस्सन्निकर्षस्याप्युपलब्धावावश्यकतां पुनः समर्थयते–यदीति । " मनस्सन्निकर्षानपेक्षं केवलमात्मेन्द्रियार्थसन्निकर्षादेव गन्धादिज्ञानमुत्पद्यते " इति स्यान्मतमित्युपोद्घातभाष्यार्थः ।

३ तस्य मतस्योत्तरम्—नोत्पत्तीतिसूत्रम् । नैतन्मतमादरणीयम् । यतोऽत्र प्रतिज्ञामात्रं क्रियते—ज्ञानोत्पत्तौ मनस्सन्निकर्षो नापेक्ष्यत इत्यत्र ' कारणं ' प्रमाणं न अपदिश्यते प्रदर्श्यते—इत्यर्थः । यथोक्तं वार्तिककृद्भि —अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थ इति । अत्र–अस्मादेवेत्यात्मेन्द्रियार्थसन्निकर्षमात्रादेवेत्यर्थः ।

विश्वनाथस्त्विदमपि सूत्रं पूर्वपक्षत्वेनावर्णितवान् । तन्मतेन चैव सूत्रार्थः–बुद्ध्युत्पत्तौ कारणस्य अनपदेशात् अकथनात् नात्मगुणो बुद्धि , आत्ममनस्संयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति ।

अतश्चैव समुचितोऽर्थः–बुद्धेरात्मगुणत्वे तस्या विनाशकारणानुपलब्धेस्तन्नित्यत्वमिति ।

' तदात्मगुणत्वेऽपि तुल्यम् '–इत्येतदनेन समुच्चीयते । द्विविधो हि गुणनाशहेतु –गुणानामाश्रयाभावो विरोधी च गुण । नित्यत्वादात्मनोऽनुपपन्न पूर्व । विरोधी च बुद्धेर्गुणो न गृह्यते, तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्ग " ॥ २३ ॥

अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २४ ॥

अनित्या बुद्धिरिति सर्वशरीरिणा प्रत्यात्मवेदनीयमेतत् । गृह्यते च बुद्धिसन्तान । तत्र बुद्धेर्बुद्ध्यन्तर विरोधी गुण इत्यनुमीयते, यथा शब्दसन्ताने शब्द शब्दान्तरविरोधीति ॥ २४ ॥

" असङ्ख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेष्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्स्मृतय प्रादुर्भवेयु यदि बुद्धिरात्मगुण स्यादिति । "

तत्र कश्चित्सान्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह—

" ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनस स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २५ ॥

ज्ञानसाधन संस्कारो ज्ञानमित्युच्यते । ज्ञानसंस्कृतैरात्मप्रदेशै पर्यायेण मन सन्निकृष्यते । आत्ममन सन्निकर्षात्स्मृतयोऽपि पर्यायेण भवन्तीति " ॥ २५ ॥

नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥

---

१ एकदेशिमतमुपस्थापयति–तत्रेति । तत्र पूर्वोक्ताक्षेपविषये कश्चित् नैयायिकैकदेशी नानाज्ञानजन्यसंस्कारसन्निकर्षाणामयौगपद्यप्रदर्शनेन परिहारमाहेत्यर्थ ।

२ एकदेशिकृतपरिहारप्रदर्शनपर सूत्रम्–ज्ञानसमवेतेत्यादि । एकज्ञानजनित संस्कार एकस्मिन्नेवात्मप्रदेशे समवैति मनस्सन्निकर्षश्चात्मन एकस्मिन् क्षणे एकेनैवात्मप्रदेशेन भवति । ततश्च यज्ज्ञानजनित संस्कारो यदात्मप्रदेशावच्छेदेन वर्तते तत्प्रदेशावच्छेदेनैव यस्मिन् क्षणे मनस्सन्निकर्षो भवति तस्मिन् क्षणे तत्संस्कारजन्यस्मृते प्रादुर्भाव सम्भवति न स्मृत्यन्तरस्येति न युगपदनन्तरस्मृतिप्रादुर्भावप्रसङ्ग इति परिहारार्थ ।

३ एकदेशिमत दूषयति–नान्त शरीरेत्यादिसूत्रेण । ( स्मृतियौगपद्यस्य एकदेशिप्रदर्शितपरिहारो ) न ( युज्यते ) । कस्मात् ? मनस अन्त शरीरवृत्तित्वात् । अन्त शरीरे वृत्ति ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात् । विभोरात्मन कतिचित्प्रदेशा शरीरान्तवर्तिन कतिचित्तद्बहिःप्रदेशवर्तिन अणुस्तु मन शरीराभ्य

सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते। तत्रास्य प्राक् प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद्बहिर्ज्ञानसंस्कृतेरात्मप्रदेशैः संयोगो नोपपद्यत इति ॥ २६ ॥

" साध्यत्वादहेतुः ॥ २७ ॥

विपच्यमानकर्माशयमात्रं जीवनम्। एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति " ॥ २७ ॥

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥

मुस्मूर्षया खल्वयं मनः प्रणिदधानः चिरादपि कञ्चिदर्थं स्मरति। स्मरतश्च शरीरधारणं दृश्यते। आत्ममनःसन्निकर्षजश्च प्रयत्नो द्विविधो—धारकः प्रेरकश्च। निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावाद् गुरुत्वात् पतनं स्यात् शरीरस्य स्मरत इति ॥ २८ ॥

" न तदाशुगतित्वान्मनसः ॥ २९ ॥

आशुगति मनः। तस्य बहिः शरीरात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः—प्रत्यागतस्य च प्रयत्नोत्पादनमुभयं युज्यत इति। उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसोऽतस्तत्रोपपन्नं धारणमिति " ॥ २९ ॥

---

न्तरमात्रवृत्ति। अतः शरीरातिरिक्तात्मप्रदेशावच्छेदेन नात्ममनोयोगो भवति। किन्तु शरीरावच्छिन्नस्यात्ममनोयोगस्य ज्ञानहेतुत्वमस्त्येव। ततश्च तच्छरीरावच्छिन्ननानास्मृतियौगपद्यप्रसङ्ग आक्षेपकाङ्क्षावितस्तदवस्थ एवेति नैकदेशिपरिहारः सम्यगित्यर्थः।

१ एकदेशी शङ्कते—साध्यत्वादितिसूत्रेण। शरीराद्बहिर्मनो ज्ञानादिपुरुषार्थं न साधयतीति यद्यत्त्वे न सिद्धम्। एवं च मनसः शरीरवृत्तित्वादिति यो हेतुरुक्तस्तस्य 'साध्यत्वात्' साधनीयत्वात् स 'अहेतुः' हेत्वाभास इत्यर्थः। शरीराद्बहिर्मनो ज्ञानादिपुरुषार्थं न साधयतीत्यद्यत्वेऽपि न सिद्धमिति भावः।

२ एकदेशिकृतां शङ्कां परिहरति—स्मरत इत्यादिसूत्रेण। 'स्मरतः'—यः पुरुषः स्मरणं करोति तस्य—'शरीरधारणोपपत्तेः'—तेन पुरुषेण स्मरणकाले शरीरमपि ध्रियत एव—कदाप्यधारास्यात्मनः स्मरणं न दृश्यते—इत्येवरूपाया 'उपपत्तेः'—शरीरवर्तित्वसाधकप्रमाणस्य सत्त्वात्—पूर्वसूत्रकृतः प्रतिषेधः—मनसः शरीरवृत्तित्वे प्रमाणं नास्तीत्याक्षेपः—'अप्रतिषेधः'—न समीचीनः प्रतिषेध इत्यर्थः।

३ स्मृतिप्रक्रियां सूचयति भाष्यकारः—सुस्मूर्षयेति।

४ पुनः परश्चोदयति—न तदाशुगतित्वादितिसूत्रेण। यत् पूर्वसूत्र उक्तं शरीरपतनं तन्न सम्भवति—'तदा' 'मनसो' बहिस्सन्निकर्षे 'आशुगतित्वात्' अतिशीघ्रगामित्वात्—शीघ्रमेव शरीरे परावृत्ते न शरीरधारणप्रतिबन्ध इत्यर्थः।

न स्मरणकालानियमात् ॥ ३० ॥

किञ्चित्क्षिप्र स्मर्यते, किञ्चिच्चिरेण । यदा चिरेण तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति कस्यचिदेवार्थस्य लिङ्गभूतस्य चिन्तनमाराधित स्मृतिहेतुर्भवति । तच्चैतच्चिरनिश्चरिते मनसि नोपपद्यत इति ।

शरीरसयोगानपेक्षश्चात्ममन सयोगो न स्मृतिहेतु, शरीरस्योपभोगायतनत्वात् । उपभोगायतन पुरुषस्य ज्ञातु शरीर, न ततो निश्चरितस्य मनस आत्मसयोगमात्र ज्ञानसुखादीनामुत्पत्तौ कल्पते । क्लृप्तौ वा शरीरवैयर्थ्य मिति ॥ ३० ॥

"[1]आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३१ ॥

आत्मप्रेरणेन वा मनसो बहि शरीरात् सयोगविशेष स्यात्? यदृच्छया वाऽऽकस्मिकतया, ज्ञतया वा मनस ? सर्वथा चानुपपत्ति । कथम्? स्मर्तव्यत्वात्, इच्छात स्मरणात्, ज्ञानासम्भवाच्च । यदि तावदात्मा अमुष्यार्थस्य स्मृतिहेतु सस्कार अमुष्मिन्नात्मप्रदेशे समवेतस्तेन मन सयुज्यतामिति मन प्रेरयति, तदा स्मृत एवासावर्थो भवति न स्मर्तव्य । न चात्मप्रत्यक्ष आत्मप्रदेश सस्कारो वा । तत्रानुपपन्नात्मप्रत्यक्षेण सवित्तिरिति । सुस्मूर्षया चाय मन प्रणिधानश्चिरादपि कञ्चिदर्थं स्मरति नाकस्मात् । ज्ञत्व च मनसो नास्ति ज्ञानप्रतिषेधादिति" ॥ ३१ ॥

एतच्च—

१ ज्ञानसमवेतत्यादिसूत्रोक्तमेकदेशिमत निराकरिष्णुरपर एकदेश्याह—आत्मप्रेरणेत्यादि सूत्रम् । आत्मना बहिःप्रदेशे मनस्सयोगा—(१) न स्मृत्यथम् 'आत्मप्रेरणेन' सम्भवति [ तस्य प्रयत्नस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मृत्यापत्ते ]—(२) नापि 'यदृच्छया' अकस्मात् [ आकस्मिकत्वस्य निषेधात् ]—(३) नापि मनसो 'ज्ञतया' ज्ञातृतया [ मनसो ज्ञातृत्वानभ्युपगमात् ], न चैभ्यस्त्रिभ्योऽन्य प्रकारो वर्तत इति सूत्रार्थ ।

२ अनन्तरोक्त द्वितीयैकदेशिमतमपाकरोति—एतच्चेति भाष्याक्षराण्यारभ्य व्यासक्तमनस इत्यादिसूत्रेण । एतत् यदुक्त तत् 'सयोगविशेषेण समानम्' इति सम्बन्ध । व्यासक्त मनो यस्य तस्य नृत्यादिदृश्यविशेषे दत्तचित्तस्य पुरुषस्य कण्टकादिना अकस्माद्विद्ध पादो यदा व्यथते तदा तदवच्छेदेन यथा आकस्मिक एव मनस्सयोगो जायते तथैवैतदपीति । तथा चाकस्मिको मनस्सयोगो न भवतीति यदुक्त द्वितीयेनैकदेशिना तन्न तथ्यमिति हृदयम् ।

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्॥ ३२ ॥**

यदा खल्वयं व्यासक्तमनाः क्वचिद् देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदाऽऽत्मनःसंयोगविशेष एषितव्यः। दृष्टं हि दुःखं दुःखसंवेदनं चेति। तत्रायं समानः प्रतिषेधः। यदृच्छया तु न विशेषो नाकस्मिकी क्रिया नाकस्मिकः संयोग इति।

"कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति" चेत्? समानम्। कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुरेवं दुःखं दुःखसंवेदनं च सिध्यतीति" एवं चेन्मन्यसे– समानं, स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति। तत्र यदुक्तम् 'आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः' इत्ययमप्रतिषेध इति। पूर्वस्तु प्रतिषेधो–'नान्तःशरीरवृत्तित्वान्मनस'–इति ॥ ३२ ॥

"किं खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति"–

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥३३॥**

यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृतिहेतुरेवं प्रणिधानलिङ्गादिज्ञानानि। तानि च न युगपद्भवन्ति। तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति।

---

१ एवं च एकदेशिना यः प्रतिषेध आकस्मिकमनस्संयोगस्य उक्तस्स प्रतिषेध उक्तेऽपि पादव्यथाजनकमनस्संयोगे स्यादेव–तच्चानुभवविरुद्धमिति हृदयम्। अनुभवविरोधप्रतिबन्दीरूपेणोपन्यस्य तस्यैव उत्तरं प्रदर्शयति–यदृच्छयेति। यदृच्छया मनस्संयोगो न भवतीति यदुक्तमस्येदमेवोत्तरं यत् किमप्यत्र यदृच्छया न भवतीत्याशयः।

२ परः समाधत्ते–कर्मेति। मनस्संयोगादावदृष्टमेव नियामकं भविष्यतीति नाकस्मिकत्वं कश्चिद्दोष इति। तत्रोत्तरम्–समानमिति।

३ कः प्रतिषेधः पञ्चविंशसूत्रोक्तैकदेशिमतस्येत्यत आह–पूर्वस्त्विति। पञ्चविंशसूत्रे यत्तन्मतदूषणमुक्तं–नान्तः शरीरेतिसूत्रे–तदेव तस्योत्तरं सम्यगित्यर्थः।

४ परास्तः परः पृच्छति–कः खल्विति। स्मृतिकारणयौगपद्ये सति स्मृतियौगपद्यं कथं न भवतीति प्रश्नार्थः।

५ प्रश्नस्योत्तरमर्पयन् स्मरणायौगपद्यं स्वयमुपपादयति–प्रणिधानेत्यादिसूत्रेण। प्रणिधानादयः स्मृतिहेतवो वक्ष्यमाणा ऊनविंशतिसङ्ख्यकाः सन्ति न पुनस्संस्कारसहितात्ममनस्संयोगमात्रम्। एवं चोक्तसंयोगस्य सत्त्वेऽप्यन्येषां स्मृतिहेतूनामयौगपद्यात् स्मृतीनामयौगपद्यमित्यर्थः।

६ एतदेव स्पष्टयति भाष्यकारः–यथा खल्विति।

"प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्ग । यत्खल्विद प्रातिभमिव ज्ञान प्रणिधानाद्यनपेक्ष स्मार्तमुत्पद्यते कदाचित्तस्य युगपदुत्पत्ति प्रसङ्गो हेत्वभावात्"।

सत स्मृतिहेतोरसवेदनात् प्रातिभेन समानाभिमान । बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थ कस्यचित्स्मृतिहेतु तस्यानुचिन्तनात् तस्य स्मृति भवति, न चाय स्मर्ता सर्व स्मृतिहेतु सवेदयते—एव मे स्मृतिरुत्पन्नेति, असवेदनात्प्रातिभमिव ज्ञानमिद स्मार्तमित्यभिमन्यते । न त्वस्ति प्रणिधानाद्यनपेक्ष स्मार्तमिति ।

"प्रातिभे कथमिति" चेत्? पुरुषकर्मविशेषादुपभोगवन्नियम । "प्रातिभमिदानीं ज्ञान युगपत् कस्मान्नोत्पद्यते"? यथोपभोगार्थं कर्म युग

१ आक्षिपति-प्रातिभवदिति । ('प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्य प्रसङ्ग' इति वाक्य केचित्सूत्रमन्यन्ते । तत्प्रमाणाभावादुपेक्ष्य भाष्यस्थमवदमाक्षेप वाक्यमिति निर्धारितम् ।)

२ सक्षेपेणाक्षमाक्षेपमनुवदति-यत्खल्विदमिति । अस्ति खलु प्रातिभ ज्ञान स्मृत्यनुरूपमेव । तच्च प्रणिधानादि विनैव सस्कारसहितात्ममनस्सयोगमात्रादुत्पद्यत आकस्मिकमेव । तदिवान्या अपि स्मृतयस्त सयोगमात्रात्प्रादुर्भवितुमर्हन्ति । एवेपा च युगपदुत्पत्ति सम्भवत्येवेत्याक्षेपाशय ।

३ हेत्वभावादिति—प्रणिधानादिहेत्वभावादित्यर्थ ।

४ आक्षेपस्योत्तरम्—सत स्मृतेति । स्मरणादावनुपलभ्यमानान्यपि कारणानि कारणक्रमश्च स्मृतिरूपकार्योत्पादक्रमेणानुमीयन्त । एव च प्रातिभमपि ज्ञान पुरुषा दृष्टविशेषापेक्षेभ्य आत्ममनस्सन्निकर्षादिभ्य कारणेभ्य एव उपजायते न च तदृप्य कारणमक्रम वा । यथा च प्रातिभे वर्तमानान्यप्येतानि कारणानि नावलभ्यन्ते क्रमश्च नानुभूयते एवमेव स्मृतिष्वपीति ।

५ उपसहरति—न त्वस्तीति । प्रणिधानाद्यनपेक्ष स्मरण कदापि न भवतीत्याशय

६ नन्वस्त्वेतत् सर्वम्—स्मरणेषु प्रातिभे तु ज्ञाने आकस्मिकत्व कारणान्तर रहितत्व चानुभवसिद्धमेवेत्याशयवान् पृच्छति—प्रातिभे कथमिति । प्रधानभूता स्वपक्षापपत्तिमवतारयितुमवाय प्रश्न ।

७ तत्रादौ यत्किञ्चिदुत्तरम् पुरुषकर्मेति । यथा पुरुषस्यादृष्ट तस्योपभोगाना नियामक तथैव प्रातिभस्येत्यर्थ ।

८ प्रश्नस्याशय प्रकटयति—प्रातिभमिति । प्रातिभे ज्ञाने यौगपद्यमस्तीत्यत्र का हानिरित्यर्थ ।

९ उत्तर विशदयति-यथोपभोगार्थमिति । आविलमेवदमुत्तरमुत्तरसारस्याग्रे वक्ष्यमाणत्वादिति तात्पर्यकृत ।

पदुपभोग न करोति एव पुरुषकर्मविशेष प्रातिभहेतुर्न युगपदनेक प्रातिभ ज्ञानमुत्पादयति ।

"हेत्वभावादयुक्तमिति" चेत्? न, करणस्य प्रत्ययपर्याये सामर्थ्यात् ।

"उपभोगवन्नियम इत्यस्ति दृष्टान्तो हेतुर्नास्तीति" चेन्मन्यसे? न, करणस्य प्रत्ययपर्याये सामर्थ्यात् । नैकस्मिन् ज्ञेये युगपदनेक ज्ञानमुत्पद्यते—न चानेकस्मिन् । तदिद दृष्टेन प्रत्ययपर्यायेणानुमेय करणसामर्थ्यमित्थम्भूत मिति न ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्ययर्यागपद्यादिति ।

अय च द्वितीय प्रतिषेध —"अवस्थितशरीरस्य चानेकज्ञानसमवाया देकप्रदेशे युगपदनेकार्थस्मरण स्यात् । कचिद्देशेऽवस्थितशरीरस्य ज्ञातुरिन्द्रियार्थ प्रबन्धेन ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति । तेन यदा मन सयुज्यते तदा ज्ञातपूर्वस्यानेकस्य युगपत् स्मरण प्रसज्यते, प्रदेशसयोगपर्यायाभावादिति । आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियोगपद्यप्रतिषेधानुपपत्ति" ।

शब्दमन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत्सस्कारप्रत्या-

---

१ उत्तरस्याविलम्बमेव प्रकटयितुमाक्षिपति हेत्वभावादिति । अदृष्टनन्यत्वात् प्रातिभ न यौगपद्यमिति कथामात्रञ्च तत्साधकहेतु कश्चिदुक्त —उपभोग। दृष्टान्त मात्ररूपेणोक्त इत्याशय ।

२ सम्यगुत्तरमधुना समर्पयति—न—करणस्येति ।

३ आक्षेपमनुवदति—उपभोगवदिति। उपभोगदृष्टान्त पन्थामममात्रेण न किञ्चि त्सिध्यतीत्यर्थ ।

४ उत्तरमनुवदति—न, करणस्येति ।

५ तस्यार्थं विवृणोति—नैकस्मिन्निति ।

सामान्यत सर्वेषामेव पुरुषाणामेवमेवानुभव। यदेकस्मिन विषयेऽनेकेष्वपि वा युगपज्ज्ञानानि नैवोत्पद्यन्त इति ।

६ ज्ञानसमवेतसस्कृतात्मप्रदेशभेदस्यायौगपद्यसाधकत्वमभ्युपेत्यैकदेश्युपन्यस्तमप्रति परास्तावितदूषणान्तरमपाकर्तुन्तद्दूषणमुपन्यस्यति—अय चेति । यदि ज्ञानसमवेतात्म प्रदेशसन्निकर्षादेव स्मृतीना न युगपदुत्पत्ति तर्हि ये सस्कारा एकदेशास्तेष्ववस्थित शरीरस्यानेकज्ञानसमवायादेकदेशे युगपदनेकार्थस्मरण स्यात । न चैतदस्ति अत एक-देश्युक्त परिहारो न सम्यगिति दूषणस्याशय ।

७ उक्तदूषणनिराकरणपर भाष्यम्—शब्दसन्तान इति । शब्दसन्तानेषु य शब्द श्रोत्रेन्द्रियेण साक्षात्सम्बद्ध स एव श्रूयते न तत्सन्तानगतसर्वे शब्दश्रवणय ।

सत्या मनस स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्ग'। पूर्वं एव तु प्रतिषेधो ज्ञाने कज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति ॥ ३३ ॥

यत्–"पुरुषधर्मो ज्ञानं, अन्त करणस्येच्छाद्वेषप्रयत्नसुखदु खानि धर्मा" इति कस्यचिद्दर्शन–तत्प्रतिषिध्यते—

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३४ ॥

---

१ एवमनन्तरोक्तदूषणे निरस्ते एकदेशिमतस्य का गतिरिति प्रदर्शयति–पर्व एवति। एकदेशिमतस्य य प्रतिषेधोऽस्माभि षड्विशसूत्र उक्तस्स एवैकदेशिमतस्य निरासक इत्यर्थ ।

२ सम्प्रति बुद्धिरेव किमिच्छादिसमानाधिकरणा न वेति विचार प्रस्तावयन् तद्विषये सशयबीजभूता साख्यवैनाशिकाना विप्रतिपत्ति प्रदर्शयति–पुरुषधर्म इति। 'ज्ञानम्' बुद्धि 'पुरुषस्य' आत्मनो धर्म इच्छादयस्त्वन्त करणस्येति न सामानाधिकरण्य बुद्धेरिच्छादिभिरित्यर्थ । अस्य मतस्य सारो वर्णितस्तात्पर्यकृता। पुरुष चैतन्यमेकमेव कूटस्थनित्य सत् तत्तदर्थाकारपरिणतबुद्धितत्त्वप्रतिबिम्बविभ्रमवशात् भिन्नमिवोपजनापायधर्मक विज्ञानमिति वृत्तिरिति चाख्यायते। इच्छादयस्तु वस्तुत उपजनापायधर्माणोऽन्त करणस्यैवेति।

अस्य विचारस्य प्रयोजन प्रदर्शित परिशुद्धिकृता–यावदिच्छादीनामात्मगुणत्व न साध्यते तावदिन्द्रियार्थमनोव्यतिरेकसिद्धावपि बुद्धेरात्मगुणत्व न सिध्यतीति। इच्छाया अन्त करणगुणत्वम्–ज्ञानस्य चेच्छाजन्यत्वम्–अत इच्छाज्ञानयोस्सामानाधिकरण्यस्यावश्यकतया ज्ञानस्याप्यन्त करणगुणत्वमेव नात्मगुणत्वमित्यस्य दर्शनस्य तात्पर्यं वर्णित वृत्तिकृता।

३ उक्तदर्शनप्रतिषेधमवतारयति–तत्प्रतिषिध्यत इति।

४ साख्यदर्शनप्रतिषेधपर सूत्रम्–ज्ञस्येच्छेति। द्विधा वर्णितमिद सूत्र वृत्तिकृता। तद्यथा–'ज्ञस्य' ज्ञानवत एव गुणा इच्छाद्वेषादय –कुत –'आरम्भनिवृत्त्यो इच्छा द्वेषनिमित्तत्वात्' इच्छाद्वेषप्रयुक्तत्वादिति यावत्। अथ वा 'आरम्भनिवृत्त्यो ज्ञस्यैव इच्छाद्वेषनिमित्तत्वात्' (तस्यैव ज्ञस्य गुणा इच्छादय इति) 'कस्यचिद्दर्शन प्रतिषिध्यते' इति भाष्यवाक्येन सम्बन्ध । पूर्वं व्याख्यान न सम्यक् प्रतिभाति। इच्छादयोऽन्त करणस्य गुणा इति पूर्वपक्षिण सिद्धान्त । ततश्च तदनुसारेण यथारम्भनिवृत्ती इच्छाद्वेषजन्ये तद्वत्ते अप्यन्त करणस्यैव भवेता न ज्ञानवत पुरुषस्येति द्वितीयमेव व्याख्यान सुष्ठु। एतदेव वर्धमानोपाध्यायाना सम्मतम्। 'आरम्भनिवृत्ति प्रयत्नरूपे ज्ञानसमानाधिकरणे एवति सूत्रार्थं' इत्युक्त तैरन्वीक्षानयतत्त्वबोधे।

अयं[1] खलु जानीते तावत्–इदं मे सुखसाधनमिदं मे दुःखसाधनमिति–ज्ञात्वा स्वस्य सुखसाधनमाप्तुमिच्छति, दुःखसाधनं हातुमिच्छति। प्राप्तीच्छाप्रयुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः, जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः। एवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकेनाभिसम्बन्धः। एककर्तृकत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च। तस्माज्ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा नाचेतनस्येति। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति ॥ ३४ ॥

अत्र भूतचैतनिक आह—

"तल्लिङ्गत्वादिच्छाद्वेषयोः[2] पार्थिवाद्येष्वप्रतिषेधः ॥ ३५ ॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तं–पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम्" ॥ ३५ ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३६ ॥

शरीरे चैतन्यनिवृत्तिः। आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं–परश्वादेः करणस्यारम्भनिवृत्तिदर्शनाच्चैतन्यमिति। अथ 'शरीरस्येच्छादिभिर्योगः, परश्वादेस्तु करणस्यारम्भनिवृत्ती व्यभिचरतः' न तर्ह्ययं हेतुः–'पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योगः' इति।

"अयं[3] तर्ह्यन्योऽर्थस्तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। पृथिव्यादीनां[4] भूतानामारम्भस्तावत् त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्ग

---

१ सूत्रार्थं व्याचक्षन् ज्ञानेच्छादीनां समानाधिकरणत्वं प्रदर्शयति–अयं खल्विति।

२ नन्वस्त्वेकमेवाधिकरणं ज्ञानेच्छादीनाम्। भवतु पार्थिवमिदं शरीरमेव तदेकमधिकरणमित्याशयवान् भूतचैतनिकः–भूतचैतन्यवादी चार्वाकः–इष्टते—तल्लिङ्गत्वादित्यादि सूत्रेण। 'पार्थिवाद्येषु' देहेषु 'अप्रतिषेधः' न प्रतिषेधः इच्छाद्वेषयोः तल्लिङ्गत्वात् आरम्भनिवृत्तिलिङ्गकत्वात् आरम्भनिवृत्त्योश्च शरीरे प्रत्यक्षसिद्धत्वादित्यर्थः।

३ एवं निरस्तो भूतचैतनिकस्तल्लिङ्गत्वादिति स्वोक्तं हेतुं स्वपक्षसिद्ध्यर्थमन्यथा व्याचष्टे अयं तर्हीति।

४ तदर्थान्तरं विवृणोति—पृथिव्यादीनामिति। 'त्रसेषु' अस्थिरेषु कृमिप्रभृतीनां शरीरेषु 'स्थावरेषु' देवमनुष्यादीनां शरीरेष्ववयवव्यूहः के दृष्टः नान्यत्र

प्रवृत्तिविशेष । लोष्टादिषु च लिङ्गाभावान् प्रवृत्तिविशेषाभावो निवृत्ति । आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति। पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोग स्तद्योगाज्ज्ञानयोग इति सिद्ध भूतचैतन्यमिति ''—

कुम्भादिष्वनुपलब्धेरहेतु । कुम्भादिमृदवयवाना व्यूहलिङ्ग प्रवृत्तिविशेष आरम्भ । सिकतास्वपि प्रवृत्तिविशेषाभावा निवृत्ति । न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योग । तस्मात्–'तल्लिङ्गत्वादिच्छा द्वेषयो' –इत्यहेतुरिति ॥ ३६ ॥

नियमानियमौ तु तद्विशेषकौ ॥ ३७ ॥

तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ । ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती न स्वाश्रये । कि तर्हि ? प्रयोज्याश्रये । तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्त न सर्वेष्वित्यनियमोपपत्ति ।

यस्य तु ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियम स्यात्। यथा भूताना गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्ति-

---

रारम्भकाणामणूना प्रवृत्तिरूप आरम्भोऽनुमीयते—तत प्रवृत्तिभेदादिच्छाद्वेषावनुमीयेते—ताभ्यां च चैतन्यमनुमीयत इत्याशय ।

१ भूतचैतनिकस्यामु द्वितीयमपि हेतु दूषयति—कुम्भादिष्विति । केचिदेतत् सूत्रत्वेनाभिमन्यन्ते । तत्र प्रमाणाभावाद्भाष्यवाक्यमवश्यमिति निर्धारितम् । 'कुम्भादिषु ' आरम्भनिवृत्तिमत्स्वपि इच्छादीनां अनुपलब्ध — अहेतु ' इच्छाद्वेषयोरारम्भनिवृत्तिलिङ्गत्वादिति न सद्धेतुरित्यर्थ ।

२ अनियम भेदक स्यादिष्ट–यस्य त्विति । नियम स्यादिति ' सर्वेषु भूतेषु प्रवृत्तिनिवृत्ती स्यातामित्यर्थ ।

३ उक्तमेव स्पष्टयति–यथा भूतानामिति । यथा भूतानां गुरुत्वादिगुणान्तर निमित्ता प्रवृत्ति पतनादिलक्षणा तस्य च गुरुत्वादिगुणान्तरस्य प्रतिबन्ध आधार द्रव्यसंयोगेन–तस्माच्च निवृत्ति अपतनात्मिका–उभयमप्येतद्भूतमात्रे भवति नियमेन स्यात्, न पुन रारम्भकमात्रेषु ( एव सर्वजनीनोऽनुभव ) एव भूतमात्रे तद्गुणभूतज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती अपि स्वाश्रय एव स्याताम् । एतदुक्त भवति–ये ये पृथिव्यादिगुणास्ते यावत्पृथिव्यादिभाविनो दृष्टा यथा गुरुत्वादय । ज्ञानेच्छादयोऽपि यदि पृथिव्यादिगुणास्तर्ह्येते यावत्पृथिव्यादिभाविभिर्भवितव्यम् । न तु यतो तथा दृश्यन्ते तस्माच्च पृथिव्यादिगुणा ज्ञानादय इति

भूतमात्रे भवति नियमेनैव भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम्। न तु भवत। तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्ना, प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम्।

एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम्। भूतचैतनिकस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम्। ओमिति ब्रुवतः प्रमाणं नास्ति। यथा नानाशरीरेषु नानाज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एवमेकशरीरेऽपि बुद्ध्यादिगुणव्यवस्थानुमानं स्याज्ज्ञातृबहुत्वस्येति।

दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि। दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः। सोऽनुमानमन्यत्रापि त्रसस्थावरशरीरेषु। तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामन्यगुणनिमित्त इति। स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति।

---

अत्र भाष्यकृता सार्वत्रिकत्वप्रसङ्गविवक्षया नियमशब्दः प्रयुक्तः असार्वत्रिकत्वविवक्षया त्वनियमशब्द इति तात्पर्यकृत।

अत्र तात्पर्यम्—अवयवानां प्रत्येकं चैतन्ये शरीरे एकस्मिन् बहवश्चेतनाः स्युः। भवतु किन्नो बाध्यत इति चेत्। विरुद्धाभिप्रायत्वेन स्वतन्त्राणां न किञ्चिदपि कार्यं जायेत। न च बहूनामेकाभिप्रायनियमो दृष्टः। काकतालीयन्यायेन स्यादेकाभिप्राय एव न पुनरस्य नियमो दृष्टचर इति एतद्दूषणमुपेक्ष्य वार्त्तिककृता प्रत्यय व्यवस्थानुमानं न भवेदिति दूषणमुक्तम्। एकस्मिन् शरीरे प्रत्ययानां परस्परप्रतिसन्धानं पश्यामो न शरीरान्तर इति व्यवस्था। सेयं यद्येकस्मिन् शरीर एक एव चेतनो न चासौ शरीरान्तरे ततो भवत्यन्यथेत्यर्थ इति।

१ नियमानियमाविति यदुक्तं सूत्रे तत्रानुमानं सूचयति भाष्यकारः—दृष्टश्चान्यगुणेति। अत्र तात्पर्यम्–हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः। सोऽयं प्रयोगः–त्रसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् परश्वादिगतप्रवृत्तिवदिति।

२ कोऽसौ गुणः किमाश्रयश्च यन्निमित्तः शरीरे प्रवृत्तिविशेष इत्यपेक्षायामाह—स च गुण इति। सोऽयं गुणः संस्कारविशेष एव धर्माधर्मनाम्ना प्रसिद्धः प्रयत्नसमानाश्रय एव। यस्मिन्नाश्रये प्रयत्नः समवैति तस्मिन्नेव स संस्कारोऽपीत्यर्थः। स च 'सर्वार्थः' पुरुषसम्बन्धसकलार्थप्रयोजकः पुरुषार्थाराधनाय पुरुषस्यार्थानामाराधनाय सम्पादनाय भूतानां तत्पुरुषशरीरारम्भकाणां प्रयोजकः प्रवर्तकः।

आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः । 'नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्' इति च समानः प्रतिषेध इति ।

क्रियामात्रं क्रियोपरममात्रं चारम्भनिवृत्ती इत्यभिप्रेत्योक्तम्–'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः' इति । अन्यथा त्विमे आरम्भनिवृत्ती आख्याते, न च तथाविधे पृथिव्यादिषु दृश्येते । तस्मादयुक्तम्–'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध' इति ॥ ३७ ॥

भूतेन्द्रियमनसां समानः प्रतिषेधो मनस्तूदाहरणमात्रम् ।

**यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥३८॥**

'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्ग' मित्यतः प्रभृति यथोक्तं सङ्गृह्यते । तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः ।

पारतन्त्र्यात् । परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात्प्रवर्तन्ते । चैतन्ये पुनः स्वतन्त्राणि स्युरिति ।

अकृताभ्यागमाच्च । 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ' इति चैतन्ये भूते-

---

१ तल्लिङ्गत्वादिति (३५) सूत्रोक्तस्याक्षेपस्य समाधानान्तरमाह–क्रियामात्रमिति । इच्छेत्यत्र (३४) सूत्रे आरम्भनिवृत्तिशब्देन न प्रवृत्तिनिवृत्तिमात्रमभिमतमस्माकमपि तु हिताहितप्राप्तिपरिहारार्थं स्पन्दविशेष । तस्मिन् प्रवृत्तिविशेषसत्त्वाऽऽक्षेपकेण प्रवृत्तिसामान्येन प्रत्यवस्थितम् । अतोऽत्र 'अप्रतिपत्ति'–स्ते निग्रहस्थानमित्याशय. ।

२ बुद्धे शरीरमात्रगुणत्वमपाकृत्य भूतेन्द्रियमनसामपि न सा गुणो भवितुमर्हतीत्युपपादयितु हेतूनुपन्यसिष्यन् तत्र कथ केवल मनस एव ग्रहणं कृत न भूतेन्द्रिययोरिति वहिः पूर्वपक्षे समाधानमाह–भूतेन्द्रियमनसामिति । ये हेतवोऽग्रिमसूत्र उपन्यस्तास्ते सर्वे बुद्धे भूतगुणत्वमिन्द्रियगुणत्वम्मनोगुणत्व च निषेधयितुं तुल्यमेव समर्थास्तथाऽपि मनोमात्रस्य ग्रहणं केवलमुदाहरणरूपेण कृतम् । भूतेन्द्रियमनसामध्ये आद्ययोरुभयोरपि भौतिकत्वान्मनसश्चाभौतिकत्वादस्यैवाभौतिकेनात्मना सादृश्यमस्तीति मनोगुणत्वे निषिद्धे सुतरामेव भूतेन्द्रियगुणत्वमपि निषिद्धमेवेति हृदय सूत्रकारस्येत्याशयः ।

३ बुद्धेर्मनोगुणत्वप्रतिषेधाय हेतुत्रयमसूचयत् सूत्रम्—यथोक्तहेतुत्वादिति । न मनस गुणो बुद्धिरिति शेष ।

४ हेतुमेकं प्रकटयति–प्रवृत्तिरिति । प्रथमाध्यायप्रथमाह्निकान्तर्गतसप्तदशसूत्रे वाग्बुद्धिशरीरारम्भस्य प्रवृत्तिरूपत्वमुक्तम्पुनस्तत्रैव द्वितीयसूत्रभाष्ये प्रवृत्तिशब्दस्य धर्माधर्मयोरुपचारितम् ।

न्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यत इति स्यात्। अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥ ३८ ॥

अथायं सिद्धोपसङ्ग्रहः—

**परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ३९ ॥**

आत्मगुणो ज्ञानमिति प्रकृतम्।

परिशेषो नाम—प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः। भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते, शिष्यते चात्मा। तस्य गुणो ज्ञानमिति ज्ञायते।

'स्पर्शनाभ्यामेकार्थग्रहणात्' इत्येव-

।

परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति।

---

१ बुद्धेरात्मगुणत्वमुपसंहरति—अथायमिति। 'सिद्धस्य' सिद्धान्तस्य 'उपसङ्ग्रहः' उपसंहार इत्यर्थः।

२ तदुपसंहारपरं सूत्रम्—परिशेषादिति।

३ सूत्रवाक्यं पूरयति—आत्मेति। एवं च परिशेषाद् यथोक्तोपपत्तेश्च आत्मगुणो ज्ञानमिति सिद्धान्तसूत्रं पर्यवसितम्।

४ परिशेषादिति हेतुं व्याचष्टे—परिशेषो नामेति। प्रथमाध्यायप्रथमाह्निकस्थ-पञ्चमसूत्रभाष्यस्थान्येतान्यक्षराणि तत्रैव व्याख्यातानि।

५ तदुक्तं शास्त्रे प्रकृते योजयति—भूतेन्द्रियेति। आत्मभूतेन्द्रियमनस्स्वेव बुद्ध्याधारत्वेन 'प्रसक्तानि' तेषु तावद्युक्तप्रकारेण भूतेन्द्रियमनसां तदाधारत्वेन— 'प्रतिषेधे' 'अन्यत्र' आत्मभूतेन्द्रियमनोव्यतिरिक्तद्रव्यान्तरे 'अप्रसङ्गात्' बुद्ध्या-धारत्वासम्भवात् 'शिष्यमाणे' अवशिष्टद्रव्यम् आत्मैव। ततश्चात्मन एव गुणो बुद्धिरिति निश्चीयते।

६ यथोक्तहेतूपपत्तेरिति द्वितीयं हेतुमनूद्य व्याचष्टे—यथोक्तेति। तृतीयाध्याये दर्शनस्पर्शनाभ्यामित्यादिग्रन्थेन ये आत्मास्तित्वसाधनहेतव उपन्यस्तास्तेषां सर्वेषा-मात्मनो बुद्धिगुणत्वसाधनत्वेऽप्यवस्थितत्वादपि कस्यापि प्रतिषेधो नावलभ्यतेऽतो न एव सर्वेऽ-प्यात्मनि दिश्यन्ते। 'उपपत्तेः' अप्रतिषेधादित्यर्थः।

७ यथोक्तहेतूपपत्तेश्चेत्यस्य व्याख्यान्तरमप्याह—परिशेषेति। परिशेषादित्यस्यैव हेतोरुपादानं यथोक्तहेतूपपत्तेश्चेति वाक्यम्—यथोक्तहेत्विति। तथा च हेतुसमाप्तौ शिष्यते इति तत्रैव तृतीयाध्यायगतहेतवः साधका इति पर्यवसितोऽर्थः।

अथ[1] वो'पपत्तेश्चे'ति हेत्वन्तरमेवेदम् । नित्यः खल्वयमात्मा, यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायभेदात् स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदात् नरकेषूपपद्यत इति । उपपत्तिः शरीरान्तरप्राप्तिलक्षणा, सा सति सत्त्वे नित्ये चाश्रयवती । बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यत इति । एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते । शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते । बुद्धिसन्ततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं सन्धावति न कश्चिच्छरीरप्रबन्धाद्विमुच्यत इति संसारापवर्गानुपपत्तिरिति । बुद्धिसन्ततिमात्रे च सत्त्वभेदात्सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितमव्यावृत्तमपरिनिष्ठितं च स्यात् । ततः[2] स्मरणाभावान्नान्यदृष्टमन्यः स्मरतीति । स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणमज्ञासिषममुमर्थं ज्ञेयमिति । सोऽयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति, तच्चास्य ग्रहणं स्मरणमिति तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ३९ ॥

स्मरणं[3] त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४० ॥

उपपद्यत[4] इति । आत्मन एव स्मरणं न बुद्धिसन्ततिमात्रस्येति । 'तु'श-

---

१ अपरं व्याख्यानम्—अथ वेति । 'उपपत्तेश्चे'ति तृतीयाध्यायचतुर्हेतुभ्योऽन्या 'उपपत्तिः' हेतून् परामृशति ।

अत्र तात्पर्यम् । पूर्वेद्युरर्धकृतानामपरेद्युः परिसमापना दृष्टा मयारब्धधर्ममयैव परिसमापनीयमिति प्रतिसन्धाने अप्रतिसन्धाने तु न परिसमापयेयुः । परिसमापयेत वा चैत्रारब्धमर्चत्र. समापयेत् । यत स्वयमारब्धात परारब्धमव्यावृत्तमविशिष्टम्—स्वस्यापि परत्वात् । अपरिनिष्ठितं च कर्मजातं स्यात् । तथाहि—वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ—एवं राजसूये राजैव न ब्राह्मणो वैश्यो वा—एवं सोमसाधनके यागे ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ—शूद्रश्चानधिकृत एवेति 'परिनिष्ठा' । सा बुद्धिसन्ततिमात्रे न स्यात् । कुतः ? सद्लक्षणानां सर्वेषामेव त्रैलोक्यवैलक्षण्येन भेदात्—अन्यापोहसामान्यस्य च व्यावर्तितत्वादित्यर्थ इति ।

२ इष्टापत्तिमाशङ्क्य दोषमाह—तत इति । 'ततः' सकलव्यवहाराणामप्रतिसंहितत्वात् स्मरणाभावः ।

३ नित्ये त्वात्मनि स्मरणमुपपद्यत इत्याह—स्मरणं त्विति सूत्रम् ।

४ सूत्रवाक्यम्पूरयति—उपपद्यत इति । तथा च स्मरणमात्मनो ज्ञस्वाभाव्यादुपपद्यत इति सूत्रस्वरूपं पर्यवसितम् । त्रिकालव्यापिनी ज्ञानशक्तिरेव 'ज्ञस्वाभाव्यम्' । तद्धि आकाशादिभ्यो व्यावृत्तं त्रिकालव्यापि स्वरूपमेवात्मनः । एतत्स्वरूपे आत्मनि सत्येव स्मरणमुपपद्यत इति भावः ।

ज्ञोऽवधारणे। कथम्? ज्ञस्वभावत्वात्। ज्ञ इत्यस्य स्वभावः स्वो धर्मः। अयं खलु ज्ञास्यति जानाति अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन सम्बध्यते। तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयं ज्ञास्यामि जानामि अज्ञासिषमिति वर्तते। तदस्याय स्वो धर्मस्तस्य स्मरणं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥ ४० ॥

स्मृतिहेतूनामयौगपद्यादयुगपत्स्मरणमित्युक्तम्। अथ केभ्यः स्मृतिरुत्पद्यत इति?

स्मृतिः[१] खलु—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४१ ॥**

सुस्मूर्षया मनसो धारणं प्रणिधानं—सुस्मूर्षितलिङ्गानुचिन्तनं चार्थस्मृतिकारणम्।

निबन्धः—खल्वेकग्रन्थोपयमोऽर्थानाम्। एकग्रन्थोपयता खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्येणेतरथा वा भवन्तीति। धारणशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिक्षेपो निबन्ध इति।

अभ्यासस्तु—समाने विषये ज्ञानानामभ्यावृत्तिः। अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते। स च स्मृतिहेतुः समान इति। लिङ्गं—पुनः संयोगि समवाय्येकार्थसमवायि विरोधि चेति। यथा—धूमोऽग्नेः, गोर्विषाणम्, पाणिः पादस्य, रूपं स्पर्शस्य, अभूतं भूतस्येति। लक्षणं—पशवयवस्थं गोत्रस्य स्मृतिहेतुः—विदानामिदं, गर्गाणामिदमिति। सादृश्यं—चित्रगतं प्रतिरूपकं—देवदत्तस्येत्येवमादि। परिग्रहात्—स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते। आश्रयात्—ग्रामण्या तदधीनं संस्मरति। आश्रितात् तदधीनेन ग्रामण्यमिति। सम्बन्धात्—अन्तेवासिना युक्तं गुरुं स्मरति, ऋत्विजा याज्यमिति। आनन्तर्यादिति—करणीयेष्वर्थेषु। वियोगात्—येन विप्रयुज्यते

१ स्मृतिहेतूनामयौगपद्यादिति पूर्वोक्तं स्मारयित्वा स्मृतिहेतुवर्णनपरं सूत्रमवतारयितुं पृच्छति—अथ केभ्य इति।

२ पञ्चावयवानितस्मृतिहेतुनिरूपणपरमुत्तरम्—स्मृतिः खल्विति भाष्यमारभ्य प्रणिधानादि निमित्तेभ्य इत्यन्तम्।

तद्वियोगप्रतिसंवेदी भृशं स्मरति। एककार्यात्—कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृतिः। विरोधात्—विजिगीषमाणयोरन्यतरदर्शनादन्यतरः स्मर्यते। अतिशयात्—येनातिशय उत्पादितः। प्राप्तेः—यतो येन किञ्चित्प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति। व्यवधानात्—कोशादिभिरसिप्रभृतीनि स्मर्यन्ते। सुखदुःखाभ्याम्—तद्धेतुः स्मर्यते। इच्छाद्वेषाभ्याम्—यमिच्छति यं च द्वेष्टि तं स्मरति। भयात्—यतो बिभेति। अर्थित्वात्—येनार्थी भोजनेनाच्छादनेन वा। क्रियायाः—रथेन रथकारं स्मरति। रागात् यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति। धर्मात्—जात्यन्तरस्मरणमिह चाधीतश्रुतावधारणमिति। अधर्मात्—प्रागनुभूतदुःखसाधनं स्मरति।

न[1] चैतेषु निमित्तेषु युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति।
निदर्शनं[2] चेदं स्मृतिहेतूनां न परिसङ्ख्यानमिति[3] ॥ ४१ ॥

## (४) बुद्धेरुत्पन्नापवर्गित्वप्रकरणम्।[4]

अनित्यायां च बुद्धौ[5] उत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्चानित्यानां

१ उक्तमर्थं प्रकृते योजयन् प्रकरणमुपसंहरति—न चैतेष्विति।

२ ननून्मादादयोऽपि स्मृतिहेतवः सन्ति तत्कथमत्र नोक्ता इत्यत आह—निदर्शनमिति।

३ परिसङ्ख्यानमिति—अनन्तानां स्मृतिहेतूनामियत्तागणनमित्यर्थः।

४ बुद्धेरात्मगुणत्वं प्रसाध्य तस्या उत्पन्नापवर्गित्वं निरूपयिष्यते। ज्ञानयौगपद्य-निराकरणप्रसङ्गेन च स्मृतिक्रमोऽपि विचारयिष्यते। ज्ञानस्य स्थायित्वे प्रत्यभिज्ञावत् स्मरणं "यावता ज्ञानमात्मन्यवतिष्ठते" इति सूत्र (४०) उक्तम्। तदानीमेव स्मरणं सर्वदा स्यात्। तत्र सति संस्कारः। स च ज्ञानस्यानुत्पन्नविनाशित्वे कथं भवति तदधुना विचार्यते। अत एव तृतीयाध्यायस्य प्रथमाह्निके बुद्धेरनित्यत्वं साधितम्—तत्र प्रमाणाभावात्। बुद्धेः सामान्यतोऽनित्यत्वसाधनमात्मगुणत्व-सिद्धिप्रयोजनम्। तच्च तथा कालान्तरावस्थायित्व एव सम्भवतीत्युक्तम्। अतो बुद्धेरनित्यत्वेऽपि सामान्यतो विचारितेऽपि विशेषतस्तस्या उत्पन्नापवर्गित्वं (आशुतरविनाशित्वं) अधुना विचार्यते।

५ तत्र सूत्रकारः स्मारयति—अनित्यायामिति। बुद्धिरिति पदं सावधिकम्। अनित्यं चोत्पन्नापवर्गि दृष्टं यथा शब्दः, कालान्तरावस्थायि च यथा घट—इत्युभय-दर्शनात् भवति संशयः। उत्पन्नापवर्गित्वमाशुतरविनाशित्वमिति यावत्। कालान्तरावस्थानाच्च विनाशित्वमिति सत्त्वं चाह इत्यन्वयः। किमयं बुद्धिरिति शब्दवदुत्पन्नापवर्गिणीति चाह संशयमिति। किं घटवत् कालान्तरावस्थायिनीति संशयः।

संशय –किमुत्पन्नापवर्गिणी बुद्धिः शब्दवत् आहोस्वित् कालान्तरावस्थायिनी कुम्भवदिति ? उत्पन्नापवर्गिणीति पक्षः परिगृह्यते ।

‘ कस्मात् ? ’’—

कर्मानवस्थायिग्रहणात् ॥ ४२ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति । क्षिप्तस्येषोरापतनात् क्रियासन्तानो गृह्यते । प्रत्यर्थनियमाच्च बुद्धीनां क्रियासन्तानवद् बुद्धिसन्तानोपपत्तिरिति । अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः । अवस्थिते च कुम्भे गृह्यमाणे सन्तानेनैव बुद्धिर्वर्तते प्राग्व्यवधानात् । तत्र व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते । कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति ।

स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने । संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात् । यश्च मन्येत[1]–‘ अवतिष्ठते बुद्धिः दृष्टा हि बुद्धिविषये स्मृतिः, सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति ’’–तदिदमलिङ्गम् । कस्मात् ? बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति ।

हेत्वभावादयुक्तमिति चेत् ’–बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः । यावदवतिष्ठते[2] बुद्धिस्तावदसौ बोद्धव्यार्थः प्रत्यक्षः, प्रत्यक्षे च स्मृतिरनुपपन्नेति ॥ ४० ॥

“ अव्यक्त[3]ग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४३ ॥

---

बुद्धिर्यद्यनित्या तर्हि उत्पन्नापवर्गिणी । अथ सा नित्या तर्हि कालान्तरावस्थायिनीति संशय इति । न चायं सङ्गच्छतेऽप्रिमग्रन्थेनास्यायं पाठ उपेक्षितव्यः ।

१ सिद्धान्तव्यासनैवारब्धमते–उत्पन्नापवर्गिणीति पक्ष इति । अन्येभ्यो विनाशिभ्य आशुतरं विनश्यन्त्येवोत्पन्नापवर्गित्वस्यार्थः । न त्वयमर्थः ‘ उत्पत्त्यनन्तरमेव ध्वंसः ’ इति ।

२ यावदवतिष्ठत इति । यदि बुद्धिरेव कालान्तरावस्थायिनी तर्हि बुद्धिजनकीभूतेन्द्रियसन्निकर्षादिनिवृत्तावप्यवतिष्ठेत । ततश्च बहुकालपर्यन्तं प्रत्यक्षज्ञानस्यैवावस्थानात्स्मृतेरावश्यकताऽवसरो वा न स्यादित्याशयः ।

३ पुनः परः आक्षिपति अव्यक्तग्रहणमित्यादिसूत्रेण । यदि ‘ ग्रहणं ’ ‘ अनवस्थायि ’ स्यात्तर्हि तत् सर्वदाऽव्यक्तमेव स्यात् । यथा विद्युत्सम्पाते यद्रूपग्रहणं भवति तत् क्षणिकं सदव्यक्तमेव भवतीति सूत्रार्थः ।

यद्युत्पन्नापवर्गिणी बुद्धि , प्राप्तमव्यक्त वोद्धव्यस्य ग्रहण–यथा विद्युत्सम्पाते वस्तुतस्य प्रकाशस्यानवस्थानाद् यक्त रूपग्रहणमिति व्यक्त तु द्रव्याणा ग्रहणम् । तस्मादयुक्तमेतदिति ' ॥ ४३ ॥

## हेतूपादानात् प्रतिपेद्धव्याभ्यनुज्ञा ॥ ४४ ॥

उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यम् । तदवाभ्यनुज्ञायते ' विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति ' । यत्राव्यक्तग्रहण तत्रोत्पन्नापवर्गिणी बुद्धिरिति ।

ग्रहणे हेतुविकल्पाद्ग्रह० विकल्पो न बुद्धिविकल्पात् । यदिद कचिदव्यक्त कचिद्व्यक्त ग्रहणमय विकल्पो ग्रहणहेतुविकल्पात् । यत्रानवस्थितो ग्रहणहेतु तत्राव्यक्त ग्रहण, यत्रावस्थितस्तत्र व्यक्तम्–न तु बुद्धेरवस्थानानवस्थानाभ्यामिति । कस्मात्? अर्थग्रहण हि बुद्धि । यत्र तदर्थे ग्रहणमव्यक्त व्यक्त वा बुद्धि सेति । विशेषाग्रहणे च सामान्यग्रहणमात्रमव्यक्तग्रहणम् । तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात् । यत्र समान धर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद्व्यक्त ग्रहणम् । यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्र तदव्यक्त ग्रहणम् । समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरम् । तत्र यद्ग्रहण न भवति तद्ग्रहणनिमित्ताभावात्, न बुद्धेरनवस्थानादिति ।

यथाविषय च ग्रहण व्यक्तमेव । प्रत्यर्थनियतत्वाच्च बुद्धीनाम् । सामान्यविषय च ग्रहण स्वविषय प्रति व्यक्त, विशेषविषयं च ग्रहण स्वविषय प्रति व्यक्तम् । प्रत्यर्थनि ता हि बुद्धय । तदिदमव्यक्तग्रहण देशित क विषये बुद्ध्यनवस्थाकारित स्यादिति ?

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्या तदुपपत्ति । धर्मिण खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च । तेषु प्रत्यर्थनियता नानाबुद्धय । ता

१ आक्षेप परिहरति–हतूपादानादितिसूत्रण । या हेतुराक्षेप्त्रापन्यस्तस्तेनैवाक्षिप्तस्य पक्षस्य स्वाकार कृत इत्यर्थ ।

२ आक्षेप प्रौढिवादेन परिहृत्य तात्त्विकपरिहारान्तमाह–ग्रहणे हेत्वित्यादि बुद्धिविकल्पादित्यन्तम् । एतद्वाक्य कचित्सूत्रत्वेनाभिप्रयन्ति । तत्र प्रमाणाभावाद् भाष्यस्यैव सक्षिप्तोक्तिरियमिति निर्धारितम् ।

३ तदिदमिति यदि बुद्धिरनवस्थिता स्यादव्यक्तमेव ग्रहण स्यादिति परस्याक्षेप । तत्र तावद्ग्रहणस्याव्यक्ततैवाप्रसिद्धेति प्रदर्शितम् । तथा चाक्षेपस्य मूलमेवापसारितमित्यभिमिति हृदयम् ।

उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य । यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति । एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति ॥ ४४ ॥

न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वानवस्थायित्वादुपपद्यत इति । इदं[1] हि-

न[2] प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४५ ॥

अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम् । कथम् ? 'प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्' । प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च, प्रत्यर्थनियतत्वाद्बुद्धीनां, यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति । दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥ ४५ ॥

(५) बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ।

"चेतना शरीरगुणः—सति शरीरे भावादसति चाभावादिति"—

द्रव्ये[7] स्वगुणपरगुणोपलब्धेः संशयः ॥ ४६ ॥

---

१ सर्वमिति । ग्रहणस्य यद्व्यक्तत्वमव्यक्तत्वं वा न तज्ज्ञानस्यावस्थानानवस्थानकारितमपि तु गृह्यमाणार्थस्वरूपकारितमिति भावः । ततश्चाक्षेपः समूलं पराहत इति तत्त्व इति ।

२ द्वितीयमपि परिहारं प्रौढिवादमात्रं मत्वा पुनः प्रकारान्तरेण परिहारमाह—नेदमिति । ग्रहणस्याव्यक्तता ग्रहणानवस्थायित्वकारिता न भवति किं तु ग्रहणविषयस्वरूपकारितैवेति प्रसाधितम् । तत्त्वतस्तु ग्रहणगतमव्यक्तत्वं न ग्रहणानवस्थायित्वकारितं न वा तद्विषयानवस्थायित्वकारितमिति तत्त्वम् ।

३ एवं सति (४३) सूत्रकृतपराक्षेपस्य किमुत्तरमित्यपेक्षायामुत्तरसमर्पकसूत्रमवतारयति— इदं हि ' इति भाष्यम् ।

४ इदमिति प्रकृतमाक्षेपं परामृशति—नेति । यत्परेणोक्तं तन्न सम्भवतीत्यर्थः । कुत इत्याह—प्रदीपार्चिरिति । परोक्तस्यैकान्तिकत्वप्रदर्शनार्थमेतत् ।

५ उत्पन्नापवर्गित्वं बुद्धेः प्रसाध्य शरीरगुणव्यतिरेकप्रकरणमारम्भणीयम् । उत्पन्नापवर्गित्वे हि सिद्धे वक्ष्यमाणहेतवः सुप्रतिपन्ना भवन्तीति तदनन्तरमस्यारम्भः । पूर्वं भूतेन्द्रियमनोगुणत्वप्रतिषेधसाधारणहेतुभिः शरीरगुणत्वमपि प्रतिषिद्धमेव । अधुना तु शरीरगुणत्वमेव प्रतिषेद्धुं विशेषहेतवोऽभिधीयन्ते । एतद्विशेषहेतुप्रतिपादनस्य तु बुद्ध्यनवस्थायिताधीनत्वादेव तत्प्रकरणमेतदन्तरे निवेशितमिति बोध्यम् ।

६ तत्रोत्सूत्रमेव पूर्वपक्षमुपस्थापयति—चेतना शरीरगुण इति ।

७ पूर्वपक्षं संशयप्रस्तवेन निराकरोति—द्रव्य इति सूत्रेण । द्रव्येषु स्वगुणानां परगुणानां चोपलब्धिरतः संशय इति सूत्रार्थः ।

साशयिक सति भाव । स्वगुणोऽप्सु द्रवत्वमुपलभ्यते, परगुणश्चो ष्णता । तेनाय सशय —किं शरीरगुणश्चेतना शरीरे गृह्यतेऽथ द्रव्यान्तरगुण इति ? ॥ ४६ ॥

न शरीरगुणश्चेतना । "कस्मात् ?"—

यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४७ ॥

न रूपादिहीन शरीर गृह्यते । चेतनाहीन तु गृह्यते, यथाष्णताहीना आप । तस्मान्न शरीरगुणश्चेतनेति ।

"सस्कारवदिति चेत् ?"—न, कारणानुच्छेदात् । यथाविधे द्रव्ये सस्कार तथाविध एवोपरमो न । तत्र कारणोच्छेदादत्यन्त सस्कारा

---

१ पूर्वपक्ष साशयिकत्वेनापाकृत्य सिद्धान्तमुपस्थापयति—न शरीरेति ।

२ तत्रोत्तरम्—यावच्छरीरेति सूत्रम् । इद वैधर्म्येण दृष्टान्तसूत्रम् । रूपादि गुणस्त्वेव शरीरेणान्वयव्यतिरेकी । रूपादय एव यावच्छरीरभाविनो न पुनश्चैतन्यम्

तथा चात्र प्रयोग —न शरीरगुणश्चेतना, शरीरेऽपि तस्यानुपलब्धे., जलस्पर्श्यवदिति । इद सूत्र तर्कोद्भावनपरमिति परिशुद्धिकृत । तर्काकारश्च—'यदि बुद्ध्यादिक शरीरगुण स्याद्यावच्छरीरभावि स्यात्, रूपादिवदिति'। अनुमानोद्भावनपरमिति वृत्तिकृत । तदुक्तमनुमानस्वरूप च—'बुद्ध्यादिक न शरीरविशेषगुणोऽयावद्द्रव्य भावित्वात्, शब्दवत्, रूपवद्वा (व्यतिरेके)।' अयावद्द्रव्यभावित्व चाश्रयत्वा भिमतकालीननाशप्रतियोगित्वम् ।

३ पर स्वपक्षसाधक दृष्टान्तान्तरमाह—सस्कारवदिति । यथा सस्कार शरीरगुणा न च यावच्छरीर वर्त्तत तथा चेतनापीत्याशय ।

४ तत्परिहरति—न कारणेति ।

उक्तवैपम्यपरिजिहीर्षया पर एव ब्रूयात्—'यथैव संस्कारस्य कारण सदाश्रय भूतद्रव्यादन्यदेव नोदनादि, यस्य सत्त्वेन तस्योत्पत्तिर्यस्य चोपरमेण तस्यापरम , एवमेव शरीरगतचैतन्यस्यापि न शरीरमात्र कारणमपि त्वन्यदव किमपि तत्सन्निहितमिति'। एतदेव दूषयितु विकल्पयति । इदमप्यत्रावधेयम् । यच्छरीर चेतनोत्पत्तिकारण तत् किं शरीरस्थमुत द्रव्यान्तरस्थम् । शरीरस्थमपि च यावद्द्रव्यभाव्युत नैमित्तिकम् । यदि यावद्द्रव्यभावि न कदाचिच्चेतनाहीन शरीरमुपलभ्येत, निमित्तस्य सन्निहितत्वात् । अथ नैमित्तिक, यच्छरीरे चेतनोत्पत्तनिमित्तस्य कारण तत्रापि स एव प्रसङ्ग । अथ द्रव्यान्तरवृत्ति कारण शरीरे चेतना करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्य । द्रव्यान्तरस्थ च तत्कारण नित्यमनित्य वा । अनित्यमपि कालान्तरावस्थायि प्रतिक्षण ध्वसि वेति स एव प्रसङ्गस्तदवस्थ इत्यादि वार्त्तिके स्पष्टम् ।

नुपपत्तिर्भवति । यथाविधे शरीरे चेतना गृह्यते तथाविध एवात्यन्तोपरमश्चेतनाया गृह्यते । तस्मात् संस्कारवदित्यसम समाधि ।

" अथापि शरीरस्थ चेतनोत्पत्तिकारण स्याद् द्रव्यान्तरस्थ वा उभयस्थ वा " । तन्न, नियमहेत्वभावात् । शरीरस्थेन कदाचिच्चेतनोत्पद्यते कदाचिन्नेति नियमे हेतुर्नास्तीति । द्रव्यान्तरस्थेन च शरीर एव चेतनोत्पद्यते न लोष्टादिष्वित्यत्र न नियमे हेतुरस्तीति । उभयस्थस्य निमित्तत्वे शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते शरीर एव चोत्पद्यत इति नियमे हेतुर्नास्तीति ॥ ४७ ॥

यच्च मन्येत–" सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्ट, एव चेतनोपरम स्यादिति "—

न[1], पाकजगुणान्तरोत्पत्तेः ॥ ४८ ॥

नात्यन्त रूपोपरमो द्रव्यस्य–श्यामे रूपे निवृत्ते पाकज गुणान्तर रक्त रूपमुत्पद्यते । शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ४८ ॥

इतश्च[2]—

प्रतिद्वन्द्विसिद्धेः[3] पाकजानामप्रतिषेधः ॥ ४९ ॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते, पूर्वगुणै सह पाकजानामवस्थानस्याग्रहणात् । न च शरीरे चेतनाप्रतिद्वन्द्विसिद्धौ सहानवस्थायि गुणान्तर गृह्यत येनानुमीयेत तेन चेतनाया विरोध । तस्मादप्रतिषिद्धा चेतना यावच्छरीर वर्तेत ? न तु वर्त्तते । तस्मान्न शरीरगुणश्चेतना इति ॥ ४९ ॥

इतश्च न शरीरगुणश्चेतना—

शरीर[4]व्यापित्वात् ॥ ५० ॥

---

१ परिहरन्ति–न पाकजेति सूत्रम् । वृत्तिकृतस्त्वतत् सूत्र पूर्वपक्षत्वेन वर्णितमन्त । तदर्थश्च–द्रव्य घटादौ सत्यव तत्र पाकानन्तर गुणान्तरस्योत्पत्ते 'न' समीचीन सिद्धान्तयुक्तमिति । तन्मतेनास्यैव पूर्वपक्षस्य परिहारोऽग्रिमे सूत्रे ।

२ तदवमात्यन्तिकानात्यन्तिकत्व वैधर्म्यमुक्त्वा सप्रतिद्वन्द्वित्वासप्रतिद्वन्द्वित्व वैधर्म्यान्तरमुद्भावयितुमाह–इतश्चेति ।

३ तद्वैधर्म्यमेवाह–प्रतिद्वन्द्वीतिसूत्रम् ।

४ तदव हेत्वन्तरमाह शरीरव्यापित्वादितिसूत्रम् । नैतत्साधनमपि नु शरीरे चेतनां ब्रुवतोऽनेकचेतनत्वप्रसङ्गोद्भावनमात्रमिति वार्तिककृत । साधनमेवत्ति परिशुद्धि-

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न कचिदनुत्पत्तिश्चेतनायाः। शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम्। तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्था लिङ्गम्, एवमेकशरीरेऽपि स्यात्? न तु भवति। तस्मान्न शरीरगुणश्चेतनेति ॥ ५० ॥

"यदुक्तं–न कचिच्छरीरावयवे चेतनाया अनुत्पत्तिः–इति, सा—

न, केशनखादिष्वनुपलब्धेः ॥ ५१ ॥

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति" ॥ ५१ ॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५२ ॥

इन्द्रियाश्रयत्वं शरीरलक्षणम्। त्वक्पर्यन्तं जीवमनःसुखदुःखसंवित्त्यायतनभूतं शरीरम्। तस्मान्न केशादिषु चेतनोत्पद्यते। अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५२ ॥

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५३ ॥

द्विविधः शरीरगुणोऽप्रत्यक्षश्च गुरुत्वम्, इन्द्रियग्राह्यश्च रूपादिः। विधान्तरं

---

कृतः। तत्र प्रयोगश्चोक्तः–चेतना न शरीरविशेषगुणः, अव्याप्यवृत्तित्वात्, शब्दवदिति भाष्यवार्तिकोक्तिरित्थं व्याख्याता तैः–एष चार्थः 'शरीरव्यापित्वा'दित्येतस्य सूत्रस्य स्पष्टत्वाद्भाष्यकारादिभिरुपेक्षितः। उत्तरसूत्रावतारपरैस्त्वेकस्मिन्नपि शरीरे चेतनबहुत्वप्रसङ्गतया सूत्रं व्याख्यातमिति मन्तव्यमिति।

१ आक्षेपसूत्रमवतारयन् सिद्धान्त्युक्तमनुवदति-यदुक्तमिति। एकस्मिन्नेव शरीरे प्रत्यवयवं चैतन्यं स्यादिति यदुक्तं सिद्धान्तिना तद्बहुत्वप्रसूत्रस्थनकारेण सम्बन्धः।

२ आक्षेपसूत्रम्–न केशनखेति। दृष्टान्तसूत्रमिदम्।

३ हेतूद्भावनपरं सूत्रम्–शरीरगुणेति। शरीरे ये गुणा वर्तन्ते तेभ्यस्सर्वेभ्योऽपि विलक्षणमेव चैतन्यमित्यर्थः।

४ सूत्रार्थं विशदयति–द्विविध इति। शरीरगुणा द्विधा विभज्यन्ते। केचिदप्रत्यक्षा अनुमेयाः—यथा गुरुत्वम्। केचित्प्रत्यक्षा इन्द्रियग्राह्याः—यथा रूपम्।

५ द्विविधादपि वैलक्षण्यं चैतन्यस्य प्रदर्शयति–विधान्तरमिति। चैतन्यं नाप्रत्यक्षम्–संवेद्यत्वात्–स्वसंवेद्यत्वादेवेत्यर्थः। नापीन्द्रियग्राह्यम् 'मनोविषयत्वात्' मनोमात्रग्राह्यत्वादित्यर्थः। एवं च व्याख्याने मनसोऽनिन्द्रियत्वमभ्युपगतं भवतीति

तु चेतना–नाप्रत्यक्षा संवेद्यत्वात्, नेन्द्रियग्राह्या मनोविषयत्वात् । तस्माद् द्रव्यान्तरगुण इति ॥ ५३ ॥

"न रूपादीनामितरेतरवैधर्म्यात् ॥ ५४ ॥

यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहत्येवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति" ॥ ५४ ॥

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५५ ॥

अप्रत्यक्षत्वाच्चेति । यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यादिति । अतिवर्तते तु । तस्मान्न शरीरगुण इति ।

भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्यारम्भो विशेषज्ञापनार्थः । बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति ॥ ५५ ॥

---

कृत्वा वार्त्तिककारेणान्यथा व्याख्यातमिदं वाक्यम् । तद्यथा–चेतना 'न प्रत्यक्षा न बाह्यकरणप्रत्यक्षा, स्वसंवेद्यत्वात्, 'नापि अप्रत्यक्षा' न अतीन्द्रिया, मनोविषयत्वादिति । एवं च व्याख्याने एवम्पाठोऽभिप्रेत –'न प्रत्यक्षा संवेद्यत्वात्, नातीन्द्रियग्राह्या मनोविषयत्वादिति' ।

१ उपसंहरति–तस्मादिति । चेतना शरीरभिन्नद्रव्याश्रयेत्यर्थः ।

२ आक्षिपति–न रूपादीनामितिसूत्रेण । शरीरगुणवैधर्म्यमात्राच्च शरीरावृत्तित्वं चेतनायाः सिद्ध्यतीत्यर्थः ।

३ समाधत्ते–ऐन्द्रियकत्वादितिसूत्रेण । शरीरगतरूपादयः परस्परविधर्माणोऽपि मुख्यंऽशे सधर्माण एवेत्यर्थः । 'अप्रतिषेधः' शरीराश्रयत्वस्येति शेषः ।

४ 'यथोक्तहेतुत्वादि'त्यादि ( ३८ ) सूत्रोक्तेन बुद्धेर्भूतेन्द्रियमनोऽवृत्तित्वेनैतत्प्रकरणस्य पौनरुक्त्यमाशङ्कमानः समाधत्ते–भूतेन्द्रियमनसामिति । सिद्धेऽप्यर्थे विशेषज्ञापनार्थमेतत्प्रकरणम् । व्याख्यातमेतत्समाधानमेतत्प्रकरणारम्भे 'दम्भ'इत्यादि (४६) सूत्रव्याख्याने ।

५ विशेषज्ञापनस्य फलमाह–बहुधेति ।

## ( ६ ) मन परीक्षाप्रकरणम् ।

परीक्षिता बुद्धि । मनस इदानीं परीक्षाक्रम । तत् किं प्रतिशरीरमेक मनेकमिति विचारे—

### ज्ञानायोगपद्यादेकं मनः ॥ ५६ ॥

अस्ति खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयम्–करणस्यैक-प्रत्ययनिर्वृत्तौ सामर्थ्यात् । न तदेकत्वे मनसो लिङ्गम् । यत्तु खल्विदमिन्द्रि-यान्तराणा विषयान्तरेषु ज्ञानायोगपद्यमिति तल्लिङ्गम् । कस्मात् ? सम्भवति खलु वै बहुषु मन स्विन्द्रियमन सयोगयौगपद्यमिति ज्ञानयौगपद्य स्यात् । न तु भवति । तस्माद्विषये प्रत्ययपर्यायादेक मन ॥ ५६ ॥

### "न, युगपदनेकक्रियोपलब्धेः ॥ ५७ ॥

अयं खल्वध्यापकोऽधीते, व्रजति, कमण्डलुं धारयति, पन्थान पश्यति, शृणोत्यरण्यजान् शब्दान्, बिभेति, व्याललिङ्गानि बुभुत्सते, स्मरति च गन्तव्य स्थानीयमिति क्रमस्याग्रहणाद्युगपदेता क्रिया इति प्राप्तं मनसो बहुत्वमिति " ॥ ५७ ॥

### अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ५८ ॥

आशुसञ्चारादलातस्य भ्रमतो विद्यमान क्रमो न गृह्यते । क्रमस्या ग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति । तथा बुद्धीना क्रियाणा चाशुवृत्ति

---

१ 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमि ति मनोलक्षणम् । एतच्च मनस एकस्मिन् शरीरे बहुत्वनाशुसञ्चारित्वेन विभुत्वेन वा स्यात् । एव चास्य विचारस्य साम्प्रत्यि कव्यवहाराविरोधेन धारणायामेकाग्रतासिद्धि प्रयोजन स्यात् । अन्यथा त्वेकस्मिन् प्रत्याहृतेऽपि मनोन्तरविक्षेपादसञ्चारित्वे विभुत्व वा प्रत्याहर्तुमशक्यत्वात् न प्रत्या हारादिसिद्धि । तथा च निदिध्यासनासिद्धौ मननानुपयोगे न्यायविद्यावैयर्थ्यमापद्यत । अत एव प्रतिशरीरमेक मनेक वेति विचारस्यावश्यकता ।

२ तस्य क्रममाह–परीक्षितेति । प्रथमाध्यायनवमसूत्रे प्रमेयाणामुद्देशे बुद्ध्य नन्तरमेव पठितमत एव बुद्धिपरीक्षानन्तरम्मनस परीक्षावसर ।

३ विचारविषय प्रस्तौति–तत्किं प्रतिशरीरमिति ।

४ विचार इति । अस्य विचारे सति अय सूत्रोक्त सिद्धान्त इति वाक्यशेष ।

५ तत्र सिद्धान्तमाचक्षते–ज्ञानायौगपद्यादितिसूत्रम् । यस्माज्ज्ञानानि न युगपदुत्पद्यन्ते तस्मान्मन प्रतिशरीरमेकमित्यर्थ ।

त्वाद्धियमानः क्रमो न गृह्यते । क्रमस्याग्रहणाद्युगपत् क्रिया भवन्तीत्यभिमानो भवति ।

"किं पुनः क्रमस्याग्रहणाद् युगपत् क्रियाभिमानः अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति ? नात्र विशेषप्रतिपत्तेः कारणमुच्यत इति "।

उक्तम्–इन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्ति–इति । तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात् । अथापि दृष्टश्रुतानर्थान् चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपदनेनानुमातव्यमिति । वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाशुवृत्तित्वात् क्रमस्याग्रहणम् । कथम् ? वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति । श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसन्धत्ते । प्रतिसन्धाय पदं व्यवस्यति । पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते । पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति । सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते । न चासां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते । तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति ।

न चास्ति मुक्तसंशयं युगपदुत्पत्तिर्बुद्धीनां यया मनसां बहुत्वमेकशरीरेऽनुमीयेत इति ॥ ५८ ॥

यथोक्तहेतुत्वाच्चाणु ॥ ५९ ॥

---

१ परिहारं सांशयिकत्वेन व्युदस्यति किम्पुनरिति । अलातचक्रभ्रमिषु ज्ञानेषु च या यौगपद्यबुद्धिर्भवति लोकानां सा क्रमस्य सद्भावाद् भ्रान्तिरूपा आहोस्वित्क्रमस्यासद्भावात् प्रमैवत्येकतरपक्षसाधकं किञ्चिन्नोच्यते सिद्धान्तिना येन भ्रान्तिपक्ष एक प्रामाणिकत्वेन स्वीक्रियेत । तथा च ज्ञानायौगपद्यं सशयग्रस्तमेवेति भाव ।

२ तत्रोत्तरम्–उक्तमिति । नानाविषयाणि ज्ञानानि क्रमिकाण्येव भवन्तीत्युभयवादिसम्मतम्, प्रत्यात्मवेदनीयत्वादित्याह अप्रत्याख्येयमिति ।

३ उपसंहरति–तदेतदिति । उक्तज्ञानेषु क्रमिकत्वदर्शनमेव हेतुर्भवति ज्ञानयौगपद्यबुद्धेर्भ्रान्तित्वसाधने–इत्यर्थः । 'यौगपद्याभिमानः' यौगपद्यभ्रान्तिरिति यावत् । तस्य अनुमानं साधनभूतं लिङ्गमित्यर्थः ।

४ पराद्भावितान् ज्ञानयौगपद्यसाधकान् दृष्टान्तान् व्युदस्य प्रकरणार्थमुपसंहरति—न चास्तीति । 'मुक्तसंशयम्' उभयवादिसम्मतमित्यर्थः । कुत्रापि दृष्टान्ते ज्ञानयौगपद्यमुभयवादिसम्मतं नोपलभ्यते—एवं च ज्ञानानामयौगपद्यासिद्धौ प्रति-... मनसो ... सिद्ध्यतीत्यर्थः ।

अणु मन एक चेति धर्मसमुच्चयो ज्ञानायौगपद्यात् । महत्त्वे मनस सर्वेन्द्रियसंयोगाद्युगपद्विषयग्रहणं स्यादिति ॥ ५९ ॥

## ( ७ ) शरीरस्यादृष्टनिष्पाद्यत्वप्रकरणम् ।

मनसे[1] खलु भो सेन्द्रियस्य[2] शरीरे वृत्तिलाभो नान्यत्र शरीरात् । ज्ञातुश्च[3] पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानमाप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहारा । तत्र[4] खलु विप्रतिपत्ते संशय – किमयं पुरुषकर्मनिमित्त शरीरसर्ग ? आहो भूतमात्रादकर्मनिमित्त इति ? श्रूयते[5] खल्वत्र विप्रतिपत्तिरिति ।

तत्रेदं तत्त्वम्—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः[6] ॥ ६० ॥

---

१ अत्राग्रिमप्रकरणस्य पूर्वापरसम्बन्धम्प्रदर्शयन्नाह–मनस खल्विति । मन पूर्वाधिकरणविचारेणापि परीक्ष्यत इति नासम्बन्ध शरीरोत्पत्तिनिमित्तविचारस्य । 'परीक्षा' नाम परित इक्षा' सा च स्वरूपत सम्बन्धितश्च । शरीरं च मनस आश्रयस्तस्मात् तत्सम्बन्धि । तस्मान्मनस एवेयं परीक्षा या शरीरस्येत्यर्थ । अत्र परिशुद्धिकृत –प्रयोजनं चास्य प्रकरणस्य–विग्रहव्यवस्था संसारापवर्गव्यवस्था प्रायणव्यवस्था च । अदृष्टाख्यनिमित्तसम्भवे च वर्णाश्रमवृत्तयस्तदथालोचनशास्त्राणि च सार्थकानि स्यु । अन्यथा सर्वमेतदनुकारनृत्यमरण्यरुदितं च स्यात् । तदनेन प्रकरणेन सर्वाण्येवातीतानि प्रकरणान्युपक्रियन्ते उत्तराध्यायश्चेति । शरीरमेव पुरुषस्योपभोगायतनम् । मनसश्चेन्द्रियवच्छरीर एव वृत्ति । एतदुभयमपि शरीरस्यादृष्टनिमित्तत्व एवोपपद्यते । अत एवैतत्परीक्षावश्यकत्वम् । शरीरपरीक्षानन्तरमेव तदृष्टनिमित्तत्व परीक्षाया अवसर इति प्रतिभाति । किन्तु पुरुषोपभोगप्रधानकरणभूतस्य मनस परीक्षानन्तरमेव तस्या सम्यगवसर इति ज्ञेयम् ।

२ सेन्द्रियस्येति । इन्द्रियसहितस्य मनस , इन्द्रियाणां मनसश्चेत्यर्थ ।

३ मनस आश्रयत्वेन शरीरमुपवर्ण्योपभोगायतनत्वेन च तद्दर्शयति ज्ञातुरिति ।

४ प्रकरणप्रवर्तकसंशयम्प्रदर्शयति–तत्र खल्विति । अदृष्टाद्भावितभूतपरमाण्वारब्धं शरीरमितिप्रथम कल्प । अदृष्टनिरपेक्षैरेव भूतपरमाणुभिरारब्धमित्यपर ।

५ कथं ज्ञायतेऽत्रतीत्र विप्रतिपत्तिरित्याह–श्रूयत इति । नानादर्शनग्रन्थेषूपलभ्यत इत्यर्थ ।

६ अत्र विप्रतिपत्ता निषेधकोटिस्त्रिधा समुल्लसति–( १ ) अदृष्टाभावात्–( २ ) शरीरहेतुत्वाभावात्–( ३ ) अदृष्टस्य पुरुषसमवायाभावाद्वेति । तत्र सिद्धान्तमुपक्रममाण आद्यां विप्रतिपत्तिकोटिं निरस्यति—पूर्वकृतेतिसूत्रेण । 'पूर्वकृतस्य' पूर्वकृत-

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तम् । तस्य फलं तज्जनितो धर्माधर्मो । तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानम् । तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति । यदधिष्ठानोऽयमात्माऽयमहमिति मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम् । तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिन् शरीरे शरीरान्तरं निष्पद्यते । निष्पन्नस्य चास्य पूर्वशरीरवत्पुरुषार्थक्रिया । पुरुषस्य च पूर्वशरीरवत् प्रवृत्तिरिति । कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यत इति । दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः । तथानुमातव्यं–शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यत इति ॥ ६० ॥

अत्र नास्तिक आह—

" भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् " ॥ ६१ ॥

" यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयत इति " ॥ ६१ ॥

न, साध्यसमत्वात् ॥ ६२ ॥

---

कर्मणो यागदानहिंसादे 'फलस्य' धर्माधर्मरूपस्य 'अनुबन्धात्' आत्मनि समवायात् 'तस्य' शरीरस्य 'उत्पत्ति' इति सम्बन्धः । धर्माधर्मप्रयुक्तेभ्य एव भूतेभ्यः शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्य इत्यर्थः ।

१ परकृतमाक्षेपं प्रस्तौति–अत्रेति । नास्ति परलोको न धर्माधर्माविति यस्याभ्युपगमः स एव नास्तिकपदवाच्यः ।

२ नास्तिककृताक्षेपमाह–भूतेभ्य इतिसूत्रेण । पुरुषादृष्टकृतं शरीरम्, पुरुषार्थक्रियासामर्थ्यादिति हेतोरनैकान्तिकत्वोद्भावनपरमिदं सूत्रम् । 'भूतेभ्यः' परमाणुभ्यो 'मूर्त्तेः' 'सिकतादेः' 'उपादानं' आरम्भो यथा भवति–पुरुषादृष्टनिरपेक्षेभ्य एवेति शेषः–तथैव शरीरस्यापीत्यर्थो वृत्तिकारवर्णितः । 'भूतेभ्यः' कर्मनिरपेक्षेभ्यः परमाणुभ्यो निष्पन्नाया 'मूर्तेः' सिकतादिमूर्तद्रव्याणाम् 'उपादानं' आसादनं यथा पुरुषेण क्रियते तथैव शरीरस्यापीति भाष्यकारीयं व्याख्यानम् ।

३ आक्षेपं परिहरति–न साध्यसमत्वादितिसूत्रेण । पूर्वसूत्रे यदुद्भावितं तस्य दृष्टान्तमात्रत्वादसाधकत्वमत्र । " अथ निरवयवानि भूतानि शरीरमारभन्ते पुरुषार्थ-

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः। साध्यसमत्वादसाधनमिति ॥ ६ ॥

'भूतेभ्यो मूर्त्युपादानवदि'ति चानेन साम्यम्—

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६३ ॥

विषमश्चायमुपन्यासः। कस्मात्? निर्बीजा इमा मूर्तय उत्पद्यन्ते, बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते। तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाशये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥ ६३ ॥

तथाऽऽहारस्य ॥ ६४ ॥

---

क्रियासामर्थ्यात् सिकतादिवत्"—इत्यनुमानमाक्षेप्तुरभिमतम्। तत्रापि न मनु हेतुः, तस्याद्यत्वेऽप्यसिद्धत्वादेवत्यर्थः।

१ सूत्रं व्याचष्टे—यथा शरीरेति। 'साध्या' नोभयवादिसम्मता। साध्य उभयवाद्यनभ्युपगतत्वादसिद्ध एवेति। यच्च नोभयवादिसम्मतं तन्न दृष्टान्तत्वेन उपादातुं योग्यमित्यर्थः। सिकतादीनामपि पुरुषकर्मनिमित्तक एव सर्गोऽस्माकमभिमतस्तथा च न सिकतादिदृष्टान्तोऽपि तूभयवादिसम्मतो रथादिरेव दृष्टान्तस्स च पुरुषगुणविशेषप्रयत्नपूर्वक एव दृष्ट.—न च तथाऽकर्मनिमित्तकसर्गस्य क्वचिद्दृष्टान्त उभयवादिसम्प्रतिपन्नो लभ्यत इति हृदयम्।

२ परोद्भावितं दृष्टान्तमसिद्धत्वेन निरस्य तस्य प्रकृते दृष्टान्तत्वमेव न भवतीत्याह—भूतेभ्य इति। 'भूतेभ्यो मूर्त्युपादानवदिति' यदुक्तमाक्षेप्त्रा तस्य 'अनेन' प्रकृतेन शरीरसर्गेण 'साम्यम्' 'न' भवतीति सूत्रस्थेन नकारेण सम्बन्धः।

३ उक्तमर्थं प्रकृते योजयन् शरीरोत्पत्तिप्रक्रियां वर्णयन् तत्र पुरुषकर्मसापेक्षतां दर्शयति—तत्र सत्त्वस्येति। मातुर्गर्भाशयगतलोहितेन यदा पितृरेतस्संयुज्यते तदाऽस्य संयोगस्य कारणं पुरुषकर्मैव भवति—तदेतत् कर्म जनिष्यमाणस्यात्मनः गर्भवाससुखदुःखाद्यनुभावकमित्येकम्—पित्रोश्च पुत्रजन्मसुखाद्यनुभावकमित्यपरम्। 'अनुभवनीये' इत्यत्र कर्तरि कृत्यप्रत्ययः।

४ उपपन्नमिति—उक्तप्रकारेण सिद्धम्भवति यच्छरीरोत्पत्तौ लोहितरेतोरूपं बीजमेव साक्षात्कारणम्—पुरुषकर्म च तत्कारणप्रयोजकतयैव निमित्तमिति भावः।

५ शरीरोत्पत्तौ निमित्तान्तरं प्रदर्शयति—तथेतिसूत्रेण।

'उत्पत्तिनिमित्तत्वादि'ति प्रकृतम्। भुक्तं पीतमाहारस्तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चोपचिते बीजे गर्भाशयस्थे बीजसमानपाकं, मात्रया चोपचयो बीजे यावद् व्यूहसमर्थः सञ्चय इति। सञ्चितं च कललार्बुदमांसपेशी-कण्डरशिरःपाण्यादिना [illegible] । व्यूहे च गर्भनाड्यावतारित [illegible] । न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पत इति। एतस्मात्कारणात्कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति ॥ ६४ ॥

प्राप्तौ चानियमात् ॥ ६५ ॥

न सर्वो दम्पत्योः संयोगो गर्भाधानहेतुर्दृश्यते। तत्रासति कर्मणि न भवति सति च भवतीत्यनुपपन्नो नियमाभाव इति। कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात्। न ह्यत्र कारणाभाव इति ॥ ६५ ॥

अथापि—

शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥ ६६ ॥

यथा खल्विदं शरीरं धातुप्राणवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाहूदराणां सक्थ्नां च कोष्ठगानां वातपित्तकफानां च मुखकण्ठहृदयामाशयपक्वाशयाधःस्रोतसां च परमदुःसम्पादनीयेन सन्निवेशेन व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षै-रुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते। एवञ्च प्रत्यात्मनि-

१ नात्र वाक्यं पूरयितुमाह—उत्पत्तीति। एवं च तथाऽऽहारस्योत्पत्तिनिमित्तत्वादिति सूत्रस्वरूपं पर्यवसितम्।

२ सम्भाव्यमानदोषपरिहारपरं सूत्रमवतारयति—अथापीति।

३ नन्वात्मनो विभुत्वात्सकलशरीरैः सह सम्बन्धात् इदं शरीरमस्यैवैकस्यात्मन इत्यत्र किंनियामकमित्यत्र आह शरीरोत्पत्तीति सूत्रम्। यथा प्रत्यात्मशरीरोत्पत्तौ तत्तदात्मनोऽदृष्टं निमित्तं भवति तथैव आत्मविशेषस्य शरीरविशेषेण संयोगस्य सम्बन्धस्याप्यदृष्टमेव कारणमिति सूत्रार्थः।

कश्चित्तु सूत्रमिदमेवं व्याचष्टे—ननु प्रत्यात्मशरीरोत्पत्तौ भवत्वदृष्टं निमित्तं मातापित्रोस्तु संयोगे किं निमित्तमित्यत आह शरीरोत्पत्तीति सूत्रम्। यथा शरीरोत्पत्तावदृष्टं कारणं तथैव मातापित्रोः संयोगेऽप्यदृष्टमेव निमित्तमित्यर्थ इति।

४ पूर्वनिर्णीतसिद्धान्तमनूद्य परोक्तविसदृशमनुवदति—एवञ्च प्रत्यात्मेति। सर्वे आत्मानो विभवः—अत सर्वेषामात्मनां शरीरारम्भकपृथिव्यादिभिः समानः सम्बन्धः प्रत्येकमात्मनः प्रत्येकशरीरे प्रतिनियमे कारणाभावः।

यतस्य निमित्तस्याभावान्निरतिशयैरात्मभि सम्बन्धात्सर्वात्मना च समानै पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वात्मना सुखदु खसंवित्त्यायतन समान प्राप्तम्। यत्तु प्रत्यात्म व्यवतिष्ठते तत्र शरीरोत्पत्तिनिमित्त कर्मव्यवस्थाहेतुरिति विज्ञायते। परिपच्यमानो हि प्रत्यात्म नियत कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतन शरीरमुत्पाद्य व्यवस्थापयति। तदेव 'शरीरोत्पत्तिनिमित्तवत्संयोगनिमित्त कर्म' इति विज्ञायते। प्रत्यात्मव्यवस्थान तु शरीरस्यात्मना सयोग प्रचक्ष्महे इति ॥ ६६ ॥

## एतेनानियम' प्रत्युक्तः ॥ ६७ ॥

योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते अय शरीरोत्पत्तिनिमित्तवत् सयोगोत्पत्तिनिमित्त कर्मेत्यनेन प्रत्युक्त । कस्तावदय नियम ? यथै कस्यात्मन शरीर तथा सर्वेषामिति नियम । अन्यस्यान्यथान्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिविशेष इति। दृष्टा च जन्मव्यावृत्ति उच्चाभिजनो

१ आत्मगतनियमहेत्वभावमनूद्य पृथिव्यादिगतोऽपि नियमहेतुर्नास्तीत्याह–पृथिव्यादिगतस्य चेति। एवञ्च नियमहेतोरभावात् सर्वेषामात्मनामुपभोगायतनमेकमेव शरीरमिति प्राप्तम्।

२ एव परोक्तावित दोषमनूद्य तत्परिहारमुपन्यस्यति–यत्तु प्रत्यात्ममिति। प्रत्येकमात्मना सम्बद्धमेकमेव शरीरमिति प्रत्यात्मवदनीदमेतत्। तत्र विभोरप्यात्मन एकशरीरमात्रनियामको हेतुस्तस्यादृष्टमेव।

३ यच्च सूत्रे सयोगपदेनोक्त तदेतदेव यत्प्रत्यात्ममेकस्य शरीरस्य नियमनमित्याह–प्रत्यात्मव्यवस्थानमिति।

४ तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता। अत्र साङ्ख्या मन्यन्ते—"न कर्मनिबन्धन शरीरसर्गोऽपि तु प्रकृत्यादिनिबन्धन। प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षा सत्त्वरजस्तमोरूपतया प्रवृत्तिशीला स्व स्व विकारमारभन्ते—प्रतिबन्धापगममात्र तु धर्माधर्मावपेक्षन्ते" इति। तान्प्रत्याह—एतेनानियम इति सूत्रम्। तस्यार्थ —'एतेन' कर्मसापेक्षैरेव भूतै शरीरनिर्वृत्तिरिति व्यवस्थापनेन 'अनियम' प्रत्यात्म शरीरभेद कस्यचिदात्मन किञ्चिदेव शरीर कस्यचित् किञ्चिदन्यदेवेत्येवरूप — प्रत्युक्त' व्यतिरेकमुखेनेति शेष —साङ्ख्यमतेऽनुपपद्यमानतया प्रदर्शित इति भाव ।

एतदेव सूत्रव्याख्यानभाष्यवार्तिकतात्पर्यवृत्त्यादिसम्मतम्। केचित्त्वन्यथैव व्याख्यानमभिमन्यन्ते। तथथा— एतेन' शरीरोत्पत्तेरदृष्टनिष्पाद्यत्वेन 'अनियम' सर्वेषामात्मनां सर्वाण्येव शरीराणीत्येवरूप परङ्कावित 'प्रत्युक्त' परिहृत इत्यर्थ ।

एव चे[1]न्मन्यसे ? पुनस्तत्प्रसङ्गाऽपवर्गे। पुन[2] शरीरोत्पत्ति प्रसज्यत इति। या[3] चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता—या चापवर्गे शरीर निवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता—नैतयोरदर्शनयो कश्चिद्विशेष इत्यदर्शनस्या निवृत्तेरपवर्गे पुन शरीरोत्पत्तिप्रसङ्ग इति।

"चरितार्थता[4] विशेष इति चेत्"—न[5], करणाकरणयोरारम्भदर्शनात्। "चरि[6]तार्थानि भूतानि दर्शना[7]वसानान्न शरीरान्तरमारभन्ते इत्यय विशेष" एव चेदुच्यते ? न[8], करणाकरणयोरारम्भदर्शनात्। चरि[9]तार्थाना भूताना विषयोपलब्धिकरणात्पुन पुन शरीरारम्भो दृश्यते, प्रकृतिपुरुषयोर्नानात्व दर्शनस्याकरणान्निरर्थक शरीरारम्भ पुन पुनर्दृश्यते। तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्तिर्युक्ता। युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्ति । कर्मविपाकसवेदन दर्शनमिति।

"[10]तददृष्टकारितमिति चेत्" कस्यचिद्दर्शनम्—"अ[11]दृष्ट नाम परमाणूना

---

१ एव परोक्षावितदर्शनमनूद्य तद्दूषणपर 'पुनस्तत्प्रसङ्गाऽपवर्गे' इति सूत्रम् व्याख्यातुमुपक्रमते—एव चेन्मन्यस इति।

२ तदेव विवृणोति पुन शरीरोत्पत्तिरिति।

३ तद्विशदयति—या चेति।

४ शरीरोत्पत्ते प्राक् यददर्शन यच्चापवर्गानन्तरमदर्शन तदेतयोरदर्शनयोर्महान् भेदोऽस्तीति नापवर्गानन्तर शरीरोत्पत्तिप्रसङ्ग इति मनसि कृत्वा परस्तयोरदर्शनयो भेदमाविष्करोति चरितार्थतेति।

५ परिहरति न करणाकरणयोरारम्भदर्शनादिति। केचिदतद्वाक्य सूत्रत्वेनाभि यन्ति। प्रमाणाभावात् तदुपेक्षितम्।

६ परोक्तस्याशय विवृणोति—चरितार्थानीति।

७ दर्शनावसानादिति। 'दर्शनस्य' शब्दाद्युपभोगस्य व्यक्ताव्यक्तज्ञविज्ञानस्य चेत्युभयरूपस्य 'अवसानात्' सम्पत्त हेतोरित्यर्थ । शिष्ट व्याख्यातम्।

८ स्वोक्तपरिहारस्याशय व्याचक्षाणस्तमनुवदति—न करणेति।

९ तस्याशय वर्णयति—चरितार्थानामिति। 'विषयोपलब्धिकरणात् चरितार्था नामपि भूताना पुन पुन शरीरारम्भो दृश्यते' इति सम्बन्ध ।

१० आर्हतमतनिरसनपर सूत्रस्य व्याख्यानान्तरमुपन्यस्यन् परोक्तविकल्पमुपस्थापयति तददृष्टकारितमिति चेदिति।

११ परमतमनुवदति—अदृष्ट नामेति। आर्हतास्तावददृष्ट परमाणुगुण वर्णयन्ति। पार्थिवादीनामणूना मनसश्च गुणोऽदृष्टम्। तत्र पार्थिवाद्या अणव स्वादृष्टप्रयुक्ता

गुणविशेषः क्रियाहेतुः। तेन प्रेरिताः परमाणवः सम्मूर्च्छिताः शरीरमुत्पादयन्तीति–तन्मनः समाविशति स्वगुणेनादृष्टेन प्रेरितम्। समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति"।

एतस्मिन्[1] वै दर्शने गुणानुच्छेदात्पुनस्तत्प्रसङ्गोऽपवर्गे। अपवर्गे[2] शरीरोत्पत्तिः, परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वादिति ॥ ६८ ॥

## मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ ६९ ॥

मनोगुणेनादृष्टेन समावेशिते मनसि संयोगाद्युच्छेदो न स्यात्। तत्र किंकृत शरीरादपसर्पणं मनस इति। कर्माशयक्षये तु कर्माशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति।

"अदृष्टादेवापसर्पणमिति" चेत्—"योऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति"। न, एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः। एवं च सति एकमदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्त–नैतदुपपद्यते ॥ ६९ ॥

## नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७० ॥

विपाकसंवेदनात् कर्माशयक्षये शरीरपातः 'प्रायणम्', कर्माशयान्तराच्च पुनर्जन्म। भूतमात्रात्तु कर्मनिरपेक्षाच्छरीरोत्पत्तौ कस्य क्षयाच्छरीरपातः प्रायणमिति–प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः। यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७० ॥

'पुनस्तत्प्रसङ्गोऽपवर्गे' इत्येतत्समाधित्सुराह—

---

शरीरमारभन्ते। मनश्च स्वगुणप्रयुक्त शरीरमाविशति। तच्च स्वकार्यादृष्टम् पुद्गलस्य (जीवस्य) सुखदुःखोपभोगं साधयति। न तु पुद्गलस्य धर्मोऽदृष्टमिति तेषाम्मतम्।

१ तद्दूषयति-एतस्मिन्निति। अत्रापि पुनस्तत्प्रसङ्गोऽपवर्गे। तत्र हेतु गुणानुच्छेदादिति।

२ उक्त प्रसङ्ग विशदयति-अपवर्गे इति। परमाणुगुणस्यादृष्टस्य नित्यत्वादात्मन अपवर्गानन्तरमपि तस्य सत्त्वात् पुनः शरीरोत्पत्तिर्दुर्वारेत्याशयः।

३ ननु च संयोगानुच्छेद पूर्वसूत्र उद्भावित साऽयमस्तमप्रसिद्धः। यत् सदकारण च तद्व नित्य दृष्ट–शरीर च सत् सकरण चात कथ तत् नित्यं भवेदित्यत आह–नित्यत्वेति सूत्रम्। मनस शरीरादपसर्पणासम्भवे जीवस्य मरणानुपपत्तेर्भवत्येव नित्यत्वप्रसङ्ग शरीरस्येत्यर्थः।

४ 'पुनस्तत्प्रसङ्गोऽपवर्गे' इति यत्सिद्धान्तिनोद्भावितन्तस्य परेण कृत समाधान प्रस्तावयति-पुनस्तदिति।

"अणुश्यामतानित्यत्ववदेतत्स्यात्" ॥ ७१ ॥

"यथा अणो श्यामता नित्या अग्निसंयोगेन प्रतिबिद्धा न पुनरुत्पद्यते, एवमदृष्टकारित शरीरमपवर्गे पुनर्नोत्पद्यत इति" ॥ ७१ ॥

नाकृताभ्यागमप्रसङ्गात् ॥ ७२ ॥

नायमस्ति दृष्टान्त । कस्मात्? अकृताभ्यागमप्रसङ्गात् । अकृतं प्रमाणतोऽनुपपन्न—तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसाय । एतच्छ्रद्दधानेन प्रमाणतोऽनुपपन्न मन्तव्यम् । तस्मान्नाय दृष्टान्त । न प्रत्यक्ष न चानुमान किञ्चिदुच्यत इति । तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति ।

अथ वा 'नाकृताभ्यागमप्रसङ्गात्'। अणुश्यामतादृष्टान्तेनाकर्मनिमित्ता शरीरोत्पत्ति समादधानस्याकृताभ्यागमप्रसङ्ग । अकृते सुखदु खहेतौ कर्मणि पुरुषस्य सुख दु खमभ्यागच्छतीति प्रसज्येत । ओमिति ब्रुवत प्रत्यक्षानुमानागमविरोध ।

प्रत्यक्षविरोधस्तावत्–भिन्नमिद सुखदु ख प्रत्यात्मवेदनीयत्वात् प्रत्यक्ष सर्वशरीरिणाम् । को भेद? तीव्रं मन्द, चिरमाशु, नानाप्रकारमेकप्रकार मित्येवमादिविशेष । न चास्ति प्रत्यात्मनियत सुखदु खहेतुविशेष । न चासति हेतुविशेषे फलविशेषो दृश्यते । कर्मनिमित्ते तु सुखदु खयोगे कर्मणा तीव्रमन्दतोपपत्ते कर्मसञ्चयाना चोत्कर्षापकर्षभावान्नानाविधैकविधभावाच्च

१ परकृत समाधानमाह–अणुश्यामतेति सूत्रम् । यथाऽणूना नित्यत्वेऽपि तेषा श्यामतादिगुणा अनित्या एव तथैव तेषां गुणाऽदृष्टमप्यनित्यमेवेत्यर्थ ।

२ परकृतसमाधानमपाकरोति नाकृताभ्यागमेति सूत्रम् । 'अकृतम्' प्रमाणेन अविषयीकृतम् प्रत्युत प्रत्यक्षागमविरुद्धमिति यावत्–तस्य 'अभ्यागम' अभ्युपगम –तत्प्रसङ्गादित्यर्थ ।

३ सूत्रस्य यथाश्रुति व्याख्यानान्तरमाह अथवेति । अकृतस्य कर्मणः 'अभ्यागम' फलोपभोग तत्प्रसङ्गादित्यर्थं । यदा खलु परमाणुगुण एव नित्य शरीराद्यारम्भक तदासौ नित्यत्वान्न केनचित् क्रियते। तस्याकृतस्यैव फल पुरुषैरुपभुज्यते । ततश्चायमास्तिकाना विहितनिषिद्धप्रवृत्तिनिवृत्तिनिचयोऽनर्थक शास्त्रप्रणयन चानर्थक भवेदिति भाव ।

४ सूत्राक्षर व्याचष्ट–अणुश्यामतेति ।

५ ननु भवत्वेवमकृताभ्यागम का नो हानिरित्यत आह–ओमिति ब्रुवत इति । एतादृशोऽकृताभ्यागम प्रत्यक्षादिसकलप्रमाणविरुद्ध इत्यर्थं ।

कर्मणा सुखदुःखभेदोपपत्तिः । सोऽयं हेतुभेदाभावाद् दृष्टः सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः ।

तथाऽनुमानविरोधः—दृष्टं हि पुरुषगुणव्यवस्थानात्सुखदुःखव्यवस्थानम् । यः खलु चेतनावान् साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन् साधनावाप्तये प्रयतते स सुखेन युज्यते, न विपरीतः । यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते स च दुःखेन त्यज्यते, न विपरीतः । अस्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानम् । तेनापि चेतनगुणान्तरव्यवस्थाकृतेन भवितव्यमित्यनुमानम् । तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यत इति । तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्चाव्यवस्थितम् । बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्चेति ।

अथागमविरोधः[1]—बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयमुपदेशफलं च शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः, परिवर्जनलक्षणा निवृत्तिः । तच्चोभयमेतस्यां दृष्टौ—नास्ति कर्म सुचरितं दुश्चरितं वाऽकर्मनिमित्तः पुरुषाणां सुखदुःखयोगः—इति विरुध्यते ।

सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोग इति ॥ ७२ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥२॥

समाप्तश्चायं तृतीयोऽध्यायः ।

---

१ परपक्षे आगमविरोधं दर्शयति आगमविरोध इति । 'एतस्यां दृष्टौ' परकीये दर्शने । यदि न कर्मनिमित्तं शरीरमपि सुखदुःखादि वा तदा शास्त्रविहितकर्तव्यानुष्ठानेन धर्मस्ततः सुखम् शास्त्रनिषिद्धाचरणेनाधर्मस्ततो दुःखमित्यादिव्यवस्था न स्यात् । अयं च व्यवस्थाभावः सकलागमविरुद्ध एव ।

# अथ चतुर्थाध्यायस्याद्यमाह्निकम् ।

## ( १ ) प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ।

मनसोऽनन्तरा प्रवृत्तिः परीक्षितव्या । तत्र खलु यावद्धर्माधर्माश्रयशरीरादि परीक्षितं सर्वा सा प्रवृत्तेः परीक्षेत्याह—

प्रवृत्तिर्यथोक्ता ॥ १ ॥

तथा परीक्षितेति ॥ १ ॥

प्रवर्तयन्त्यस्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

तथा दोषाः ॥ २ ॥

तथा परीक्षिता इति । बुद्धिसमानाश्रयत्वादात्मगुणाः प्रवृत्तिहेतुत्वात् पुन-

---

१ चतुर्थेऽध्याये आत्मशरीरेन्द्रियार्थबुद्धिमनोरूपकारणरूपप्रमेयषट्कक्रमप्राप्तं परीक्ष्यते । स एवाध्यायार्थः । तत्र प्रथमाह्निके प्रवृत्त्यादयो विधर्मिणो विषयाश्चिन्तनीयाः । द्वितीये त्ववसरतः सर्वप्रमेयाणां विषयी धर्मस्तत्त्वबोधो निरूपणीयः ।

२ अध्यायक्रमं निरूपयन्नाह-मनसोऽनन्तरेति । प्रथमाध्यायगतोद्देशसूत्रे नवमे मनोनन्तरं प्रवृत्तेरुद्दिष्टत्वात् मनःपरीक्षानन्तरम्प्रवृत्तेरेव परीक्षावसर इत्यर्थः ।

३ पूर्वकृतपरीक्षानिर्देशनार्थं सूत्रमवतारयन्नाह—तत्र खल्विति । सकलायाः प्रवृत्तेर्धर्माधर्मःपातित्वात्तत्परीक्षणेन साऽपि परीक्षिता वेदितव्येत्यर्थः ।

४ उक्तातिदेशपरं सूत्रम्—प्रवृत्तिर्यथोक्तेति ।

५ सूत्रांशं व्याचक्षाणस्तस्य शेषं पूरयति-तथेति । एवं च 'प्रवृत्तिः यथा उक्ता तथा परीक्षिता' इति सूत्रस्वरूपं पर्यवसितम् । यथा लक्षिता तथा परीक्षिता । अस्या लक्षणेनैव परीक्षाऽपि सम्पन्नेत्यर्थः ।

एतत्सूत्रस्थल वृत्तिकृतोऽनभिमतम् । तथाचोक्तं तैः—अत्र तथेति शेषं पूरयन्ति । तदयुक्तम् । तथा सत्यग्रेव यथाशब्दस्याकांक्षानिवृत्तेः इमसूत्रस्थतथा-शब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेः । तस्मादग्रिमसूत्रस्थतथा-शब्देनान्वयो युक्तः । प्रवृत्तिर्यथोक्तलक्षणवती तथा दोषा अप्युक्तलक्षणा इत्यग्रिम-सूत्रस्यार्थोऽपि इति ।

६ दोषाणां परीक्षा कथं कृतेति सङ्गमयन् तद्विषयं यत्किञ्चित् प्रागुक्तं तात्पर्येण स्मारयति प्रवृत्तिहेतुत्वादिति । दोषाणां प्रवर्तनालक्षणत्वात् तेषां प्रवृत्तिहेतुत्वं, तस्माच्च पुनर्जन्मकारणत्वमपि तेऽत एव समारभितोऽपि । समारम्भानादिमत्त्वकारण-

भेवप्रतिसन्धानसामर्थ्याच्च संसारहेतव, ससारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते। मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात्, तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति प्रादुर्भावतिरोधानधर्मकाः। इत्येवमाद्युक्तं दोषाणामिति ॥ २ ॥

( २ ) दोषत्रैराश्यप्रकरणम्।

'प्रवर्त्तनालक्षणा दोषा' इत्युक्तम्। तथा चेमे मानेर्ष्यासूयाविचिकित्सामत्सरादय', ते कस्मान्नोपसङ्ख्यायन्ते ? इत्यत आह—

## तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां[3] दोषाणा त्रयो राशयस्त्रयः पक्षा.। रागपक्षः—कामो मत्सर स्पृहा

---

भूता दोषा अप्यनादिमन्तानरूपेण वर्तन्ते। तथा च तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिस्तन्निवृत्तौ रागद्वेषादिदोषनिवारणम्, ततश्चापवर्ग.। एवं च सन्ताननिवृत्तित्वात्तेषामुत्पत्तिनाशवत्त्वमपि। एवमादिदोषाना प्रसङ्गेनोक्तमेव प्राक्सूत्रेषु ( १।१।२, १।१।१८, ३।१।२५ )। इदमेव च तेषां परीक्षात्वेन मन्तव्यमित्याशय।

१ अत्र प्रकरणविभागविषये केषाञ्चिद्विप्रतिपत्ति.। आद्यसूत्रात्मकमेकम्प्रकरणम्प्रवृत्तिपरीक्षात्मकम्—द्वितीय तु सूत्रमारभ्य नवमसूत्रपर्यन्तम्परमेकमेव प्रकरण दोषपरीक्षापरमित्येव विभाग. समीचीनः प्रतिभातीति तेषाम्मतम्। तत्समाधान यथा—उक्तेन विभागेनाद्य प्रकरणमेकसूत्रात्मकमेव स्यात्। न च तत्सम्यक्, अनेकसूत्रसमूहस्यैव प्रकरणत्वदर्शनात्। अतः प्राचीन एव विभाग सम्यक्—येन आद्यसूत्रद्वयात्मकमेक प्रकरण—प्रवृत्तिदोषोभयसामान्यपरीक्षापर, तृतीयसूत्रमारभ्य नवमसूत्रपर्यन्तमपर—दोषविशेषपरीक्षापरमिति वर्द्धमानोपाध्यायाः।

२ तदेव बहु परीक्षित दोषाणाम्। यत्तु किञ्चित्तेषामपरीक्षित तत्परीक्षितु प्रश्नेनारभत प्रवर्त्तनेति। दोषाणा प्रवर्त्तनालक्षणत्वमुक्तम्प्राक्। मानेर्ष्यादयोऽपि प्रवर्त्तनालक्षणा। तत एतेऽपि दोषपरिगणने कथन्नोच्यन्त इति प्रश्नार्थ।

३ सूत्र व्याचक्षाणो रागादिषु सर्वेषा दोषाणामन्तर्भाव प्रदर्शयति—तेषामिति। काममत्सरस्पृहातृष्णालोभाना रागस्वरूपत्वाद् राग एवान्तर्भाव। एव क्रोधेर्ष्यासूयाद्रोहामर्षाणा द्वेषस्वरूपत्वाद् द्वेष एवान्तर्भाव। तथा च मिथ्याज्ञानविचिकित्सामानप्रमादानाम्मोहस्वरूपत्वान्मोह एवान्तर्भाव। एवमत्र त्रिष्वेव दोषेषु सर्वेषा दोषाणामन्तर्भाव। तत्र स्त्रीगतोऽभिलाष 'काम', अक्षीयमाणवस्त्वपरित्यागेच्छा 'मत्सर', अस्वत्वस्वादानेच्छा 'स्पृहा', पुनर्भवप्रतिसन्धानहेतुभूता 'तृष्णा', प्रमाणविरुद्धपरद्रव्यापहारेच्छा 'लोभ'। शरीरेन्द्रियाधिष्ठानवैकृत्यहेतु 'क्रोध', साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा 'ईर्ष्या', परगुणाक्षमताऽसूया', परापकारेच्छा 'द्रोह', कृतापकाराक्षमताऽमर्ष'। विचिकित्सा 'संशय', विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो 'मान.', कर्त्तव्याकरण 'प्रमाद'।

तृष्णा लोभ इति। द्वेषपक्ष –क्रोध ईर्ष्याऽसूया द्रोहोऽमर्ष इति। मोहपक्षो–मिथ्याज्ञान विचिकित्सा मान प्रमाद इति। त्रैराश्यान्नोपसङ्ख्यायन्त इति।

'लक्षणस्य तदभेदात्रित्वमनुपपन्नम्"। नानुपपन्नम्–'रागद्वेषमोहार्थान्तरभावात्'। आसक्तिलक्षणो राग, अमर्षलक्षणो द्वेष, मिथ्याप्रतिपत्तिलक्षणो मोह इत्येतत्प्रत्यात्मवेदनीय सर्वशरीरिणाम्। विजानात्ययं शरीरी रागमुत्पन्नम्–अस्ति मेऽध्यात्म रागधर्म इति। विरागं च विजानाति–नास्ति मेऽध्यात्म रागधर्म इति। एवमितरयोरपीति। मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्य मनुपतिता इति नोपसङ्ख्यायन्ते ॥ ३ ॥

"नैकप्रत्यनीकभावात्" ॥ ४ ॥

"नार्थान्तर रागादय। कस्मात्? एकप्रत्यनीकभावात्। तत्त्वज्ञानं सम्यङ्मतिरार्यप्रज्ञा सम्बोध इत्येकमिद प्रत्यनीक त्रयाणामिति" ॥ ४ ॥

व्यभिचारादहेतु. ॥ ५ ॥

एकप्रत्यनीका पृथिव्या श्यामादयोऽग्निसंयोगेनैकेन, एकयोनयश्च पाकजा इति ॥ ५ ॥

सति चार्थान्तरभावे—

तेषां मोहः पापीयान्नामूढस्येतरोत्पत्ते ॥ ६ ॥

मोह पाप पापतरो वा द्वावभिप्रेत्योक्तम्। कस्मात्? नामूढस्येतरोत्पत्ते। अमूढस्य रागद्वेषौ नोत्पद्येते। मूढस्य तु यथासङ्कल्पमुत्पत्ति। विषयेषु

---

१ उपसहरति–त्रैराश्यादिति। यस्मात् त्रिष्वेव वर्गेषु सर्वे दोषा अन्तर्गतास्तस्मात् तेषां परिगणन न क्रियते इत्यर्थ।

२ सम्यक्बोध सम्बोध। यस्मादेकमेव तत्त्वज्ञान रागादीनां त्रयाणां 'विरोधि' नाशकम् तस्मात्तेषामप्येकत्वमेव युक्त न पृथग्विदश इति भाव।

३ केषाञ्चिन्मते 'सति चार्थान्तरभावे' इति पूर्वान्वय्येव। तथा चाय सम्बन्ध —'अर्थान्तरभावे सत्यपि ( चाऽप्यर्थ ) श्यामादय अग्निसंयोगेन एकप्रत्यनीका इति यद्यप्येते गुणा भिन्ना एव तथाप्येकप्रत्यनीका इत्यर्थ।

वार्त्तिककृतस्तात्पर्यकृतस्तु मत 'सति चार्थान्तरभावे' इति वाक्यस्याग्रिम सूत्रेणैवान्वय। 'अर्थान्तरभावेऽपि मोहस्तेषां पापीयान्' इति सम्बन्ध।

४ दोषोच्छेद वर्णयितुकाम कारणोच्छेद एव कार्योच्छेद इति मनसि कृत्वा मोहस्यैव सकलदोषमूलत्व प्रदर्शयितु त्रिष्वपि रागद्वेषमोहेषु तारतम्य वर्णयति तेषामिति सूत्रम्। 'तेषाम्' रागद्वेषमोहानाम्मध्ये 'मोह पापीयान्—' अनर्थमूल 'न अमूढस्य इतरोत्पत्ते'। 'अमूढस्य' मोहरहितस्य 'इतरयो' रागद्वेषयो 'उत्पत्ति' न भवति यस्मात् तस्मात् मोह एव सर्वप्रधानमिति भाव।

रञ्जनीया सङ्कल्पा रागहेतव, कोपनीया सङ्कल्पा द्वेषहेतव । उभये च सङ्कल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये । ताविमौ मोहयोनी रागद्वेषाविति । तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्ति ।

एवं च कृत्वा तत्त्वज्ञानात्—"दु खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग " इति व्याख्यातमिति ॥ ६ ॥

" प्राप्तस्तर्हि—

**निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ' ॥ ७ ॥**

"अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति" ॥७॥

**न, दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥**

' प्रवर्त्तनालक्षणा दोषा ' इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति ॥८॥

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥**

द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

( ३ ) प्रेत्यभावपरीक्षाप्रकरणम् ।

दोषानन्तरं प्रेत्यभाव । ' तस्यासिद्धि —आत्मनो नित्यत्वात् । न

---

१ प्राप्त-प्राप्तस्तर्हीति भाष्यवाक्यमारभ्य दोषेभ्य इति सूत्रान्त्यपदपर्यन्तम् । तर्हि दोषेभ्योऽर्थान्तरभाव प्राप्त इति सम्बन्ध ।

२ क्रमप्राप्त प्रेत्यभाव परीक्षिष्यमाणस्तत्र क्रम प्रदर्शयति—दोषानन्तरमिति । प्रमेयोद्देशे दोषानन्तर प्रेत्यभाव पठितस्तेन परीक्षायामपि दोषानन्तर स एव परीक्ष्यत इत्यर्थ । प्रेत्यभाव इत्यत्र त्यप् [illegible] ल्यबादेश [illegible] द्रष्टव्य । तथा च पुन प्रादुर्भावमिति [illegible] समानकर्तृकत्व [illegible] उपपन्नम् । एतद्विषय [illegible] प्रेत्यभाव [illegible] इति । तत्र कश्चिदाक्षेप — पुनरुत्पत्ति प्रेत्यभाव इत्यत्र सूत्र (१।१।१९) प्रेत्यभाव आत्मन [illegible] सिद्धत्वादुक्तलक्षणस्य [illegible] नास्तीति । तत्र च परिहार —प्रेत्यभावस्य [illegible] [illegible] च नित्य आत्मन्य[illegible]पपद्यत एव [illegible] [illegible] प्रेत्यभावपरीक्षावसर भवति ।

३ प्रेत्यभावस्य [illegible] सिद्धान्तिनि [illegible] [illegible] [illegible] तस्यासिद्धिरिति । प्रेत्यभावस्य [illegible] [illegible] ।

४ तत्र हेतु —आत्मनो [illegible] ।

खलु नित्यं किञ्चिज्जायते म्रियते वेति जन्ममरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः । उभयं च प्रेत्यभाव" इति ।

तत्राय[2] सिद्धानुवाद —

**आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥**

नित्योऽयमात्मा प्रैति-पूर्वशरीरं जहाति-म्रियत इति प्रेत्य च पूर्वं शरीरं हित्वा भवति जायते शरीरान्तरमुपादत्त इति । तच्चैतदुभयं 'पुनरुत्पत्तिः प्रेत्यभाव' इत्यत्रोक्तं-पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभाव इति । तच्चैतन्नित्यत्वे सम्भवतीति ।

यस्य[3] तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः तस्य कृतहानमकृताभ्यागमश्च दोषः । उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थका इति ॥ १० ॥

"कथमुत्पत्तिरिति" चेत्-

**व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥**

---

१ तदेव स्पष्टयति—न खल्विति । उत्पत्तिनाशरूप एव प्रेत्यभावः, स च सिद्धान्ते नित्यस्यानुत्पत्तिनाशशीलस्यात्मनो नोपपद्यते । वैनाशिकानान्तु नित्यमात्मानमनभ्युपगच्छतां सत्त्वमात्रस्योत्पादनिरोधाभ्यां युक्त एष प्रेत्यभाव इत्याशयः ।

२ उक्ताक्षेपपरिहाररूपेण सिद्धान्तमुपक्रमते—तत्रायमिति । सिद्धस्य सिद्धान्तस्य अनुवादो वर्णनम् ।

३ विपक्षे बाधकमाह—यस्य त्विति । वैनाशिकमते आत्मनो मरणे तस्य नितान्तमेव सत्त्वस्योच्छेदः जन्मनि च पुनः सत्त्वस्योत्पत्तिरित्येवरूप एव प्रेत्यभावः एवं च यस्य मरणं जातं तस्यात्यन्तं नष्टत्वात् यस्य च जन्म तस्य प्रथममेव जातत्वादुभयोरैकान्तिको भेद एव—तथा चोत्तरशरीरे ये उपभोगा आत्मन आपतन्ति न ते सर्वे तस्य स्वप्राक्तनकर्मकृता, यानि च तस्य पूर्वशरीरे स्वकृतानि कर्माणि तज्जन्याश्चोपभोगास्तस्य नैवापतन्तीति महान् दोषः । एवं सत्यभ्युदयनिःश्रेयसार्थं प्रवृत्त्यभावः प्रसज्यत इत्यर्थः ।

४ पुनर्विपक्षे बाधकमाह—उच्छेदेति । यद्यात्मोच्छेदविनाशशीलस्तर्हि यस्यात्मन उपदेशः कृतस्तस्योत्तरक्षणे प्रणष्टत्वादुपदेशानुष्ठानासम्भवः सकलोपदेशानर्थक्यप्रसङ्ग इत्यर्थः । नित्यात्मपक्षे तु स्वदेहेन्द्रियबुद्धिभिः वेदनासम्बन्धोत्पादविनाशी नित्यस्यात्मनो जन्मप्रायणे—तथा चोपपन्नः प्रेत्यभाव इति सिद्धान्तः ।

५ अत्र च प्रावादुकानां नानाविधा विप्रतिपत्तयः सन्ति । तत्राभिमतं पक्षमुद्भावयितुं सूत्रमवतारयति—व्यक्तादिति सूत्रम् । 'व्यक्त' नामोपलब्धिलक्षणप्राप्तं रूपादिमद्-

"केन प्रकारेण किन्धर्मकात् कारणाद्व्यक्तं शरीराद्युत्पद्यत इति"

व्यक्ताद् भूतसमाख्यातात्पृथिव्यादितः परमसूक्ष्मान्नित्याद्व्यक्तं शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते। व्यक्तं च खल्विन्द्रियग्राह्यम्। तत्सामान्यात्कारणमपि व्यक्तम्।

"किं सामान्यम्"।

रूपादिगुणयोगः। रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते।

प्रत्यक्षप्रामाण्यात्। दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः, तेन चादृष्टस्यानुमानमिति। रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयत इति ॥ ११ ॥

"न, घटाद् घटानिष्पत्तेः" ॥ १२ ॥

"इदमपि प्रत्यक्षं—न खलु व्यक्ताद् घटाद्व्यक्तो घट उत्पद्यमानो दृश्यते—इति व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति" ॥ १२ ॥

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

न ब्रूमः सर्वं सर्वस्य कारणमिति, किन्तु यदुत्पद्यते व्यक्तं द्रव्यं तत्तथाभूतादेवोत्पद्यत इति। व्यक्तं च तन्मृद्द्रव्यं कपालसञ्ज्ञकं यतो घट उत्पद्यते। न चैतन्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति। तदेतत्तत्त्वम् ॥ १३ ॥

(४) शून्यतोपादानप्रकरणम्।

अत ऊर्ध्वं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते—

---

द्रव्यम्, तस्मात्तस्मिन्व्यक्तात् परमाणोः भवतीत्यर्थः। अग्राह्यत्वेऽपि परमाणू रूपादिसामान्यात् 'व्यक्तम्' उच्यते। तदेव पृथिव्यादि कारणमिति।

१ सिद्धान्तदीपमबुद्ध्वा परः शङ्कते—न घटादिति सूत्रम्।

२ व्यक्तादेव व्यक्तमुत्पद्यत इति मतमुपादर्शयित्वा पृथिव्याद्युत्पत्तिविषये यानि मतान्तराणि दार्शनिकैरभ्युपगतानि तन्निराकरणपरं प्रकरणाष्टकम्। तत्रादौ शून्यतोपादानप्रकरणम्।

३ ग्रन्थमवतारयति—अत ऊर्ध्वमिति। 'प्रावादुकानाम्' दार्शनिकानाम्। 'दृष्टयः' मतानि 'प्रदर्श्यन्ते'—कानिचित्प्रतिषिध्यन्ते—यथा शून्यतोपादानदर्शनं कानिचिदभ्यनुज्ञायन्ते—यथेश्वरकारणतावादः। ईश्वरकारणतावादमभिप्रेत्यैव यत्तो

"अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" ॥ १४ ॥

"असतः सदुत्पद्यत इत्ययं पक्षः। कस्मात्? उपमृद्य प्रादुर्भावात्। उपमृद्य बीजमङ्कुर उत्पद्यते नानुपमृद्य। न चेद्बीजोपमर्दोऽङ्कुरकारणम्-अनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति" ॥ १४ ॥

अत्राभिधीयते—

व्याघातादप्रयोगः ॥ १५ ॥

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो-व्याघातात्। यदुपमृद्नाति न तदुपमृद्य प्रादुर्भवितुमर्हति-विद्यमानत्वात्। यच्च प्रादुर्भवति न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति ॥ १५ ॥

"नातीतानागतयोः कारकशब्दप्रयोगात्" ॥ १६ ॥

"अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते। पुत्रो जनि

---

वार्त्तिककृतः। अत्र तु यदीश्वरकारणताशङ्कनमुपन्यस्तमत्र तद्वदास्यभिमते श्वरस्योपादानकारणत्वमेव समर्थयतेऽतस्तदपि सिद्धान्तिनः प्रतिषेध्यकोटावेवान्तः पततीति नावसरो वार्त्तिककृदभिमतविवेकस्येत्यादि तात्पर्यादवगम्यते। विशदं निरूपयिष्यत एतदग्रिमे ईश्वरोपादानताप्रकरणे।

१ तत्र प्रथममसत एव सदुत्पद्यत इति शून्यतोपादानतादर्शनमुपन्यस्यति-अभावादिति सूत्रम्। एके प्राहुः 'अभावादेव भावानां कार्याणामुत्पत्तिः। कुतः? यतो नानुपमृद्य प्रादुर्भावः कस्य चिदपि भावस्य भवति-यथा बीजमुपमृद्यैवाङ्कुरो जायते इत्यर्थः'।

२ सूत्रं व्याचष्ट-असत इति। इदमत्राकूतम्-विश्वं हि शून्यताया एव जायते। एवं किल श्रूयते-असदेवेदमग्र आसीदिति। अत एवाद्यापि असत एव जन्म दृश्यते न सतः। तत्कस्य हेतोः? अभावस्तस्य कारणमिति। अनुपमृद्य प्रादुर्भावादिति' उपलक्षणमेतत्। असत उत्पादादित्यपि द्रष्टव्यम्। तस्मादसदुपादानं विश्वमिति सिद्धम्।

३ यच्च प्रादुर्भवति तत्प्रादुर्भावात् प्रागसदेव यच्चासदेव तत् कथमुपमर्दं करिष्यतीत्यर्थः।

४ सिद्धाभिसन्धिमविद्वान् पूर्वपक्षी दूषयति-नातीतेति सूत्रम्। यदुक्तं सिद्धान्तिना पूर्वस्मिन् सूत्रे तच्च यतो ह्यविद्यमानेऽप्यर्थे कारकशब्दः प्रयुज्यत इत्यर्थः।

५ सूत्रार्थं व्याचष्ट—अतीत इति। अविद्यमान इति यद्यपि सूत्रे नोक्तं तथाऽपि भाष्यकारेण योजितं वेदितव्यम्।

ष्यते–जनिष्यमाणं पुत्रमभिनन्दति–पुत्रस्य जनिष्यमाणस्य नाम करोति–अभूत्कुम्भो भिन्नं कुम्भमनुशोचति–भिन्नस्य कुम्भस्य कपालानि–अजाताः पुत्राः पितरं तापयन्तीति–बहुलं भाक्ताः प्रयोगाः दृश्यन्ते । का पुनरियं भक्तिः ? आनन्तर्यं भक्तिः । आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः–प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति " ॥ १६ ॥

**न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥**

न विनष्टाद्बीजादङ्कुर उत्पद्यत इति। तस्मान्नाभावाद्भावोत्पत्तिरिति ॥ १७ ॥

**क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥**

उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः । स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते । स च न प्रतिषिध्यत इति । व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावात्। बीजावयवाः कुतश्चिन्निमित्ता

१ ननु भाक्तप्रयोगे सर्वत्र सादृश्यादि किञ्चिन्मूलमपेक्ष्यते। प्रकृते किन्तन्मूलमिति पृच्छति का पुनरिति।

२ तत्रोत्तरम्–आनन्तर्यमिति । तदेव विशदयति–आनन्तर्यसामर्थ्यादिति । अङ्कुरमुपमृद्य प्रादुर्भवतीत्यस्यायमर्थः यत् प्रादुर्भविष्यन्नङ्कुरः बीजमुपमृद्नातीति–अत्र चाविद्यमानस्याप्यङ्कुरस्य कर्तृत्वं भाक्तमेव । तत्र च मूलं बीजनाशादनन्तरमेवाङ्कुर उत्पद्यत इत्यानन्तर्यमेवेति भावः ।

३ परोक्तं परिहरति–न विनष्टेभ्य इति सूत्रम्। यदुक्तमभावाद्भावोत्पत्तिरिति, तन्न। कुतः ? यतो विनष्टेभ्यो बीजेभ्यो नैवोत्पद्यतेऽङ्कुर इत्यर्थः ।

४ परोक्तौ यत्किञ्चिदभ्युपगममाह तदभ्युपगच्छन्नाह क्रमनिर्देशादिति सूत्रम्। 'अप्रतिषेध' तावन्मात्रस्य परोक्तस्येति शेषः ।

५ सूत्रार्थं व्याचष्टे–उपमर्देति ।

६ सूत्रस्थक्रमपदस्यार्थमाह पौर्वेति। निर्दिश्यत इति पठनीति शेषः ।

७ ननु यदयं क्रमो न प्रतिषिध्यते स एव च क्रमोऽस्माभिरभावाद्भावोत्पत्तिसाधकतयाऽभ्युपगतः । ततः किमिति साधनं स्वाकृत्य न सा यत्र स्वीकरणीयमत आह–व्याहतेति । बीजोपमर्दादङ्कुरोत्पत्तौ पौर्वापर्यक्रमः स न प्रतिषिध्यते किन्तु तस्य क्रमस्याभावाद्भावोत्पत्तिसाधकत्वं प्रतिषिध्यत एव । यतोऽत्र बीजस्यानुवृत्तिमवयवेषु केवलं तस्य क्रमवत्पूर्वव्यूहो नश्यति अपरश्च व्यूह उत्पद्यते । अस्मादेव च व्यूहान्तरादङ्कुरमुत्पन्नं । एवं च सत्येव बीजादङ्कुरोत्पत्तिनाम न दृश्यतेऽपि । अनन्यप्रयुक्तं ह्यानन्तर्यं कार्यकारणभावसाधनम् । इह त्वानन्तर्यं व्यूहान्तरप्रयुक्तं भवति न तदभावस्य कारणत्वं गमयितुमर्हतीति हृदयम्।

त्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते । व्यूहान्तरादङ्कुर उत्पद्यते । दृश्यन्ते खल्ववयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः । न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमित्युपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः । तस्मान्नाभावाद्भावोत्पत्तिरिति । न चान्यद्बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

## ( ५ ) ईश्वरोपादानताप्रकरणम् ।

अथापर[1] आह—

---

१ अत्र ईश्वरोपादानताप्रकरणे वा त्तिकतात्पर्ययोर्मतभेदो दृश्यते । जगत ईश्वरकर्तृकत्वसाधनपरमिदमिति वार्त्तिकम्–वेदान्त्यभिमतेश्वरोपादानकारणत्वनिराकरणपरमिति तात्पर्यम् । 'प्रावादुकाना दृष्टय प्रदर्श्यन्त' इति भाष्यावतरणिका विभाव्य तात्पर्यव्याख्यानमेव सम्यक् प्रतिभाति, न्यायदर्शनप्राणभूतस्येश्वरकर्तृकत्वस्य प्रावादुक दृष्ट्यभिधानासम्भवात् ।

किन्तु कुत्राप्यन्यत्र सूत्रकारेणेश्वरकर्तृकत्व जगतो नैवोपपादितमिति विभाव्यैव वार्त्तिककृत उक्तावतरणिकाभाष्यव्याख्यानावसर उक्तवन्त –'अत्र कानिचिद् दर्शनानि प्रतिषिध्यन्ते कानिचिदभ्युपगम्यन्ते' इति । अभ्युपगम्यते चेदिदमेवेश्वरकर्तृकत्वदर्शनं तन्मतेनेति विचारणीयम् । ईश्वरकर्तृकत्वस्य न्यायदर्शनप्राणभूतत्वाद्वार्त्तिककारीयमेव व्याख्यानमत्र प्रधानतयोपन्यस्यते । किन्तु तात्पर्यकृतो व्याख्यानमेव सूत्रभाष्याक्षरानुकूलमिति तदपि नोपेक्षणीयमिति तदपि लिख्यते । एव च ईश्वर कारणमिति सूत्रे (१९) सिद्धान्तस्यैवोपक्रम –तत्राक्षेप , न पुरुषकर्मेति सूत्रे (२०) । तत्परिहारस्तत्कारितत्वादिति सूत्रे ( २१ ) इति वार्त्तिकव्याख्यानम् ।

ईश्वर कारणमित्यत्र सूत्रे ( १९ ) वेदान्तिकृतेश्वरोपादानकारणत्वपूर्वपक्ष –न पुरुषकर्मेति सूत्रे ( २० ) पूर्वपक्षभूतवेदान्त्यभिमतोपादानकारणत्वानपेक्षनिमित्तकारणत्वनिरास –तत्कारितत्वादिति सूत्र ( २१ ) ईश्वरस्य निमित्तकारणत्वसिद्धान्तोपन्यास: इति तात्पर्यव्याख्यानमिति विवेचनीयम् ।

अत्र प्रसङ्गे ईश्वरस्य निमित्तकारणत्व प्राचीनतमन्यायाचार्याणामभिमत न वेत्येतदपि विचारमर्हति । तृतीयाध्यायद्वितीयाह्निकगत–( ६६ )–सूत्रवार्त्तिके सर्गादेरनभ्युपगमादित्युक्तम् तदपुनरत्रस्य (२१) सूत्रवार्त्तिके । एव सर्गादेरनभ्युपगमात् सर्गस्य निमित्तकारणस्य कापयाग । तथा ईश्वर केवल नियन्तैवेति न्यायमत प्रतिभाति । भाष्यकारोऽप्यग्रे ईश्वरो द्रष्टा बोद्धा सर्वज्ञातेत्येवोक्तवान्, न पुन कर्ता स्रष्टा वेति ।

२ ईश्वरकर्तृकत्वसिद्धान्तोपन्यासमवतारयति–अथापर इति । न परः 'अपर ' स्वयूथ्यो नैयायिक इति यावदिति वार्त्तिकाभिमत व्याख्यानम् । तात्पर्यव्याख्याने त्वीश्वरोपादानवादी वेदान्त्येव 'अपर ' ।

## ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥

पुरुषोऽयं समीहमानो नावश्यं समीहाफलं प्राप्नोति । तेनानुमीयते—पराधीनं पुरुषस्य कर्मफलाराधनमिति । यदधीनं स ईश्वरः । तस्मादीश्वरः कारणमिति ॥ १९ ॥

## " न, पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥

" ईश्वराधीना चेत्फलनिष्पत्तिः स्यादपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति " ॥ २० ॥

---

१ सिद्धान्तैकदेशमते—ईश्वर इति । ईश्वर एव निरपेक्षः शरीरादेः निमित्तकारणम् । कुतः ? पुरुषकर्मणः प्रयत्नानां बहुधा नैष्फल्यदर्शनात् ।

२ ननु जीवा एव चेतनास्तत्कर्मनिबन्धना नामरूपप्रपञ्चा भविष्यति—इत्तमत्र भगवतेश्वरेणेत्यत आह—पुरुषकर्मा फल्यदर्शनात् । पुरुषश्चेच्चेतयते नैव निष्फलं कर्मारभेत । निष्फलं विद्वान् प्रवर्त्तमानः कथं चेतनो नाम । तस्मात्पुरुषकर्माफल्यदर्शनादीश्वर एवोपादानमिति सर्वमवदातम्—इति पूर्वपक्षः ।

३ सूत्रं व्याचष्टे—पुरुषोऽयमिति । 'समीहा' प्रयत्नः ।

तात्पर्यपरिशुद्धिप्रकाशकाराणां तु मतेऽत्र सूत्रे वेदान्तिनां पूर्वपक्ष एवोद्भावितः । स चैवमुल्लसति—माभूदयं नामरूपप्रपञ्चः शून्यतापादानोऽपि तु ब्रह्मोपादानो भविष्यति । ब्रह्मैव प्रपञ्चरूपेण परिणमते—मृत्तिकेव घटशरावादिभावेन । न चैवं नित्यत्वव्याघातः, परिणामेऽपि तत्त्वानपायात्, तल्लक्षणत्वाच्च नित्यतायाः । एतदेकदेशिनां परिणामवादिनाम् ।

अपरं च विवर्त्तवादिनाम्—यथा—ब्रह्मैवानाद्यविद्योपधानभेदान्नामरूपप्रपञ्चभेदेन विवर्त्तते—मुखमिवैकमनेकमणिकृपाणादर्शभेदादनेकविधप्रतिबिम्बभेदेनेति । तदेतद्दर्शनद्वयमनेन सूत्रेण सूचितम् ।

'ईश्वरः' ब्रह्म, ईशनायोगात् । 'ईशना' च चेतनाशक्तिः, क्रियाशक्तिश्च । सा चास्ति ब्रह्मणीति ब्रह्म 'ईश्वरः' । स एव 'कारणं' जगतः । न स्वभावो वा प्रधानं वा परमाणवो वा कल्प्यन्ते ।

४ (वार्त्तिकव्याख्यानेन) सिद्धान्तमाक्षिपति—न पुरुषकर्मेति—ईश्वरस्य निमित्तकारणत्वं 'न', कुतः ? यतः पुरुषप्रयत्नाभावे किमपि फलं न निष्पद्यत इत्यर्थः ।

५ सूत्रं व्याचष्टे—ईश्वरेति । यदि निरपेक्ष एवेश्वरः कारणं तर्हि पुरुषप्रयत्नमन्तरेणापि कर्मनिष्पत्तिसम्भवः । ततश्च कर्मलोपोऽनिर्मोक्षश्च—ईश्वरस्यैकरूपस्यैकरूपाया एव क्रियायाः सम्भवात् । अथेश्वरः कारणभेदानुविधानेन कार्यं निर्वर्त्तयति—यदपेक्षते तच्च करोतीति प्राप्तम् । एवं कर्मापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात् कर्मैवेश्वरो नेश्वरः स्यादित्याक्षेपाशयः ।

## तत्का[1]रितत्वादहेतुः ॥ २१ ॥

पुरुषका[2]रमीश्वरोऽनुगृह्णाति[3] । फलाय[4] पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति । यदा[5] न सम्पादयति तदा पुरुषकर्माफलं भवतीति । तस्मादी[6]श्वरकारितत्वादहेतु —'पुरुषकर्माभावे फलानिष्पत्ते'रिति ।

---

तात्पर्यव्याख्यानं यथा—न तावन्मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमते । तद्धि सर्वात्मना वा परिणमते एकदेशेन वा । तत्र सर्वात्मना परिणामे तत्त्वविघातादनित्यत्वम् । एकदेशेन परिणामे सावयवत्वात्तदवानित्यत्वम् । न च निरंशे स्वसंवदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति । तस्मादीश्वरो जगद्भेदेन परिणमते विवर्त्तते चेत्ययुक्तम् । निमित्तं तु स्यादीश्वरो जगतः । स चेदनपेक्ष एव जगत्कारणमित्युच्येत तत्रेदमुपतिष्ठते—न पुरुषकर्माभाव इति सूत्रम् ।

१ आक्षेपं परिहरति (वार्तिकव्याख्यानं)—तदेवमीश्वरोपादानत्वं ब्रह्मविवर्त्तत्वं च निरपेक्षेश्वरनिमित्तत्वं च प्रत्याख्यायाभिमतं पक्षं गृह्णाति (तात्पर्यव्याख्याने,—तत्कारितत्वादिति सूत्रम् । सिद्धान्तोपवर्णनपरमिदमित्यत्र सर्वेषां सम्मतिः । 'ईश्वरकारितत्वात् पुरुषकारस्य तत्सहाय एवेश्वरो जगतो निमित्तकारणम्'—इत्यस्य पक्षस्य निराकरणे 'पुरुषकर्माभावे फलानिष्पत्ते' इति 'अहेतु' असाधनमिति सूत्रार्थः ।

२ सूत्रं व्याचष्टे—पुरुषकारमिति । 'पुरुषकारमिति' पुरुषस्य प्रयत्नमिति यावत् ।

३ अनुगृह्णातीति—यत्कर्म यथाभूतं यस्य कर्मणो यदा विपाककालस्तत् तथा तदा विनियुङ्क्त इत्यर्थः ।

४ तदेव स्पष्टयति—फलायेति ।

५ कथं तर्हि पुरुषकर्माफल्यमित्यत आह—यदेति । ईश्वरानुग्रहाभाव एव कर्मनैष्फल्ये हेतुरित्यर्थः ।

६ सूत्रार्थमुपसंहरति—तस्मादिति । परमाणूपादानस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तम् । यच्च तेनापेक्षणीयं पुरुषकर्म तदपीश्वरनिमित्तकमेव । न च यदपेक्षते तत्तस्यानिमित्तम्—वास्यादेस्तक्षसहकारिणस्तक्षनिमित्तकत्वदर्शनात् । तस्मादीश्वरकारितत्वात्पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत इत्यस्य पक्षस्य निराकरणे 'पुरुषकर्माभावे फलानिष्पत्ते' रित्यहेतु । निरपेक्षेश्वरनिमित्तत्वनिराकरणे तु भवदवाप हेतुरिति निगलितोऽर्थः ।

गुणविशिष्टमात्मान्तरमीश्वरः । तस्यात्मकल्पात् कल्पान्तरानुपपत्तिः । अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः । तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम् । सङ्कल्पानुविधायी चास्य धर्मः । प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्तयति । एवं च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम् ।

---

१ ईश्वरनिमित्तकत्वं जगतो विचार्याधुना 'ईश्वर एव कः' इत्यपेक्षायामीश्वरं परिचाययति—गुणविशिष्टमिति । जीवात्मभ्योऽन्य इत्यात्मान्तरम् परमात्मेति यावत् । स च गुणविशिष्टः । ते च गुणाः—सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एवेति वार्त्तिकम् । तत्र तात्पर्यम्—बुद्धिवदिच्छाप्रयत्नावप्यस्य नित्यौ तत्कर्तृत्वसाधनान्तर्गतौ मन्तव्यौ, ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात्कर्तृत्वस्येति ।

२ नन्वात्मानः सर्वेऽनित्यज्ञानयोगिन एव दृष्टास्तद्वैलक्षण्येन नित्यज्ञानयोगी परमात्मा नात्मजातीयो भवितुमर्हतीत्यत आह—तस्यात्मेति । 'आत्मकल्पात्' आत्मजातीयादिति यावत् । इदमत्राकूतम् । यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि—अयं च नित्यबुद्ध्यादियुक्तः—तथाऽप्यात्मजातीय एव बुद्ध्यादिगुणयोगित्वात् । अन्यथा तोयादिपरमाणूनामतोयादिप्रसङ्गो नित्यरूपादियोगात् ।

३ ननु सामान्यत आत्मकोटावेव किमित्ययं न निवेश्यते—किमर्थं चास्यात्मभ्योऽन्यत्वं वर्ण्यत इत्यत आह—अधर्मेति । आत्मत्वसाम्येऽपि ईश्वरस्य महान् भेदो लक्ष्यतेऽस्य गुणानामात्मान्तरगुणेभ्यः । तथा हि जीवात्मनः स्वधर्मोऽज्ञानं प्रमादश्च—एतेषां तु परमात्मनीश्वरे 'हानिः' अभावः प्रत्युतास्मिन् धर्मो ज्ञानं समाधिश्चेत्येतेषां गुणानां सम्पत्तिर्लक्ष्यते । एतदेव च वैशिष्ट्यम्—वैलक्षण्यम्—अस्य जीवात्मभ्य इत्यर्थः ।

४ ईश्वरे धर्मादिगुणयोगं प्रदर्शयति—तस्य चेति । अणिमा—महिमा—लघिमा—गरिमा—प्राकाम्यम्—ईशित्वम्—प्राप्तिः—वशित्वमिति सिद्ध्यष्टकमीश्वरस्य तत्कार्यीभूतधर्मस्यास्तित्वं सूचयतीत्यर्थः । अभ्युपेत्येश्वरे धर्ममेतदुक्तं भाष्यकृता—परमार्थतस्त्वीश्वरस्य धर्मसद्भावे प्रमाणं नास्ति—नित्याभ्यामेव ईश्वरीयज्ञानक्रियाशक्तिभ्यां सकलकार्योत्पत्तिसिद्धेरिति वार्त्तिककाराशयः स्पष्टम् ।

५ नन्वीश्वरस्य कर्मानुष्ठानाभावात् कुतोऽस्य धर्मः—तथा चाणिमादिकमैश्वर्यं कामरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह—सङ्कल्पेति ।

६ तदेव विशदयति—प्रत्यात्मेति ।

७ मा भूद्यागानुष्ठानमीश्वरस्य, सङ्कल्पलक्षणं जीवात्मपृथिव्यादिप्रवर्तनरूपं चानुष्ठानं तस्य भवत्येव, तज्जनितस्यैव धर्मस्य फलमैश्वर्यादिकं भवतीति नाकृता-

आप्तकल्पश्चायम्[1] । यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम् । न चात्मकल्पादन्य[2] कल्प सम्भवति । न[3] तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम् । आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता—ईश्वर इति । बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् ।

स्वकृताभ्यागमलोपेन च प्रवर्तमानस्यास्य यदुक्त—प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे—तत्सर्वं प्रसज्यत इति ॥ २१ ॥

---

भ्यागमप्रसङ्ग । किमायातमनेनेश्वरस्य जगत्कर्तृत्व इत्यत आह—निर्माणप्राकाम्यमिति । जगन्निर्माणशक्तिरप्यस्य धर्मफलमेवेत्यर्थ । ईश्वरस्य ज्ञानक्रियाशक्ती नित्ये इत्यैश्वर्यं नित्यमणिमादिकं त्वनित्यम् । तदभिप्राय च भाष्यस्य धर्मफलत्वाभिधानम् । अत एवैश्वर्यनित्यत्वे धर्मवैयर्थ्यं तदनित्यत्वे तत्कारणकल्पनयाऽनवस्थेति चोद्यस्य नावकाश । प्रत्यात्मवृत्तिधर्माधर्मसञ्चयाधिष्ठान सङ्कल्पानुविधायिन ईश्वरधर्मस्य प्रयोजनम् ।

१ ननु प्रयोजनं विना प्रेक्षावतां न प्रवृत्ति । न च प्राप्तसकलप्राप्तव्यस्यास्ति प्रापणीय किञ्चिदीश्वरस्य । तस्मात् कृतमस्य जगन्निर्माणेनेत्यत आह—आप्तकल्प इति । मा भूदस्य भगवत स्वार्थं परानुग्रहार्थमेव जगन्निर्माणे प्रवर्तेत इत्यर्थ ।

२ पूर्वमुक्तमेवेश्वरस्यात्मजातीयत्व पुनर्द्रढयति—न चात्मेति । आत्मजातीय एवेश्वरो नान्यजातीय इत्यर्थ ।

३ कथमेतदित्यत आह—न तावदिति ।

४ स्यादेतत् यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्तेत सुखितमेव सृजेन्न तु खिन्नम् । न च क्षेत्रज्ञगतधर्माधर्मसहकारितया निर्माणवैचित्र्य वाच्यम्, धर्मस्य तदनधिष्ठितस्य स्वकार्याकरणेन कारुणिकेन तदधिष्ठानायोगात् । अत सुखितदु स्वा दिभेदेन जगद्वैचित्र्यदर्शनान्नानुकम्पाप्रयुक्त ईश्वर करोतीत्यत आह—स्वकृताभ्यागमेति । अयमभिसन्धि—कारुणिकोऽप्ययमात्मान्तरातिशयितमहिमाऽपि न वस्तूनां सामर्थ्यमन्यथाकर्तुं पारयति । तस्मादधर्मेणोत्पत्तिमतापि नेश्वरप्रभावादपि नियमेन भवितु युक्तम् । न च स्वफलविरोधिना फलमप्रदाय विनष्टुमपि शक्यम् । अत क्षेत्रज्ञानां नियतिमल्लङ्घयतेश्वरेण नाधर्म शक्योऽनधिष्ठातुम् । तस्मात् कारुणिकोऽप्यय वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्य विधत्ते इति सर्वमधिहृत्याह—स्वकृताभ्यागमलोपेन च प्रवर्तमानस्येति । पुरुषार्थं कृत तत्फलाभ्यागमलोपेन प्रवर्तमानस्येत्यर्थ । यदि तथाप्रवृत्तिरीश्वर स्यात्तर्हि अकर्मनिमित्तसर्गपक्षे ये दोषा उक्ता स्तृतीयाध्यायाह्निकस्यान्ते ते सर्वे एव प्रसज्येरन्नित्यर्थ ।

## ( ६ ) आकस्मिकत्वप्रकरणम् ।

अपर[1] इदानीमाह[2]—

"अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥२२॥

"अनिमित्ता शरीराद्युत्पत्तिः । कस्मात्? कण्टकतैक्ष्ण्यादिदर्शनात् । यथा कण्टकस्य तैक्ष्ण्यम्, पर्वतधातूनां चित्रता, ग्राव्णां श्लक्ष्णता, निर्निमित्तं चोपादानवच्च दृष्टं तथा शरीरादिसर्गोऽपीति" ॥ २२ ॥

अनिमित्तनिमित्तत्वान्नानिमित्ततः[3] ॥ २३ ॥

अनिमित्ततो[4] भावोत्पत्तिरित्युच्यते । यतश्चोत्पद्यते तन्निमित्तम् । अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति ॥ २३ ॥

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः[5] ॥ २४ ॥

अन्यद्धि[6] निमित्तमन्यच्च निमित्तप्रत्याख्यानम् । न च प्रत्याख्यानमेव प्रत्याख्येयम् । यथाऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति । सं

१ इदानीं व्यक्ताद् व्यक्तनिष्पत्तिं निराकर्तुमाकस्मिकवादं शुद्धनिह्निकया शरीरादौ निमित्तकारणनिराकरणमुखेन चार्वाक उपतिष्ठत इति परिशुद्धिकृत । अत्र कारणमात्रनिरासे तात्पर्यमिति वर्धमानोपाध्यायाः । यदि कार्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं न चेश्वरस्य निमित्तत्वम् । अत आकस्मिकत्वनिराकरणप्रकरणमारभत इति वृत्तिकृत ।

२ आकस्मिकवादमवतारयति—अपर इति । अपरोऽत्र चार्वाकः ।

३ अत्र एकदेशी पूर्वपक्षं दूषयति—अनिमित्तनिमित्तत्वादिति सूत्रम् । अनिमित्ततो भावोत्पत्तिरित्यभ्युपगच्छन् भवान् अनिमित्तमेव तदुत्पत्तिनिमित्तमभ्युपैति इति । तथा चानिमित्ता भावोत्पत्तिरिति रिक्तं वच इत्यर्थः ।

४ सूत्रार्थं विवृणोति—अनिमित्तत इति । व्याख्यानमेतत् ।

५ एकदेशिदूषणं दूषयति—निमित्तानिमित्तयोरिति सूत्रम् ।

६ तदेव विवृणोति—अन्यद्धीति । अनिमित्तमत्र निमित्तस्य भिन्नमहनीयश्च ।

७ आकस्मिकवादस्य दूषणं स्वयमेव भाष्यकार आह—न स्वयमिति । तृतीयाध्यायान्तिमप्रकरणे यादृच्छिकत्वनिराकरणवादो निराकृतस्तत्समानयोगक्षेमत्वादाकस्मिकवादस्य न पृथगस्य निरासो मन्तव्य इत्यर्थ । अस्मादेव कारणात् सूत्रकारेणाप्याकस्मिकवादस्य निरासे पृथक् प्रयत्नो न कृत इत्यपि सूचितम् ।

यथार्थितानु वाग्भ्यामवाप्यानान्तरमप्युपन्यस्य दूषितम् । तथा—नद्याम्नु सूत्रद्वयमेव व्याचक्षते । द्वितीयसूत्रगतमाक्षेपं समाधत्ते—अनिमित्तत इति ( सू० २३ ) ।

सत्त्वय वादोऽकर्मनिमित्त शरीरादिसर्ग इत्येतस्मान्न भिद्यते । अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

(७) सर्वानित्यत्वनिराकरणप्रकरणम् ।

अन्ये तु मन्यन्ते—

" सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् " ॥ २५ ॥

" किमनित्य नाम ? यस्य कदाचिद्भावस्तदनित्यम् । उत्पत्तिधर्मकमनुत्पन्न नास्ति, विनाशधर्मक च विनष्ट नास्ति । किं पुन सर्वम् ? भौतिक च शरीरादि अभौतिकं च बुद्ध्यादि । तदुभयमुत्पत्तिविनाशधर्मक विज्ञायते । तस्मात्तत्सर्वमनित्यमिति " ॥ २५ ॥

नानित्यतानित्यत्वात् ॥ २६ ॥

यदि तावत्सर्वस्यानित्यता नित्या ?–तन्नित्यत्वान्न सर्वमनित्यम् । अथानित्या ?–तस्यामविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

---

' अनिमित्तस्य ' अनिमित्तत्वसाधकस्य 'निमित्तत्वात्' अनिमित्तत्वानुमितिजनकत्वात् ' अनिमित्तत ' इति व्याहतम् । अनिमित्तत्वानुमितिजनकत्वानभ्युपगमेऽनिमित्तत्व न सिध्येदिति कण्टकतैक्ष्ण्यादिकम् नानिमित्तकम्–अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति हृदयम् । दाधा तस्माह–निमित्तात ( सू० २४ ) । इदमत्र निमित्त मिदमनिमित्तमिति प्रतीत्या तदाभेदसिद्धनिमित्तप्रतिषेधो न युक्त । इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्यतेति भाव ।

१ कारणसामग्री किमनित्यानामेव पदार्थानां समुच्चयोऽथवा नित्यानामुत नित्यानित्यानामितीदानीं विचारणा । प्रथमद्वितीयपक्षयोरभिमत प्रत्यभावो न सिद्ध्यति । ततस्तौ निराकरणीयौ । तत्र प्रथम निराकर्तुमिद प्रकरणम् । न च क्षणभङ्गनिराकरणेनैवैतद्गतम्–स्थैर्यमादाय पुनरारम्भादिति परिशुद्धिकृत । सर्वस्यैवानित्यत्व आ मान्दरपि नित्यत्व न स्यादत सर्वानित्यत्वनिराकरणप्रकरणमिति वृत्तिकृत ।

एव च पृथिव्यादिपरमाणवोऽनित्या भौतिकत्वात् , शरीरवत्–आत्मा चानित्याऽभौतिकत्वात् , बुद्धिवदिति पूर्वपक्षहृदयम् ।

२ पूर्वपक्षमुक्तमित्थम् परिहरति–नानित्यतेति । यदुक्त सर्वमनित्यमिति, तत्र, पुन ? अनित्यताया एव नित्यता दर्पः ।

उत्पत्तमत्त्व न विनाशित्वसाधकम्–भमस्य नित्यत्वात्तत्र व्यभिचारादिति हृदयम् ।

**तद[1]नित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥**

तस्या अनित्यताया अप्यनित्यत्वम्। कथम्? यथा अग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

**नित्य[2]स्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८ ॥**

अयं खलु वादो नित्यं प्रत्याचष्टे। नित्यस्य च प्रत्याख्यानमनुपपन्नम्। कस्मात्? यथोपलब्धिव्यवस्थानात्। यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यं, यस्य नोपलभ्यते तद्विपरीतम्। न च परमसूक्ष्माणां भूतानामाकाशकालदिगात्ममनसां तद्गुणानां च केषाञ्चित्सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते। तस्मान्नित्यान्येतानीति ॥ २८ ॥

(८) सर्वनित्य[3]त्वनिराकरणप्रकरणम्।

अय[4]मन्य एकान्त[5] —

**"सर्वं नित्यं पञ्चभूतनित्यत्वात्" ॥ २९ ॥**

"भूतमात्रमिदं सर्वम्। तानि च नित्यानि—भूतोच्छेदानुपपत्तेरिति। ॥ २९ ॥

**नो[6]त्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥**

उत्पत्तिकारणं चोपलभ्यते विनाशकारणं च। ननु सर्वनित्यत्वे व्याहन्यत इति ॥ ३० ॥

**"त[7]ल्लक्षणावरोधादप्रतिषेधः" ॥ ३१ ॥**

---

१ एकदेशिमतं दूषयति—तदनित्यत्वमिति सूत्रम्।

२ एकदेशिमतं निरस्य परमसिद्धान्तमुपक्रमते—नित्यस्येति सूत्रम्। नित्यत्वस्य सर्वथा प्रत्याख्यानं न युक्तम्, कुतः? यथा यदुपलभ्यते तथैव तस्य नित्यत्वमनित्यत्वं व्यवस्थापनीयमित्यर्थः।

३ सर्वनित्यत्वेऽपि न प्रेत्यभावसिद्धिरिति तन्निराकरणप्रकरणारम्भः।

४ सर्वनित्यतावादमवतारयति—अयमिति।

५ एकान्त इति—स्वपदार्थपक्षकप्रतिज्ञावाक्यमित्यर्थः।

६ सिद्धान्तमाह—नोत्पत्तीति सूत्रम्। यदुक्तं तन्न, कुतः? यतो बहूनां भूतानामुत्पत्तिविनाशकारणान्युपलभ्यन्त इत्यर्थः।

७ भूतमात्रत्वेन नाशाभावमन्यमानः पुनरपि पूर्वपक्षवाद्याह—तल्लक्षणेति सूत्रम्। 'तल्लक्षणावरोधात्' भूतलक्षणाक्रान्तत्वाद् गोघटादीनाम्—'भूतानां च' नित्यत्वात्—'अप्रतिषेधः' गोघटादिनित्यत्वस्येत्यर्थः।

"यस्योत्पत्तिविनाशकारणमुपलभ्यत इति मन्यसे,—न तद्भूतलक्षणहीनमर्थान्तरं गृह्यते। भूतलक्षणावरोधाद्भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति" ॥ ३१ ॥

नोत्पत्तितत्कारणोपलब्धेः[1] ॥ ३२ ॥

कारणसमानगुणस्योत्पत्तिः कारणं चोपलभ्यते। न चैतदुभयं निर्विषयम्। न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम्। न चाविषया काचिदुपलब्धिः। उपलब्धिसामर्थ्यात्कारणेन समानगुणं कार्यमुत्पद्यत इत्यनुमीयते। स खलूपलब्धेर्विषय इति। एवं च तल्लक्षणावरोधोपपत्तिरिति।

उत्पत्तिविनाशकारणप्रयुक्तस्य[2] ज्ञातुः प्रयत्नो दृष्ट इति। प्रसिद्धश्चावयवी[3] तद्धर्मा। उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति।

*शब्दकर्मबुद्ध्यादीनां*[4] *चाव्याप्तिः। 'पञ्चभूतनित्यत्वात्', 'तल्लक्षणावरोधा'*-च्चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ताः, तस्मादनेकान्तः।

"स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्"—भूतोपलब्धौ तुल्यम्। "यथा स्वप्ने विषयाभिमान एवमुत्पत्तिविनाशकारणाभिमान इति"। एवं चैतद्भूतोपलब्धौ तुल्यं–पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते।

---

1 पूर्वपक्षिण उक्तिं परिहरति–नोत्पत्तीतिसूत्रेण। यदुक्तं तत्र–कुतः यतो गोघटादीनामुत्पत्तिस्तदुत्पत्तिकारणं चोपलभ्यते, तस्मादनित्यान्येवैतानीति मन्तव्यम्। गोघटादीनां भूतसारूप्यं भूतकार्यत्वेऽप्युपपद्यमानं न भूतात्मकत्वं भूतवन्नित्यत्वं वाऽवगमयतीत्याशयः।

2 स्वपक्षसाधकमनुभवान्तरमाह–उत्पत्तिविनाशेति। यदि भावानामुत्पत्तिविनाशौ न वस्तुसन्तौ तर्हि प्रेक्षावतामभिमतवस्तूत्पत्तिकारणासादनायानभिमतवस्तुविनाशकारणासादनाय च तदर्थिनां प्रवृत्तिर्न स्यादित्यर्थः।

3 उपपत्त्यन्तरमाह–प्रसिद्ध इति। यः कश्चिदवयवी स सर्व एवोत्पत्तिविनाशधर्मेति सार्वजनीनोऽनुभव इत्यर्थः।

4 परोक्तस्य हेतुद्वयस्याव्यापकत्वं प्रदर्शयति–शब्दकर्मेति।

अत्राव्यापक एवानैकान्त उक्तः। पक्षो हि सर्वं नित्यमिति–तस्मिन् पक्षे उक्तहेतुद्वयस्य सत्त्वमप्युपलभ्यते (पृथिव्यादौ), असत्त्वमप्युपलभ्यते (शब्दादौ)–तस्मादयं हेतुरनेकान्तः–'अनेकः' सत्त्वासत्त्वलक्षणः 'अन्तः' अवस्था यस्य स इत्यर्थः।

" पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत् "–तदितरत्र समानम्। उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति। सोऽय नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयो–स्वप्नविषयाभिमानवदिति–अहेतुरिति ॥ ३२ ॥

"अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते, धर्ममात्रमुपजायते। स खलूत्पत्तिविनाशयोर्विषय। यच्चोपजायते तत्प्रागप्युपजननादस्ति, यच्च निवर्तते तन्निवृत्तमप्यस्तीति। एवं च सर्वस्य नित्यत्वमिति "।

न व्यवस्थानुपपत्तेः ॥ ३३ ॥

---

१ तदेव साङ्ख्यानां मतमपास्य स्वायंभुवानां मतं दूषयिष्यन् तन्मतेन सिद्धान्त्युपयस्योत्पत्तिविनाशयोरन्यथोपपत्तिं प्रदर्श्य तन्माध्यक्ष्यमाक्षिपति–अवस्थितस्येति। त्रिविधः खल्वयं धर्मिणः परिणामो धर्म लक्षणा-ऽवस्थारूपः। तद्यथा सुवर्णं धर्मि–तस्य वर्धमानरुचकादिधर्मपरिणामः। लक्षणपरिणामोऽनागतादिः। यदा खलु सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकमारचयति तदा वर्धमानको वर्तमानलक्षणं हित्वाऽतीतलक्षणमापद्यते रुचकस्त्वनागतलक्षणं हित्वा वर्तमानतामापद्यते। वर्तमानतामापन्न एव च रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान् भवति। नवपुराणावस्था च वर्तमानलक्षणाश्रया लक्षणपरिणामः। सोऽयं त्रिविधः परिणामः धर्मिणः। धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च। धर्मिणोऽभिन्नाः सन्तो धर्मा अपि नित्याः। तस्माद्भिन्नाश्चोत्पत्तिनाशविषया अनित्याः। तथा च नानाविधेषु परिणामेष्वेक एव धर्म्यनुवर्तते–एवञ्चावर्तमानो नित्य एवेति। ' अवस्थितस्य ' नित्यस्य उपादानस्य' समवायिकारणस्य धर्ममात्रमुत्पद्यते नश्यति च–एव च धर्ममात्रमुत्पत्तिनाशयोर्विषयो न वस्तुभूतो धर्मी गोघटादि। अभ्युपेत्य वादोऽयम्। वस्तुतस्तु धर्माणामपि नोत्पत्तिविनाशौ–प्रागुत्पत्तेरवाक्च विनाशात् धर्मरूपेण तथा वर्तमानत्वादिति सर्वनित्यत्वं तद्वस्थमेवेत्याक्षेपाशय।

२ उक्तं स्वायम्भुवानामाक्षेपं परिहरति–न व्यवस्थेति सूत्रम्। उपजननापाययो स्वरूपतः कालतो विशेषतश्च सम्बन्धिनोऽनागतत्वादिव्यवस्थानुपपत्तेरित्यर्थः। एतदुक्तं भवति। न तावद् भेदाभेदौ परस्परपरिहारव्यवस्थितधर्मविकल्प समवतो। तस्मादुपजननापायव्यवस्थायै धर्मलक्षणावस्थानां धर्मिणा भेदमिच्छता तेषामनित्यत्वमप्यभ्युपेतव्यमिति।

वृत्तिकारमतेन तु उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याह–न व्यवस्थेति सूत्रम्। सार्वलौकिकप्रमाणेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाप्रमव्यवहारविलोपः स्यादिति च तस्यार्थः।

अयमुपजन, इय निवृत्तिरिति व्यवस्था नोपपद्यते, उपजातनिवृत्तयोर्विद्यमानत्वात्। अय धर्म उपजातोऽय निवृत्त इति सद्भावाविशेषादव्यवस्था। इदानीमुपजननिवृत्ती, नेदानीमिति कालव्यवस्था नोपपद्यते, सर्वदा विद्यमानत्वात्। अस्य धर्मस्योपजननिवृत्ती, नास्येति व्यवस्थानुपपत्ति, उभयोरविशेषात्। अनागतोऽतीत इति च कालव्यवस्थानुपपत्ति, वर्तमानस्य सद्भावलक्षणत्वात्। अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महान निवृत्तिरित्येतस्मिन् सति नैते दोषा। तस्माद्यदुक्तं–प्रागप्युपजनादस्ति, निवृत्त चास्ति–तदयुक्तमिति ॥ ३३ ॥

( ९ ) सर्वपृथक्त्वनिराकरणप्रकरणम् ।

अयमन्य एकान्त[3] —

"सर्वं[4] पृथक् भावलक्षणपृथक्त्वात्" ॥ ३४ ॥

'सर्वं नाना। न कश्चिदेको भावो विद्यते। कस्मात्? भावलक्षणपृथक्त्वात्। भावस्य लक्षणमभिधानम्। येन लक्ष्यते भाव स समाख्याशब्द, तस्य पृथग्विषयत्वात्। सर्वो भावसमाख्याशब्द समूहवाची। कुम्भ इति सञ्ज्ञा

१ उक्ता व्यवस्था सर्वा अपि सिद्धान्त उपपद्यन्त इति स्वपक्षे साधकमाह–अविद्यमानस्येति।

२ एव तावत् गुणगुणि–भावाभाव–चेतनाचेतन–दृष्टादृष्ट–नित्यानित्यसमुच्चय सामग्रीति समर्थितम्। इदानीं समुच्चयविरुद्धोऽथा निराकर्तव्य। स चैकत्वनिराकरणवाद (सू० ३४–३६), शून्यतावाद (सू० ३७–४०), सङ्ख्यैकान्तवादश्चेति (सू० ४१–४३) त्रिधा। एकाभावे हि कस्य क समुच्चय? एवमद्वैतवादेऽपि। तत्र सर्वाभाव शून्यतायां निरुपाख्ये जगति क समुच्चय?

३ प्रथममेकत्वनिराकरणवादमुत्थापयति–अयमन्य इति। अय वादो बौद्धानामिति तात्पर्यकृत।

४ सर्वपृथक्त्ववादमाह सर्वं पृथगिति सूत्रम्। 'सर्वं पृथक्' घटादिक स्वस्मादपि पृथक्–कस्मात्? 'भावलक्षणपृथक्त्वात्' भावलक्षणानां गन्धरसादीनां च पृथक्त्वात्, घटादश्च तदभेदात्। न रूपाद्यतिरिक्त द्रव्य नाम किञ्चिदस्ति। नाप्यवयवातिरिक्त कश्चिदवयवीति सौत्रान्तिका वैभाषिकाश्च प्रतिपन्ना।

५ कुम्भादृष्टान्तेनैतत् सिद्ध यदेकवाचि किमपि पद नास्ति। ततश्च सिद्ध न किमप्येकमस्तीति पूर्वपक्षसङ्क्षेप।

शब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवादिसमूहे च वर्त्तते। निदर्शनमात्र चेदमिति " ॥ ३४ ॥

नै[1]नेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

अनेकविधलक्षणैरिति। मध्यमपदलोपी समास। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवै सम्बद्ध एको भावो निष्पद्यते। गुणव्यतिरिक्त च द्रव्यमवयवातिरिक्तश्चावयवीति। विभ[2]क्तन्याय चैतदुभयमिति ॥ ३५ ॥

अथा[3]पि—

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

न कश्चिदेको भाव इत्ययुक्त प्रतिषेध। कस्मात्? 'लक्षणव्यवस्थानादेव'। यदिह लक्षण भावस्य सज्ञाशब्दभूत तदेकस्मिन्व्यवस्थित–य कुम्भमद्राक्ष त स्पृशामि, यमेवास्प्राक्ष त पश्यामीति। नाणुसमूहो गृह्यत इति। अणुसमूहे चागृह्यमाणे यद्गृह्यते तदेकमवति।

अ[4]थाप्येतदनूक्त[5]— '[6]नास्त्येको भावो यस्मात्समुदाय "। एकानुप

१ पूर्वपक्ष निरस्यन् सिद्धान्तमाह–नानेकेति सूत्रम्। यदुक्त तत्र, कुत? यत अनेकै 'लक्षणै' भावै एकस्यैव भावस्य तत्समष्ट्यात्मकस्य निष्पत्तिभर्वति, गुणानाना नयाऽवयवैरारब्ध एक एवावयवाति भाव।

तथा चोक्त वृत्तिकृता–एकस्य धर्मिण प्रत्यक्षादिप्रमाणसिद्धत्वात्, तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावात्, अवयवाना च कारणत्वात् कार्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्व घटादे सम्भवतीति भाव।

२ ननु गुणातिरिक्तत्वमवयवातिरिक्तत्व च कि तव वाङ्मात्रेण सिद्ध भवतीत्यत आह–विभक्तेति। उभयमप्येतत्–गुणातिरिक्त गुणाश्रयो द्रव्यमवयवातिरिक्तोऽवयवीत्युभयमपि– विभक्तन्यायम् – विभक्ता सुस्पष्ट व्युत्पादिता न्याया हेतवो यस्य तत्तथाभूतम्। साधितावेवार्थाविमौ प्राक् द्वितीयाध्यायगतद्वितीयाह्निकस्थग्रन्थिसादिसूत्रैरतो नात्र पुन प्रपञ्च्यते त साधनमित्याशय।

३ पूर्वपक्षनिरास हेत्वन्तरमवतारयति–अथापीति। अपि चेत्यर्थ।

४ दूषणान्तरमभिधास्यन् पूर्वपक्षतात्पर्यमनुवदति–अथाप्येतदिति।

५ अनुक्तमिति। भावलक्षणपृथक्त्वादिति हेतुमुक्त्वा पश्चादपर हेत्वन्तरमुच्यत इत्यर्थ।

६ तदेव हेत्वन्तरमनुवदति–नास्त्येक इति। घटादिरेको भावो नास्ति किन्त्वनेकगुणानामनेकावयवानां च समुदायरूप एवासाविरयर्थ।

७ तन्निराकरोति–एकानुपपत्तेरिति। समुदायोऽपि बहुभि प्रत्येक भिन्नैरेव समुदायिभि सम्पद्यतेऽतो यदि एक कश्चिन्नास्ति तर्हि समुदायस्याप्यभाव एवेत्यर्थ।

पत्तेर्नास्त्येव समूह । "नास्त्येको भावो यस्मात्समूहे भावशब्दप्रयोग"। एकस्य चानुपपत्ते समूहो नोपपद्यते–एकसमुच्चयो हि समूह इति व्याहतत्वा दनुपपन्न–नास्त्येको भाव–इति। यस्य प्रतिषेध प्रतिज्ञायते–समूहे भावशब्द-प्रयोगात्–इति हेतु ब्रुवता स एवाभ्यनुज्ञायते, एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येक समूहिप्रतिषेधो–नास्त्येको भाव–इति। सोऽयमुभयतो व्याघाताद्यत्किञ्चनवाद इति ॥ ३६ ॥

( १० ) सर्वशून्यतानिराकरणप्रकरणम्।

अयमपर एकान्त —

" सर्वमभावो भावेष्वितरेतराभावसिद्धेः " ॥ ३७ ॥

---

१ अनुक्तस्यव पूर्वपक्षहेतास्तात्पर्यं स्फोरयति–नास्तीति । यस्माद्घटादि सज्ञाशब्दा गुणानामवयवाना च समूहमेव वक्तयता नास्ति कश्चिदेको भाव इत्यथ ।

२ प्रागुक्तमेव दूषण पुनराह–एकस्येति । उक्तार्थमेतत् ।

३ तत किमित्यत आह व्याहतत्वादिति–एको भावो नास्ति––समुदाय श्वास्तीति मिथो व्याहत वच इत्यथ ।

४ तदेव स्पष्टयति–यस्य प्रतिषेध इति । 'नास्त्येको भाव इति' यस्य भावस्यैकत्वप्रतिषेध प्रतिज्ञायत स एवैको भावोऽभ्यनुज्ञायते 'समूहे भावशब्द प्रयोगात्' इति हेतु ब्रुवत यथ ।

५ कथमभ्यनुज्ञायत इत्यत आह–एकेति । समूहो हि बहुभिरेकैरेव सम्पा दितो भवतीत्यत समूह स्वाकुवता भावाना पृथक्त्वमेकत्व च स्वीकृत भवती यथ ।

६ एव प्रतिज्ञया हेताव्याघातमुक्त्वाऽधुना हेतुना प्रतिज्ञाया व्याघातमाह–समूहे भावेति। समूहे भावशब्दप्रयोगादि ति हेतुवाक्ये समूहोऽभ्युपगम्यते–अथ च नास्त्येको भाव इति प्रतिज्ञावाक्ये समूहगतसमूहा प्रतिषिध्यते–प्रत्येक सकल-समूहिप्रतिषेधश्च समूहस्यापि प्रतिषेधे पर्यवस्यतीत्यथ ।

७ उपसहरति–सोऽयमिति । उक्तव्याघातद्वयेन पराहतत्वादेकप्रतिषेधवाद सवथाऽनादरणीय एव यथ ।

८ सर्वशून्यताया हि कार्यकारणभावासम्भव इति तन्निराकरणाय प्रकरण मारभमाण सर्वशून्यतावाद प्रस्तौति अयमपर इति।

९ शून्यतावादमुत्थापयति–सर्वमभाव इति सूत्रेण। 'सर्वमभाव' इति प्रतिज्ञा, तत्र हेतु 'भावेष्वितरेतराभावसिद्धे' सर्वेषां पदार्थाना परस्पराभावरूपत्वैव सत्त्व इत्यर्थ । प्रयोगश्च–सर्वे भावशब्दा असद्विषया, असत्प्रत्ययभावप्रतिपादकाभ्या भावशब्दसामानाधिकरण्यात्, अनुत्पन्नप्रध्वस्तपटशब्दवदिति ।

"यावद्भावजातं तत्सर्वमभावः। कस्मात्? भावेष्वितरेतराभावसिद्धेः। असन् गौरश्वात्मना–अनश्वो गौः असन् अश्वो गवात्मना–अगौरश्वः, इत्यसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति"॥

प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्। अनेकस्याशेषता सर्वशब्दस्यार्थो भावप्रतिषेधश्चाभावशब्दस्यार्थः। पूर्वं सोपाख्यमुत्तरं निरुपाख्यम्। तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति। न जात्वभावो निरुपाख्योऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति।

---

शून्यतावादश्चेत्थं समुन्नयति–प्रमाणादयः खल्वमी परस्परानात्मतयाऽसदिति प्रत्ययस्य नञश्च गोचरा इत्यनुभूयन्ते। अतस्तद्वाचिना शब्देन तत्सामानाधिकरण्यम्। ततः प्रमाणादयोऽसन्तोऽनुत्पन्नप्रध्वस्तपटवत्। अपि चामी भावा नित्या अनित्या वा। नित्यत्वे सर्वसामर्थ्यरहितस्यासत्त्वम्। न हि नित्यं कञ्चित्कार्यं उपयुज्यते क्रमाक्रमानुपपत्तेरित्युक्तम्। अनित्यत्वे तु विनाशस्वभावाश्चेद् द्वितीयादिक्षणेष्विव प्रथमक्षणेऽपि न स्युः। सत्त्वे वा नामी विनाशस्वभावाः। अतत्स्वभावत्वे वा क्षणान्तरेऽपि न नश्येयुः। नो खलु नीलं स्वकारणादुपजातं जातु कारणसहस्रैरपि पीतं कर्तुं शक्यमिति विनाशस्वभावत्वमकामेनाप्यनित्यानामेषितव्यम्। तस्माद् भावानां शून्यतैव पारमार्थिकी। कल्पनया त्ववस्तुसत्या सन्त इव भासन्ते भावा इति।

१ शून्यवादमनूद्यास्य सूत्रमेव तावद् दूषयति–प्रतिज्ञावाक्य इति। पूर्वपक्षवाक्ये प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्चेति व्याघातद्वयम्।

२ तत्र तावत् 'सर्वमभावः' इति प्रतिज्ञावाक्ये तद्गतपदयोर्व्याघातं प्रदर्शयति–अनेकस्येति। 'सर्वम्'–'अभावः' इति द्वे पदे–तत्र सर्वपदाभिधेयमनेकस्य भावस्याशेषतेति अभावपदस्य चाभिधेयो भावस्य प्रतिषेध इति।

३ ततः किमित्यत आह–पूर्वमिति। अशेषा अनेके हि 'सोपाख्याः' यत्किञ्चित्स्वभाववन्तः भावप्रतिषेधस्वभावरूपा 'निरुपाख्या' निःस्वभावा एव।

४ तयोः परस्परं सामानाधिकरण्यासम्भवं प्रदर्शयति–तत्रेति। यत् 'सोपाख्यं' तत् कदापि 'निरुपाख्यं' न भवितुमर्हतीति सोपाख्यं 'सर्वं' निरुपाख्याभावतया प्रतिज्ञातुं न शक्यते।

५ ननु मा भूत्सोपाख्यस्य सर्वस्य निरुपाख्याभावतया प्रतिज्ञानं विपरीतं तु भवितुमर्हतीत्यत आह–न जात्विति। निरुपाख्योऽभावोऽपि सोपाख्यसर्वशब्दाभिधेयानेकाशेषतया प्रतिज्ञातुं न शक्यत इत्यर्थः। न ह्यत्यन्तासन्निरुपाख्यं 'सर्वमिति' वा 'भाव इति' वा ज्ञानस्य गोचरः–असद्वाऽनिर्वचनाय वा न ख्यातिगोचरः–अपि तु सदेव सदन्तरात्मना। तथा च पुनःऽत्यन्तासतः कल्पनागोचरत्वमपीति तात्पर्यकम्।

"सर्वमेतदभाव इति चेत्–यदिदं सर्वमिति मन्यसे तदभाव इति"। एवं चेत्–अनिवृत्तो व्याघात । अनेकमशेष चेति नाभावे प्रत्ययेन शक्य भवितुम् । अस्ति चाय प्रत्यय सर्वमिति । तस्मान्नाभाव इति ।

प्रतिज्ञाहेत्वोश्च व्याघात । सर्वमभाव–इति भावप्रतिषेध प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतु । भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते, यदि सर्वमभावा भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते, अथ भावेष्वितरेतराभावसिद्धि सर्वमभाव इति नोपपद्यते ॥ ३७ ॥

सूत्रेण चाभिसम्बन्ध —

न, स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

---

१ व्याघातपरिजिहीर्षया पर प्रतिज्ञातार्थस्याभिप्राय प्रकटयति–सर्वमेतदिति। सर्वमभाव इति प्रतिज्ञावाक्यस्यायमेवार्थो यत् यद्भवान् सर्व इति व्यपदिशति स अभाव एवेति '—एव च प्रतिज्ञात सामानाधिकरण्य सुसम्पादमेवास्येथ ।

२ तत्परिहरति–एव चेदिति। 'अनेकमशेष चेति प्रत्ययेन अभावे न भवितु शक्यमिति' सम्बन्ध । यद् वय सर्व इति व्यपदिशामस्तदभाव एवेति प्रतिज्ञावाक्यम्–अनेकस्याशेषतामेव च वय सर्व इति व्यपदिशाम –तथा च अनेकमशेषमभाव इति प्रतिज्ञार्थ पर्यवस्यति, सोऽपि व्याहत एवेति तथा हि अभावविषये 'अनेकमशेष चेति' ज्ञान न भवितुमर्हति ।

३ ननु मा भूदेव प्रत्यय तत किमित्यत आह–अस्ति चायमिति । अनेकमशेषमिति प्रत्यय सर्वशब्देन नोच्यत एव–तथा च सर्वमभाव इति वदतोऽनेकमशेषमभाव इत्येवार्थ उक्तो भवति स च व्याहत पूर्ववदर्थ ।

४ उपसहरति–तस्मादिति—'नाभाव ' सर्वमिति शेष ।

५ प्रतिज्ञापदयोर्व्याघात प्रदर्श्य प्रतिज्ञाहेत्वोर्व्याघात प्रदर्शयति प्रतिज्ञाहेत्वोरिति । 'सर्वमभाव ' इति वाक्ये सर्वस्याभावत्वमुक्तम्–पुनश्च भावेष्विति हेतुवाक्ये भावेष्विति पद प्रयुक्त तेन च नानाभावानामस्तित्वमुररीकृतम् । तेष्वितरेतराभावरूपताऽऽरोपिता ।

६ व्याघात स्पष्टयति यदीति ।

७ उत्सूत्र दूषणमुक्त्वा भाष्यकार सौत्र दूषणमुपस्थापयति–सूत्रेण चेति। 'अभिसम्बन्ध '–दूषणस्येति शेष ।

८ शून्यवाद दूषयति–न स्वभावेति सूत्रम्। 'स्वा भावा धर्मा द्रव्यादीनां सदादि –अथ वा 'स्वभाव ' स्वरूप भावानाम्–येनामी भावा स्वभावात्

न सर्वमभाव । कस्मात्? स्वेन भावेन सद्भावाद्भावानाम् । स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते । कश्च स्वो धर्मो भावानाम्? द्रव्यगुणकर्मणा सदादि सामान्यम् । द्रव्याणा क्रियावदित्यवमादिर्विशेष । स्पर्शपर्यन्ता पृथिव्या इति च, प्रत्येक चानन्तो भेद । सामान्यविशेषसमवायाना च विशिष्टा धर्मा गृह्यन्ते । सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात् । अस्ति त्वयम् । तस्मान्न सर्वमभाव इति ।

अथ वा[2] 'न स्वभावसिद्धेर्भावानामि'ति स्वरूपसिद्धेरिति । गौरिति[3] प्रयुज्यमाने शब्दे जातिविशिष्ट द्रव्य गृह्यते, नाभावमात्रम् । यदि च सर्वमभाव गौरित्यभाव प्रतीयेत, गोशब्देन चाभाव उच्येत । कस्मान्न गोशब्देन चाभाव उच्यते? यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेष प्रतीयते नाभाव । तस्मादयुक्तमिति ।

अथ वा[4] 'न स्वभावसिद्धेरि'ति । असन् गौरश्वात्मनेति, असन् गौर्गवात्मना इति कस्मान्नोच्यते? अवचनाद्गवात्मना गौरस्तीति स्वभावसिद्धि । अनश्वोऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते? अवचनात्स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते ।

---

व्यावर्तन्त तस्य सिद्ध '। अथ वा असन्निति प्रत्ययस्य गवि अश्वात्मनेति' विशेषणात् अगौरित्यस्य गा परिहृत्याश्वादिभि सम्बन्धाद् गाभावसिद्ध । एवमश्वादिष्वपीति–' स्वभावसिद्धभावाना नाभाव ' इत्यर्थ ।

१ एव च 'न सर्वमभाव भावाना परस्परव्यवच्छेदकधर्माणा सत्त्वात् अभावस्य निरुपाख्यत्वात्तादृशधर्मासम्भवात्' इति पर्यवसितोऽर्थ ।

२ स्वभावसिद्धेरित्यस्य सूत्रस्थपदस्य व्याख्यानान्तरमुपन्यस्यति–अथ वेति । स्वभाव ' अस्मिन् पक्षे स्वरूपमेव, न स्वो धर्म ।

३ किन्तत् स्वरूपमिति स्पष्टयति–गौरितीति । गोत्वजातिविशिष्टो व्यक्तिविशेष गोशब्दार्थ प्रतीयते–स च भावरूप एव नाभावरूप इत्यर्थ ।

४ स्वभावसिद्धेरित्यस्य तृतीयव्याख्यानमाह–अथ वेति ।

५ यदि सर्वं निरुपाख्यमेव तर्हि यथा भवान् गामश्वात्मना असन्त मनुते– तत्र को हेतुरित्यपेक्षायामाह–गवात्मनेति । यत्तथा न मनुते भवान् तत्रायमेव हेतुर्यद् यथा गौरश्वात्मनाऽसन् न तथा गवात्मना अपि तु गवात्मना स सन्नेव । एव च गवादीना स्वस्वभावसिद्धिरेव सूत्रस्थस्वभावसिद्धिपदेन विवक्षितेत्यर्थ ।

अव्यतिरेकप्रतिषेधे च ( असंयोगादिसम्बन्धो व्यतिरेकोऽत्राव्यतिरेकोऽभेदाख्यसम्बन्ध., तत्प्रतिषेधे ) भावेनासत्प्रत्ययस्य सामानाधिकरण्यम् । यथा–न सन्ति कुण्डे बदराणीति । असन् गौरश्वात्मना, अनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते गवाश्वयोरेकत्व नास्तीति । तस्मिन्प्रतिषिध्यमाने भावे न गवा सामानाधिकरण्यमसत्प्रत्ययस्य–असन् गौरश्वात्मनेति यथा–न सन्ति कुण्डे बदराणीति–कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥ ३८ ॥

## " न स्वभावसिद्धिरापेक्षिकत्वात् " ॥ ३९ ॥

" अपेक्षाकृतमापेक्षिकम् । ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृत ह्रस्वम् । न स्वेनात्मनावस्थितं किञ्चित् । कस्मात् ? अपेक्षासामर्थ्यात् । तस्मान्न स्वभावसिद्धिर्भावानामिति " ॥ ३९ ॥

---

१ ननु यदि सर्वेषा भावाना भावरूपतैव–कथ तर्हि गोरनश्वत्वमश्वस्य वाऽगोत्वमित्यत आह–अव्यतिरेकेति । अत्रैव वाक्यसम्बन्ध —अव्यतिरेकप्रतिषेधे च भावेनाप्यसत्प्रत्ययस्य सामानाधिकरण्य दृश्यते, यथा–न सन्ति कुण्डे बदराणीति–'असयोगादिसम्बन्धो व्यतिरेकोऽत्राव्यतिरेकोऽभेदाख्यसम्बन्ध' इति । यथा–कस्यचिद् भावस्य 'अव्यतिरेकप्रतिषेधे' तादात्म्यप्रतिषेधो भवति तदा भावोऽप्यसत्प्रत्ययसमानाधिकरणो भवति । यथा कुण्डे बदराणि न सन्तीत्यत्र भावानामपि बदराणामसत्प्रत्ययसामानाधिकरण्यम् भवत्येव । अव्यतिरेकप्रतिषेध इत्यत्राव्यतिरेकपदस्यार्थं विवृणोत्यवान्तरवाक्येन "सयोगादिसम्बन्ध" इत्यादिनाऽ 'भेदाख्यसम्बन्ध" इत्यन्तेन । एव च अव्यतिरेकोऽपृथक्त्वम् अभेद तादात्म्यमिति पर्याया. ।

सर्वमेतत् स्पष्टीकृत तात्पर्यशुद्धि तद्यथा–असच्छब्द खलु अभावविशेषण सदेवाभिधत्ते । एवमसत्प्रत्ययोऽपि अभावविशेषण सदेवावलम्बते । यथा शुक्लशब्द शुक्लगुणविशिष्टे पटे वर्तते । तथा चासत्प्रत्ययाभिधानयोरुपपन्न भाववाचिना पदेन सामानाधिकरण्यमित्यर्थ । भावश्च कश्चिन्नित्य कश्चिदनित्य । तत्र नित्यस्य अर्थक्रियाकारित्वमुपपादित क्षणभङ्गभङ्गे । अनित्योऽपि न विनाशस्वभावो भाव । कारणान्तरात्तु विनश्यति । यत्तूक्त न शक्य नील पीत कर्तुमिति–अत्र ब्रूम –शक्य एव नील पीत कर्तुम् । आमश्याम: कुम्भो वह्निसयोगाद्रक्त इति ।

२ स्वभावसिद्धेरिति सिद्धान्त्युक्त हेतुमाक्षिपति शून्यवादी–न स्वभावेति सूत्रम् । भावाना स्वभावसिद्धिरेव नास्ति–कुत –सर्वेषा भावानामापेक्षिकत्वात् । तथा च सिद्धान्तिनो हेतुरसिद्ध इति सूत्रार्थ ।

व्याहतत्वादयुक्तम् ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं, ह्रस्वमनापेक्षिकं, किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते। अथ दीर्घापेक्षाकृतं ह्रस्वं, दीर्घमनापेक्षिकं, किमिदानीमपेक्ष्य दीर्घमिति गृह्यते। एवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इत्यपेक्षाव्यवस्थाऽनुपपन्ना।

स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः? अपेक्षायामनपेक्षायां च द्रव्ययोरभेदः। यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे। नान्यतरत्र भेदः। आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजनः स्यादिति।

किमपेक्षासामर्थ्यमिति चेत्[१]—द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः। द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति। यच्च हीनं गृह्णाति तद्ध्रस्वमिति व्यवस्यतीति। एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

---

१ ननु किमापेक्षिकत्वं नाम? नैव किञ्चिदस्ति—यद्यस्ति तदा सा किं करोतीति पृच्छति—किमपेक्षेति। उत्तरम् द्वयोरिति। उपपादितश्चायं विशदं तात्पर्यकृता। तथा हि परिमाणभेदो हि दीर्घत्वं ह्रस्वत्वं च। स च भावानामौत्पत्तिकः। केवलं तस्यातिशयानतिशयौ परस्परग्रहणाधीनौ। तथा हि क्षुद्रयष्ट्यां ह्रस्वत्वम् अल्पावयवसंख्यायोगिहस्तपरिमितत्वमेव अनतिशयः—वेणुयष्टेस्तु दीर्घत्वमतिशयः, तच्च भूयस्संख्यायोगिहस्तपरिमितत्वम्। तदिदमतिशयानतिशयाभिमतियोगिनिरूपणाधीननिरूपणम् न तु प्रतियोग्यधीनोत्पत्तीति न वस्तुधर्मोऽयं परापरापेक्षः। भिन्नत्वं च भेदः। स च वस्तुविशेषनिरूपण एव वस्त्वन्तरमपेक्षते न चोत्पत्तौ। एवं पितृत्वमपि व्यवस्थिता जनकशक्तिरेव—सा जन्यनिरूपणाधीननिरूपणा न तु तदधीनोत्पत्तिः। परत्वापरत्वादयस्त्वपेक्षाबुद्धिनिमित्ततया परापेक्षोत्पत्तिका अपि लोकयात्रां वहन्तो न शक्याः प्रत्याख्यातुम्। तावता तेषामधिकरणं निरपेक्षो भावो न भवतीति न। इति सर्वमवदातमिति।

व्याहतत्वादिति सूत्रे व्याघात एवाविष्कृतः। स च व्याघातो व्याख्यातो वार्तिककृता। सर्वमभाव इति सर्वथायं वादो व्याहतः। कुतो व्याघातः? (१) आदौ तावत् प्रमाणोपपत्त्यनुपपत्तौ। 'सर्वमभाव' इति ब्रुवाणः प्रमाणं पर्यनुयोज्यः। यदि ब्रूते—व्याहतं भवति। अथ नाभिधत्ते—अर्थोऽस्य न सिध्यति, प्रमाणाभावादेव। (२) पुनः 'सर्वमभाव' इति वाक्यम् तस्य यद्यभिधेयमर्थं प्रतिपद्यते, पूर्ववद्व्याघातः। अथ न प्रतिपद्यते—वर्णोच्चारणमात्रमनर्थकमिति। (३) पुनः "सर्वमभाव" इति च

## (११) सङ्ख्यैकान्तवादनिराकरणप्रकरणम् ।

अथेमे सङ्ख्यैकान्ताः—

सर्वमेकं[1] सदविशेषात् । सर्वं द्वेधा नित्यानित्यभेदात् । सर्वं

---

वाक्यस्य प्रतिपादयितारं प्रतिपत्तारं च यदि प्रतिपद्यते, पूर्ववद्व्याघातः। (४) पुनः 'सर्वमभावः' इति 'सर्वं भावः' इति च वाक्ये। यद्यनयोर्भेदं प्रतिपद्यते, व्याहतं भवति, अथ न प्रतिपद्यते, विशेषोपादानं व्यर्थम्। सोऽयं सर्वाभाववादो यावद्यावद् विचार्यते तावत्तावदुपपत्तिं न सहते—इति ।

एकमेव तत्त्वम्—द्वे एव तत्त्वे—त्रीण्येव तत्त्वानि—चत्वार्येव तत्त्वानि—पञ्चैव तत्त्वानीत्येते सङ्ख्यैकान्तवादाः । सङ्ख्या 'एकान्ता' नियमिता येषु वादेषु ते तथोक्ताः, न्यायसिद्धान्तविरुद्धा अधुना शून्यवादानन्तरं परीक्ष्यन्ते। न च वाच्यम्—"तत्त्वद्वयादिवादाः किमर्थमुपन्यस्यन्ते—न हि तेषु न्यायाभिमतसमुच्चयविरोधः" इति। एकान्तिके हि द्वैते ( द्वे एव तत्त्वे इत्यस्मिन् वादे ) द्वयोरपि सदातनत्वे कार्योपयोगे कादाचित्कसामग्र्यसम्भव एव। एवं त्रित्वादिवादेष्वपि द्रष्टव्यम्।

१ तत्र प्रथमं सङ्ख्यैकान्तवादो ब्रह्माद्वैतवादिनाम्। तं सङ्क्षेपेण सूचयति—सर्वमेकमिति। एकमेव तत्त्वम्—कुतः—सत्त्वेनानुगमात्सर्वेषामिति।

२ इदमस्याकूतम्। न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन् प्रकाशितुमर्हति—जडस्य स्वयं प्रकाशासम्भवात्। तथा च ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य प्रकाशासम्भवात् ज्ञानस्यैवैकस्येदं सर्वं विवर्त इति युक्तमभ्युपगन्तुम्। न च प्रकाशात्मनो घटादय एवोदयव्ययधर्मिणः परस्परव्यावृत्ताः सन्त्विति साम्प्रतम्—तद्व्यावृत्तिग्रहणे प्रमाणाभावात्। सा हि यद् यतो व्यावर्तते तदुभयग्रहे गृह्यते। न च विज्ञानानि विलक्षणानि स्वरूपमात्रावस्थितानि परस्परवार्तानभिज्ञानि ज्ञानान्तरमपि ग्रहीतुमुत्सहन्ते प्रागेव स्वस्माद् व्यावर्तयितुम्। न च निषेध्यनिषेधाधिकरणग्रहणकारणको व्यावृत्तिग्रहः स्वकारणेन समसमयोत्पादो भवितुमर्हति—तादृशोः सव्येतरविषाणयोरिव कार्यकारणभावाभावात्। न चैकं विज्ञानं क्षणिकं निषेध्यनिषेधाधिकरणे गृहीत्वा पश्चान्निषेधं गृह्णातीति युक्तम्—क्षणिकस्याक्रमस्य क्रमाक्रमवद्व्यापारायोगात्। न चैकं विज्ञानं निषेध्यनिषेधाधिकरणे गृह्णात्यथ ज्ञानान्तरं निषेधतीति युक्तम्—नैरगृह्यतेऽपि तस्मिन्नेतरस्य निषेधज्ञानप्रसङ्गात्। न च ज्ञानस्वरूपग्रह एवास्य निषेधग्रह इति साम्प्रतम्। एवं हि सम्भवेद्यदि स्वरूपतदन्यव्यावृत्त्योरैक्यं स्यात्। तत्र व्यावृत्तिस्वभावो वा भावो—भावस्वरूपा वा व्यावृत्तिः। तत्र पूर्वस्मिन् कल्पे व्यावृत्तेस्तुच्छत्वात् तत्स्वभावाभावभेदास्तुच्छाः स्युः। ततश्च वर्षाभङ्गयन्तरेण शून्यवादप्रसङ्गः। इतरस्मिंस्तु कल्पे विधिरूपो भाव एव व्यावृत्तिरिति विधिरूपतया च ते व्यावर्तन्ते

त्रेधा–ज्ञाता ज्ञानं ज्ञेयमिति । सर्वं चतुर्द्धा–प्रमाता प्रमाणं प्रमेयं प्रमितिरिति । एवं[1] यथासम्भवमन्येऽपीति ।

तत्र परीक्षा–[2]

सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

यदि[3] साध्यसाधनयोर्नानात्वम्–एकान्तो न सिद्ध्यति, व्यतिरेकात् । अथ

---

इति न व्यावृत्ता भावाः परस्परं परमार्थतः । सर्वमिदमभिप्रेयोक्तम्–सदविशेषादिति । अनाद्यनिर्वचनीयाविद्यानिबन्धनं तु भावानां भेदं न व्यासेधाम । न च ज्ञातुरपि ज्ञानाद्भिन्नग्राहकमस्ति प्रमाणम्–उक्तादवाविशेषात् । यस्माच्च ज्ञेयानां परस्परतश्च ज्ञानाच्च भेदो नापि ज्ञातुर्ज्ञानादस्ति भेदः नापि ज्ञानानामन्योन्यस्य तस्मात् प्रकाश एव प्रपञ्चः ग्रहेत्यद्वैतसिद्धिरिति ।

द्वितीयो वादः–सर्वं द्वेधेति । न हि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थास्त्रित्वादिके व्यवतिष्ठेरन्नित्यर्थः ।

१ तृतीयो वादः–सर्वं त्रेधेति । ज्ञानपदमत्र ज्ञानकरणपरं ज्ञेयम्–'ज्ञप्तिरपि ज्ञायमानत्वात् ज्ञेयान्नातिरिच्यत इति भावः' इति तात्पर्योक्तिस्त्वरमान ।

२ चतुर्थो वादः–सर्वं चतुर्धेति । यदि प्रमितिर्नाम तत्त्वं प्रमाणादिभ्यो भिन्नं नाश्रियते–प्रमायाः प्रधानक्रियाया अभावात् कथं प्रमात्रादयः । कथं च प्रधानक्रियामन्तरेणैकवाक्यता स्यात्, कारकवैचित्र्यं वा । प्रमायाः फलस्वावस्थाया उपरि प्रमेयव्यपदेशं न वारयाम । न चैतावता तत्त्वान्तरं न भवति ।

३ अन्येऽपि सङ्ख्यैकान्तवादाः सन्ति–तान् सूचयति–एवं यथेति । (१) प्रकृतिपुरुषाविति द्वे एव तत्त्वे इत्यपरो द्वैतवादः । (२) रूपसंज्ञासंस्कारवेदनानुभवाः पञ्च स्कन्धा इति पञ्चत्ववादः । (३) पशु–पाश–तदुच्छेदेश्वरा इति चतुष्ट्ववादोऽपरः ।

४ सर्वेषामेतेषां परीक्षां निराकरणरूपां प्रस्तौति–तत्र परीक्षेति ।

५ सङ्ख्यैकान्तवादनिराकरणमुपक्रमते–सङ्ख्यैकान्तासिद्धिरितिसूत्रम् । सङ्ख्यैकान्ता न सिध्यन्ति–कुतः–कारणस्य (साधनस्य प्रमाणस्य) अनुपपत्तौ (असत्त्वे) उपपत्तौ सत्त्वे वा तादृशैकान्तासम्भवात्–इत्यर्थः ।

६ सूत्रार्थं वर्णयति–यदीति । सूत्रस्योपपत्तिपदार्थं वर्णयति–साध्येति । यदि 'साध्यसाधनयोः' ज्ञेयात् (सङ्ख्यैकान्ततारूपात्) तज्ज्ञानसाधनं प्रमाणं भिन्नं तर्हि तयोरानन्त्यात् सङ्ख्यैकान्तता न सिध्यति ।

७ सूत्रस्यानुपपत्तिपदार्थमाह–अथ साध्यतेति । यदि ज्ञेयाद् भिन्नं ज्ञानसाधनं प्रमाणं नास्ति तर्हि प्रमाणाभावादेव प्रमेयस्य न सिद्धिरित्यर्थः ।

साध्यसाधनयोर्भेदं—एवमप्येकान्तो न सिद्ध्यति, साधनाभावात्। न हि तदन्तरेण कस्यचित्सिद्धिरिति ॥ ४१ ॥

## "न कारणावयवभावात्" ॥ ४२ ॥

विस्तरेण वर्णित सिद्धान्ताशयोऽत्र तात्पर्यकृता। अनवयवेन सर्वं चेदेकद्वेधा त्रेधा चतुर्धा चेति प्रतिज्ञार्थः। तदतिरिक्तं साधनं वाच्यम्। न हि साध्यमेव साधनं भवति। तथा च साधनस्य तदतिरेकान्न सर्वैकान्तसिद्धिः। न च किञ्चिदपि स्वसंवेदनमस्ति–ज्ञानप्रदीपादीनामपि परसंवद्यत्वात्। यथा च ज्ञानातिरिक्तोऽप्यर्थो विषयस्तथा विज्ञानवादनिराकरणावसरे वक्ष्यते। न च विज्ञानादर्थभेदोऽशक्यग्रहः। तथा हि नीलमुपलभ इत्यनहङ्कारास्पदमश्वेतादिरूपं नीलं प्रत्यात्ममनुभवगोचरं। एवं नीलादीनामपि परस्परम्। अन्यथा धर्मानयेति देशितो लोचनं निमील्य शयीत–शयीथा इति देशितस्तोयमेवाहरेत्–कस्य चित्कथंचित् कुतश्चिद्विवेकाभावात्। न चानिर्वचनीयानाद्यविद्यानिबन्धनोऽयं भेदव्यवहार इति साम्प्रतम्। अनिर्वचनीयख्याते पूर्वमेवापाकृतत्वात्। तस्मात्सर्वजनसंवेदनसिद्धोऽयं भेदप्रत्ययो न कारणमुखनिरीक्षणेन युक्तो निराकर्तुमपि तु स्पष्टदृष्टकार्यभेदप्रत्ययानुरोधेन तत्कारणं कल्पनीयं यादृशेन कारणेन प्रपञ्चप्रत्ययोऽप्रत्यूहमुपपत्तुमर्हति। तच्च प्रत्यक्षमेव। तथा हि नीलं परिच्छिन्दत् पीतादिभ्योऽस्य भेदं परिच्छिनत्ति–संयुक्तविशेषणतालक्षणादिन्द्रियार्थसन्निकर्षात्। नीलं हि नीलमित्यनुभवस्य पीतं च पीतमित्यनुभवत् स्मरत् वा प्रमाता निषेध्यनिषेधाधिकरणतया समाकलयितुं रूपमात्रेणागृहीतपरस्परभेदमपि। न हि तत्र भेदेन प्रथत इत्यभेदेन प्रथेत, येनानयोर्नीलपीतयोर्गृहीतस्वरूपयोरव्यवधिमज्ञानो न स्यात्। तथा च तौ गृहीत्वा प्रत्यक्षेण प्रमातायमनयोर्भेदं ग्रहीतुमित्यसाम्प्रतमेतत्।

> अन्योन्यसंश्रयाद् भेदो न प्रमान्तरसाधनः ।
> तस्मिन्निद नायमिति वस्तुभेदं विना न धीः ॥

एतेन प्रमातुरपि प्रमाया भेदो व्याख्यातः। प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धादिकोविदजात्ममुक्तसंसारिविभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते। एकस्मिन्प्रपर्यायेण विरुद्धधर्मसमर्गासम्भवात्। कस्तया कथंचिदसम्भाव्यमानोऽप्ययं गोमयपायसीयन्यायमावहति। तदेवं प्रत्यक्षादिविरोधादनुपपन्नार्थो श्रुतय 'एकमेवाद्वितीय'मित्याद्या प्रथमां वृत्तिमुत्सृज्य जघन्यामालम्बते–'यजमानः प्रस्तरः,' 'आदित्यो यूपवदि'ति। तस्माद्द्वैतमिति।

साध्यासाधनभेदेन सङ्ख्यान्तैकान्ता अप्यपाकृता मन्तव्या इति।

१ पूर्वपक्षवादाक्षिपति–न कारणेति सूत्रम्। यदुक्तं कार्यकारणभेदेन नाद्वैतमिति तन्न 'न,'–कुत–कारणस्य अवयवभावात्, कार्यावयवरूपत्वादित्यर्थः।

"न सङ्ख्यैकान्तानामसिद्धिः। कस्मात्? कारणस्यावयवभावात्। अवयवः कश्चित् साधनभूत इत्यव्यतिरेकः। एवं द्वैतादीनामपीति ॥ ४२ ॥

निरवयवत्वादहेतुः ॥ ४३ ॥

कारणस्यावयवभावादित्यहेतुः। कस्मात्? सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते। तत्र व्यपवृक्तोऽवयवः साधनभूतो नोपपद्यते। एवं[2] द्वैतादिष्वपीति।

ते खल्विमे सङ्ख्यैकान्ता यदि विशेषकारितस्यार्थभेदविस्तारस्य प्रत्याख्यानेन वर्तन्ते–प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्ति। अथाभ्यनुज्ञानेन वर्तन्ते–समानधर्मकारितोऽर्थसङ्ग्रहो विशेषकारितश्चार्थभेद इति, एवमेकान्तत्वं जहतीति।

ते खल्वेते[3] तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति ॥ ४३ ॥

( १२ ) फलपरीक्षाप्रकरणम्।

प्रेत्यभावानन्तरं[4] फलम्, तस्मिन्[5]—

"सद्यः कालान्तरे च फलनिष्पत्तेः संशयः" ॥ ४४ ॥

"पचति दोग्धीति सद्यः फलमोदनपयसी। कर्षति वपतीति कालान्तरे फलं शस्याधिगम इति। अस्ति चेयं क्रिया–अग्निहोत्रं जुहुयात्स्वर्गकाम– इति। एतस्या फले संशयः" ॥ ४४ ॥

---

१ परिहरति सिद्धान्ती–निरवयवत्वादिति सूत्रम्।

२ उक्तमद्वैतवादपरिहारं सङ्ख्यैकान्तवादान्तरेष्वतिदिशति–एवमिति।

३ प्रकरणार्थमुपसंहरति–ते खल्विति। अद्वैतादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः। न केवलं प्रेत्यभावोऽपि तु षोडशापि पदार्थाः। तस्मादेतेषां यत् तत्त्वज्ञानं तत्प्रविवेकार्थं स्वयमविवेकेन ज्ञानप्रविवेक इति तदधमते परीक्षिताः। यावच्चात्र विचारितं तावदप्रकृतमपि प्रकृतं प्रेत्यभावमुपकरोतीत्यर्थः। एवमेव किल पूर्वानुवृत्तात्प्रकरणमप्रकृतमथापि सम्बध्यते चाग्रिमप्रकरणार्थेनेति।

४ अथोद्देशक्रमानुरोधेन फलस्य परीक्षां प्रस्तौति–प्रेत्यभावानन्तरमिति।

५ तद्विषये परीक्षाङ्गभूतसंशयमुपदर्शयति 'तस्मिन्निति' भाष्यांशमारभ्य 'संशय' इति सूत्रान्तपर्यन्तम्।

'एतस्यां फले संशय' इति भाष्यांशमवतारयन् प्रदर्शितः परिशुद्धिकृता। फलसामान्यमादाय उत्पत्त्यनन्तरभावि वा स्यात् कालान्तरभावि वेति सन्देहो नोपपद्यते–लोके पचत्यादीनां फलस्यानन्तरभावित्वस्य धर्मिग्राहकप्रमाणनिर्णीतत्वात्। एवं

## न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

स्वर्गं फलं श्रूयते। तच्च भिन्नेऽस्मिन्देहभेदादुत्पद्यत इति न सद्यः, ग्रामादिकामानामारम्भफलमपीति ॥ ४५ ॥

## "कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥

"ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति। न खलु वै विनष्टात्कारणात्किञ्चिदुत्पद्यत इति" ॥ ४६ ॥

## प्राङ् निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥

यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना सङ्गृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति, स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण सन्निविशमानः पर्णादिफलं निर्वर्तयति, एवं परिषेकादि कर्म चार्थवत्। न च विनष्टात्फलनिष्पत्ति। तथा प्रवृत्त्या[3] संस्कारो धर्माधर्मलक्षणो जन्यते। स जातो निमि

स्वर्गस्यापि फलत्वे कालान्तरभावित्वस्योभयवादिसिद्धत्वात्। एवं सद्योभावि लाकपक्त्यादिफलं कालान्तरभावि स्वर्गादि चयेपाऽपि संशयोऽनुपपन्नो धर्मिभेदादिति। एवं च संशयस्य स्वरूपान्तरं प्रदर्शितं तत्रैव। क्रियैव यागादिका संशयविषयः क्रियात्वं च संशयकारणम्। चेतनप्रवृत्तिरिह काचित् सद्यः फला भवति–यथा पचनदोहनानि काचित्तु कालान्तरभाविफला भवति–यथा कृषणसेवनादि। अतः साधकबाधकप्रमाणाभावे सति प्रकृते संशय इति।

१ संशयं प्रदर्श्य–तत्र ऐहिककीर्त्यर्थकार्यादीनामेव फलत्वसम्भवं नादृष्टस्वर्गादिकस्येत्यभिप्रेत्य सूत्रे पूर्वपक्षे सिद्धान्तेनाऽपक्रमते–न सद्य इति सूत्रम्। यद्यप्येतत् सूत्रं न्यायसूचीनिबन्धे नोपलभ्यते तात्पर्यकृता चेदं भाष्यत्वेनैव परिगृहीतम्,–तथापि नानाप्राचीनसूत्रपुस्तकानामनुरोधात् सूत्रमेवेदमिति निर्धारितम्। वार्तिककारस्य सोऽप्येवमेव।

२ परः शङ्कते–कालान्तरेणेति सूत्रम्। कालान्तरेण तत्कर्मणः फलं न सम्भवति–'हेतोः' तत्फलकारणस्य कर्मणः 'विनाशात्' विनष्टत्वादित्यर्थः।

३ उक्तं दृष्टान्तं दार्ष्टान्तिके योजयति–तथा प्रवृत्त्येति। एवमेव कर्मणि निष्पन्ने तन्निष्पत्तितत्फलोत्पत्त्योरन्तराले तत्कर्मगतधर्माधर्मरूपः संस्कारोऽवान्तरकारणान्तरसहकृतः फलनिष्पत्तिद्वारभूत उत्पद्यते तेन च द्वारेणोत्पन्नं स्वर्गादिफलमुक्तकर्मण एवेति मन्यन्ते प्रेक्षावन्त इत्याशयः। एष तु संस्कारो न स्नानादिजन्य इव चोद्धर्म्योऽपि तु पुरुषधर्मतामात्रेण संस्कार इत्युच्यते। परमार्थतस्त्वयं धर्मः पुरुषाश्रयोऽपि कर्मणा फले जनयितव्ये तस्यावान्तरव्यापार इति तात्पर्यकृतः।

तान्तरानुगृहीत· कालान्तरे फलं निष्पादयतीति। उक्तञ्चैतत्—'पूर्वकृतफलानुबन्धात्तदुत्पत्तिः' इति ॥ ४७ ॥

'तदिदं' प्राङ्निष्पत्तेर्निष्पद्यमानम्—

नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात्" ॥ ४८ ॥

"प्राङ् निष्पत्तेर्निष्पत्तिधर्मकं नासत्-उपादाननियमात्। कस्यचिदुत्पत्तये किञ्चिदुपादेयं न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यत इति। न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति। सदसत् न सदसतोर्वैधर्म्यात्। सदित्यर्थाभ्यनुज्ञा। असदिति अर्थप्रतिषेध। एतयोर्व्याघातो वैधर्म्यम्। व्याघाताद्व्यतिरेकानुपपत्तिरिति" ॥ ४८ ॥

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा, कस्मात्?—

उत्पादव्ययदर्शनात् ॥ ४९ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति ॥ ४९ ॥

बुद्धिसिद्धं तु तदसत् ॥ ५० ॥

---

१ उक्तेऽर्थे पूर्वोक्तं स्मारयति—'पूर्वकृत'ति। तृतीयाध्यायगतद्वितीयाह्निकस्थपठितम सूत्रमेतत्।

२ इदमिदानीं चिन्त्यते—किमेतत्फलमुत्पत्तेः प्रागसद्वा सद्वा सदसद्वाऽनुभयं वेति। तत्र समस्तपक्षाक्षेपेण फलाभावमभिधित्सु पूर्वपक्षयति—'तदिदमि'ति भाष्याक्षराण्यारभ्य 'वैधर्म्यादि'ति सूत्राक्षरपर्यन्तम्। तदिदं निष्पद्यमानं 'फलं' निष्पत्तेः प्राक् ''नासन्न सन्न सदसत्'—कस्मात्—'सदसतोर्वैधर्म्यात्'—इति सम्बन्धः। कार्यकारणभाव एव न विचारसह इति पूर्वपक्षहृदयम्।

यद्यप्यनुभयपक्षो न धृतः सूत्रकारेण भाष्यकारेण वा तथापि वार्तिककारोक्त्यनुरोधेन सोऽप्युक्तस्तात्पर्यकारेणेत्यवसेयम्।

३ सूत्रार्थं विवृण्वन् कार्यमसदिति प्रथमं कल्पं गृह्णाति—प्राङ् निष्पत्तेरिति।

४ प्राङ्निष्पत्तेः कार्यं सदिति द्वितीयं कल्पं गृह्णाति—न सदिति।

५ कार्यं सदसदित्युभयमिति तृतीयं कल्पं गृह्णाति—सदसदिति।

६ तत्र हेतुमाह—सदसतोरिति। सत्त्वासत्त्वयोरत्यन्तविरुद्धत्वादेकत्र समावेशः सम्भवतीत्यर्थः।

७ सिद्धान्तं प्रस्तौति—प्रागुत्पत्तेरिति। असदेव कार्यं प्रागुत्पत्तेरित्येव 'अद्धा' सत्यमित्यर्थः।

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ॥ ५० ॥

"आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः" ॥ ५१ ॥

"मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम् । कर्म चेह शरीरे फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति" ॥ ५१ ॥

प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया । तदाश्रयमेव कर्म धर्मसंज्ञितं-धर्मस्यात्मगुणत्वात् । तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥ ५२ ॥

"न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात्" ॥ ५३ ॥

"पुत्रादि फलं निर्दिश्यते न प्रीतिः-'ग्रामकामो यजेत' 'पुत्रकामो यजेते'ति । तत्र यदुक्तं-प्रीतिः फलम्-इत्येतदयुक्तमिति" ॥ ५३ ॥

तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥

पुत्रादिसम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यत इति पुत्रादिषु फलवदुपचारः । यथाऽन्ने प्राणशब्दः-अन्नं वै प्राणाः-इति ॥ ५४ ॥

( १३ ) दुःखपरीक्षाप्रकरणम् ।

फलानन्तरं दुःखमुद्दिष्टमुक्तं च-'बाधनालक्षणं दुःखम्'-इति ।

---

१ देहाद्यतिरिक्तमात्मानं नित्यं परलोकिनमसन्तं मन्यमानः कश्चित् पारलौकिकफलमाक्षिपति आश्रयेति सूत्रम् । 'वृक्षफलवदिति' यो दृष्टान्तः सिद्धान्तिनोद्भावितः स 'अहेतुः' असाधकः परलोकभाविफलस्य कुतः-'आश्रयव्यतिरेकात्', सुखदुःखादिरूपफलाश्रयस्याभयलोकानुगतस्याभावादित्यर्थः ।

२ उक्तमाक्षेपं परिहरति-प्रीतेरिति सूत्रम् । अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरव्यतिरिक्त एव कर्मणः कर्तेत्युपपादितमेवास्माभिरित्युपपद्यत एवात्राप्येकाश्रयत्वमेव कर्मफलयोरित्याशयः ।

३ अस्यां परीक्षायामाक्षेपः-'ननु किमिह परीक्षणीयम् । न हि कश्चिद् दुःखस्वरूपे विप्रतिपद्यते-नापि तद्वयमहेय वति सन्दिह्यते । नित्यमनित्यं वा दुःखमित्यत्र परीक्षा प्रकृतोपयोगिनी स्यात्-तन्निरयत्व हि शास्त्रानर्थक्यप्रसङ्ग-अस्ति च सदयकारणवादिविप्रतिपत्तिः-साङ्ख्या हि सर्वनित्यत्ववादिनो दुःखमपि नित्यमाहुः-तथाऽपि तन्मतनिरासादनन्तरं च सत्कार्यवादनिषेधादियमपि निरव

"तत्किमिदं प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानम्। आहोस्विदन्यः कल्प इति ? "

अन्य इत्याह। कथम् ? न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति। कया युक्त्या ? सर्वे खलु सत्त्वनिकायाः सर्वाण्युपपत्तिस्थानानि सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्याद्‌'बाधनालक्षणं दुःख'मित्युक्तमृषिभिः दुःखसंज्ञाभावनमुपदिश्यते।

अत्र च हेतुरुपादीयते——

---

दर्शिता। कारणं च दुःखस्य दृष्टमहिकण्टकादि न विप्रतिपत्तिविषयः। अदृष्टरूपा च प्रवृत्तिः परीक्षितैव। तद्वान्तरकार्यरूपं च जन्मादि परीक्षितमेव। कारणनिवृत्तौ च कार्यं निवर्तत इति प्रथमाध्यायद्वितीयसूत्रे परीक्षितम्। तत् किमपरमवशिष्यते यदर्थोऽयमारम्भः" इति।

तत्परिहारश्चेत्थम्—'बाधनालक्षणं दुःख'मिति लक्षितं दुःखम्। तत्र बाधनाशब्देन बाधबुद्धिरुच्यते। अनेन च लक्षणेन दुःखायतनानि दुःखसाधनानि सुखं च व्याप्यते। अतो मुख्यां बाधनाबुद्धिमादाय पूर्वपक्षावकाश इति।

दुःखपरीक्षायाः क्रमप्राप्तिं प्रदर्शयति—फलानन्तरमिति।

१ तत्र पूर्वपक्षिणः प्रश्नः—तत्किमिति। भवतु बाधनालक्षणं दुःखमनुभूयमानम्। यत्पुनरिदं प्रत्यात्ममनुकूलवेदनीयं सुखं तत्कथं दुःखम्, अनुभवविरोधात्। शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया 'दुःखं' कस्मात्सुखहेतुतया सुखमेव न भवन्ति। सेयमतिभीरुता सकललोकयात्राविरोधिनी। यथा मांसार्थी कण्टकानुद्धृत्य मांसमश्नन् कण्टकजन्यदुःखमाप्नोत्येवमेव प्रेक्षावान् दुःखमुद्धृत्येन्द्रियसाधनं सुखमेव भोक्ष्यते। सन्ति च विविधदुःखपरिवर्जनहेतवो दृष्टाः परिदृष्टसामर्थ्या अन्वयव्यतिरेकाभ्यामिति पूर्वपक्षप्रश्नाशयः।

एतदुक्तं भवति। यदि दुःखपरिवर्जनेन शक्येन सुखमुपादातुं ततस्तादृशमनुकूलवेदनीयं कः प्रेक्षावान् प्रजह्यात्। न तु तादृशमस्ति सुखं क्वचिदपि—सर्वस्य दुःखाविनाभाविनः केवलस्य सुखस्योपादातुमशक्यत्वात्। न हि मधुविषसम्पृक्तमन्नं विषमपहाय शक्यं मधुमात्रमुपादातुम्। तस्माच्चेदं सुखस्यात्यन्तं प्रत्याख्यानमपि तु सुख एव दुःखभावनमात्रमुपदिश्यते ऋषिणेति।

२ सूत्रमवतारयति—अत्रेति। 'अत्र' सुखे दुःखभावना कार्येत्यस्मिन्नुपदेशे, तत्समर्थनाय 'हेतुरुपादीयते' सूत्रकारेणेत्यर्थः।

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः[1] ॥ ५५ ॥**

जन्म–जायत इति–शरीरेन्द्रियबुद्धयः । शरीरादीनां संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः । विविधा च बाधना–हीना मध्यमा उत्कृष्टा चेति । उत्कृष्टा नारकिणाम् । तिरश्चां तु मध्यमा । मनुष्याणां तु हीना । देवानां हीनतरा वीतरागाणां च । एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते । दुःखसंज्ञाव्यवस्थानात्सर्वलोकेष्वनभिरतिसंज्ञा भवति । अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते । तृष्णाप्रहाणात्सर्वदुःखाद्विमुच्यत इति । यथा विषयोगात्पयो विषमिति बुध्यमानो नोपादत्ते । अनुपाददानो मरणदुःखं नाप्नोति ॥ ५५ ॥

दुःखोद्देशस्तु[2] न सुखस्य प्रत्याख्यानम् । कस्मात् ?

**न, सुखस्याप्यन्तरालनिष्पत्तेः[3] ॥ ५६ ॥**

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम् । कस्मात् ? सुखस्याप्यन्तरालनिष्पत्तेः । निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणाम् । तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

अथापि—[4]

**बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः[5] ॥ ५७ ॥**

सुखस्य दुःखोद्देशेनेति प्रकरणात् । पर्येषणं–प्रार्थना–विषयार्जनतृष्णा । पर्येषणस्य दोषो–यदयं वेदयमानः प्रार्थयते तस्य प्रार्थितं न सम्पद्यते, सम्पद्य

---

१ सूचितं हेतुमाह–विविधेति सूत्रम् । 'जन्मनः' शरीरादेः 'उत्पत्तिः' मा 'दुःखम्' इत्येव भावयितव्या–कुतः–विविधबाधनायोगादिति योजना ।

२ सर्वं दुःखमिति भावनापदेशस्य यथोक्तमेव तात्पर्यं न पुनः सुखस्यात्यन्तप्रत्याख्यानमित्येव द्रढयन् पुनराह दुःखोद्देश इति ।

३ तत्रोत्तरम्–न सुखस्येति सूत्रम् । न 'सुखस्यात्यन्तप्रत्याख्यानम् कुतः– सुखस्यापि दुःखानामन्तरालेषु 'निष्पत्तेः' इति योजना ।

४ सुखस्यात्यन्तप्रत्याख्यानं न सम्भवतीत्येतस्मिन्नर्थे हेत्वन्तरमवतारयति–अथापीति ।

५ तदेव हेत्वन्तरमाह–बाधनाऽनिवृत्तेरिति सूत्रम् । अप्रतिषेधः 'अप्रत्याख्यानं (सुखस्येति शेषः)–कुतः (सुखं) 'वेदयतः' अनुभवतः–'पर्येषणदोषात्' तृष्णाया अनुवर्तनात्–'बाधनानिवृत्तेः' बाधनाबुद्धेः 'अनिवृत्तेः' इति योजना ।

वा विपद्यते, न्यूनं वा सम्पद्यते, बहु प्रत्यनीकं वा सम्पद्यते—इत्येतस्मात्पर्येषणदोषान्नानाविधो मानसः सन्तापो भवति। एवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः। बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुपदिश्यते। अनेन कारणेन दुःखं जन्म, न तु सुखस्याभावादिति।

अथाप्येतदनूक्तम्—

कामं कामयमानस्य यदा कामः समृध्यति।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते॥

'अपि चेदुदनेमि समन्ताद् भूमिमिमां लभते सगवाश्वां, न स तेन धनेन धनैषी तृप्यति किन्नु सुखं धनकाम' इति॥ ५७॥

दुःखविकल्पे सुखाभिमानाच्च॥ ५८॥

दुःखसंज्ञाभावनोपदेशः क्रियते। अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते—न सुखादन्यन्निःश्रेयसमस्ति। सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति। मिथ्यासङ्कल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते। संरक्तः सुखाय घटते। घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते तं दुःखविकल्पं सुखमित्यभिमन्यते। सुखाङ्गभूतं दुःखम्। न दुःखमनासाद्य शक्यं सुखमवाप्तुम्। तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व चेति सन्धावतीति संसारं नातिवर्तते। तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते—दुःखानुषङ्गाद् दुःखं जन्मेति, न सुखस्याभावात्।

"यद्येवं, कस्माद् दुःखं जन्मेति नोच्यते? सोऽयमेवं वाच्ये यदेवमाह दुःखमेव जन्मेति—तेन सुखाभावं ज्ञापयतीति"।

जन्मविनिग्रहार्थीयो वै खल्वयमेवशब्दः। कथम्? न दुःखं जन्मस्वरूपतः, किन्तु दुःखोपचारात्। एवं सुखमपीति। एतदनेनैव निवर्त्यते न तु दुःखमेव जन्मेति॥ ५८॥

---

१ नन्वयं यद्यप्यन्तराले सुखान्यनुभवति तथापि दुःखसम्भेदमाकलयन्ननुपदिष्टोऽपि स्वयमेव निवर्त्स्यति—कृतमस्य दुःखभावनोपदेशेनेत्यत आह—दुःखविकल्प इति सूत्रम्। दुःखस्य विविधे कल्पे (निषिद्धहिंसाभोजनादिरूपे) सुखाभिमानो दृश्यत एवाविवेकिनाम्। अत एवोपदेशस्यावसर इत्याशयः।

## (२४) अपवर्गपरीक्षाप्रकरणम् ।

दुःखोद्देशानन्तरमपवर्गः[१] । स प्रत्याख्यायते[३]—

"ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः" ॥ ५९ ॥

"ऋणानुबन्धान्नास्त्यपवर्गः । 'जायमानो ह वै ब्राह्मणस्त्रिभिरृणैर्ऋणवान् जायते–ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः'—इति ऋणानि । तेषामनुबन्धः स्वकर्मभिः सम्बन्धः । कर्मसम्बन्धवचनात्–'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चे'ति 'जरया ह वा एष तस्मात्सत्राद्विमुच्यत मृत्युना ह वेति' । ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः ।

"क्लेशानुबन्धान्नास्त्यपवर्गः । क्लेशानुबद्ध एवायं म्रियते, क्लेशानुबद्धश्च जायते । नास्य क्लेशानुबन्धविच्छेदो गृह्यते" ।

"प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः । जन्मप्रभृत्ययं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते । तत्र यदुक्तं–'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति तदनुपपन्नमिति" ॥ ५९ ॥

---

१ क्रमप्राप्तमपवर्गपरीक्षामुपक्रमते–दुःखेति ।

२ अपवर्ग इति–उद्दिष्टो लक्षितश्चेति शेषः ।

३ तत्र तावत्पूर्वपक्षं प्रस्तौति–स प्रत्याख्यायत इति ।

४ नास्त्यपवर्ग इति पूर्वपक्षः । तत्र सूत्रम्–ऋणेति । नास्त्यपवर्ग इति प्रतिज्ञावाक्यम् । तत्र त्रयो हेतवः–ऋणानुबन्धात्–क्लेशानुबन्धात्–प्रवृत्त्यनुबन्धादिति ।

५ 'क्लेशानुबन्धान्नास्त्यपवर्ग' इति द्वितीयं सौत्रवाक्यम् । 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' इति योगसूत्रम् । आजन्मसमयादा च मरणात् पुरुषोऽविद्यादिभिः क्लेशैर्ग्रस्त एव वर्तते । एत एव च क्लेशा जीवस्य संसारनिदानभूताः । तथा चामरणं क्लेशैर्ग्रस्तत्वात्पुरुषस्यानुच्छिन्ननिदानः संसारो न शक्य उच्छेत्तुमित्यर्थः ।

६ 'प्रवृत्त्यनुबन्धान्नास्त्यपवर्ग' इति तृतीयं सौत्रवाक्यम् । जन्मसमयमारभ्य मरणपर्यन्तं वाग्बुद्धिशरीरारम्भरूपया प्रवृत्त्या पराक्रान्त एव जीवो वर्तते–न च प्रवृत्तिनिवृत्तिमन्तरेणापवर्गसम्भव इति स्पष्टीकृतं प्रथमाध्यायस्थप्रथमाह्निके द्वितीयसूत्रे । एवं चापवर्गो न सम्भवत्येवेत्यर्थः ।

अत्राभिधीयते । यत्तावद्दणानुबन्धादिति ऋणैरिव ऋणैरिति—

**प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः॥६०॥**

ऋणैरिति नायं प्रधानशब्दः । यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः । न चैतदिहोपपद्यते–प्रधानशब्दानुपपत्तेः । गुणशब्देनायमनुवादः ऋणैरिव ऋणैरिति । प्रयुक्तोपमं चैतद् यथाऽग्निर्माणवक इति । अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाऽग्निशब्दो माणवके । कथं गुणशब्देनानुवादः ? निन्दाप्रशंसोपपत्तेः । कर्मलोपे ऋणीव ऋणदानान्निन्द्यते, कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते, स एवोपमार्थ इति ।

जायमान इति गुणशब्दो विपर्ययेऽनधिकारात् । 'जायमानो ह वै ब्राह्मण' इति च गुणशब्दो–गृहस्थः सम्पद्यमानो जायमान–इति । यदायं गृहस्थो जायते तदा कर्मभिरधिक्रियते । मातृतो जायमानस्यानधिकारात् । यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते । अर्थिनः शक्तस्य चाधिकारात् । अर्थिनः कर्मभिरधिकारः, कर्मविधौ कामसंयोगस्मृतेः –'अग्निहोत्रं जुहुयात्स्वर्गकाम ' इत्येवमादि । शक्तस्य च प्रवृत्तिसम्भवात् । शक्तस्य कर्मभिरधिकारः –प्रवृत्तिसम्भवात् । शक्तः खलु विहिते कर्मणि प्रवर्तते नेतर इति । उभयाभावस्तु प्रधानशब्दार्थे । मातृतो जायमाने कुमारे उभयमर्थिता शक्तिश्च न भवतीति ।

न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन । तत्र लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारकमेवं ब्रूयात्–अधीष्व यजस्व ब्रह्मचर्यं चर–इति । कुत एव ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति ? न खलु वै नर्तकोऽन्धेषु प्रवर्तते न गायनो बधिरेष्विति ।

---

१ सिद्धान्तमुपक्रमते अत्राभिधीयत इति ।

२ तत्रादौ पूर्वपक्षायप्रथमवाक्यस्य तात्पर्यं सिद्धान्तानुगुणं वर्णयति–यत्तावदिति ।

३ यत्तावद्यावज्जीवमृणमनुवर्तत इति श्रुतिवाक्येषु वर्णितं तत्र ऋणशब्दो गौणार्थो न मुख्यार्थ इति सोऽत्र सिद्धान्तं संक्षेपेण सूचयति– ऋणैरिवेति ।

४ ऋणशब्दस्यौपचारिकत्वं साधयति–प्रधानेति सूत्रम् । यत्र यत्र शब्दस्य मुख्यार्थानुपपत्तिस्तत्र तत्र गौण एवार्थः परिगृह्यते–एवं चोदाहृतं ऋणवाक्यं निन्दाप्रशंसापरतया नेतव्यमित्यर्थः ।

उपदिष्टार्थविज्ञाता चोपदेशविषय । यश्चोपदिष्टमर्थं विजानाति स प्रत्युपदेश क्रियते, न चैतदस्ति जायमानकुमारक इति ।

गार्हस्थ्यलिङ्ग च मन्त्रब्राह्मणं कर्माभिवदति । यच मन्त्रब्राह्मण कर्माभिवदति तत्पत्नीसम्बन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नम् । तस्माद् गृहस्थोऽय जायमानोऽभिधीयत इति ।

आर्थित्वस्य चाविपरिणामे जरामर्यवादोपपत्ति । यावच्चास्य फलेनार्थित्व न विपरिणमते–न निवर्तते, तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्तं प्रतीति ।

' जरया ह वा ' इत्यायुपस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचन–जरया ह वा एप एतस्माद्विमुच्यते–इति । आयुपस्तुरीय चतुर्थं प्रव्रज्यायुक्त जरेत्युच्यते । तत्र हि प्रव्रज्या विधीयते । अत्यन्तजरासयोगे ' जरया ह वा ' इत्यनर्थकम् । 'अशक्तो विमुच्यते' इत्येतदपि नोपपद्यते । स्वयमशक्तस्य वाह्या शक्तिमाह–'अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीत , क्षीरहोता वा जुहुयाद्धनेन स परिक्रीत' इति ।

अथापि विहित वानूद्येत कामाद्वार्थ परिकल्प्येत । विहितानुवचन न्याय्यमिति । ऋणवानिवास्वतन्त्रो गृहस्थ कर्मसु प्रवर्तत इत्युपपन्न वाक्यस्य सामर्थ्यम् । फलस्य हि साधनानि प्रयत्नविषयो न फलम् । तानि सम्पन्नानि फलाय कल्पन्ते । विहित च जायमान विधीयते च जायमानम् । तेन य सम्बद्ध्यते सोऽयं जायमान इति ।

---

१ तदनन गार्हस्थ्यात् पूर्वावस्था ऋणानुबद्धा न भवतीत्युक्तम् । सम्प्रत्युत्तरावस्थाऽपि न ऋणानुबद्धेत्याह–अथित्वस्येति । यदा चार्थिन एव कर्मस्वधिकारस्तदाऽर्थित्वस्य ' अविपरिणामे ' अनिवृत्तावेव ' जरामर्यवाद ' उपपद्यते इत्यर्थ. ।

२ सक्षेपेणोक्त विस्तरेणोपपादयति–यावच्चास्येति । यावत्कालपर्यन्त पुरुषस्य फलेच्छा वर्तते तावत्कालपर्यन्तमेवास्य तत्तत्फलजनककर्मसु प्रवृत्तिस्तावत्कालपर्यन्तमेवैन प्रति पूर्वपक्षोदाहृतस्य ' जरामर्य वा एतत्सत्र यदग्निहोत्रम् ' इत्यादिवाक्यस्योपपत्तिरित्यर्थ । तेन फलवासनावत्त्वमेवोक्तकर्माधिकारहेतुर्न प्राणधारणमात्रमिति यदुक्तम् ' ऋणापाकरणेन वय पर्यवसानान्नास्ति मोक्षावसर ' इति तदपाकृत भवतीत्याशय ।

अयमभिप्राय । न तावज्जायमान इत्यादिवाक्ये विधिविभक्तिरस्ति । तेन अन्यत्र विहितस्यानुवाद एवायमिति स्वरसतः प्रतीयते । यदि तु तस्यार्थसिद्धि-

"प्रत्यक्षविधानाभावादिति चेद्" न, प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति। "प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाश्रमान्तरमभविष्यत्तदपि व्यधास्यत् प्रत्यक्षत, प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति"। न, प्रतिषेधस्यापि प्रत्यक्षतो विधानाभावात्—न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते। न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम' इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति। अधिकाराच्च विधानं विद्यान्तरवत्। यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थान्तराभावात्, एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति।

ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते। ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति। ऋचश्च तावत्—

> कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः।
> अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥
> न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः॥

---

वाक्यान्तराद्वा प्रमाणान्तराद्वा कथमपि न कल्प्येत तदा 'वचनानि त्वपूर्वत्वादिति' न्यायेन विधित्वमस्य कल्प्यत। सन्ति तु शतशस्तदर्थविधायकानि वाक्यानि साक्षाद् विधिविभक्तिमन्तीति—को जानिच्छामात्रेण विध्यर्थतां कल्पयेत्। तस्माद्विहितानुवाद एवेदमिति न्याय्यम्। एवञ्च जायमानशब्दो गौणार्थ एव नय इति युक्तमुत्पश्याम इति।

१ यदुक्तमायुषश्चतुर्थे भागे प्रव्रज्या विधीयत इति—तदमृष्यमाणः शङ्कते—प्रत्यक्षेति।

२ शङ्कां परिहरति— न, प्रतिषेधस्येति।

३ शङ्कां विभजते—प्रत्यक्षत इति। तथाचोक्तं गौतमाद्ये धर्मशास्त्रे— 'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति'—इति शङ्काशयः।

४ निराकरणं विभजते— न, प्रतिषेधस्येति। स्मृतीतिहासपुराणानि तावदविवादं विदधति चातुराश्रम्यं उपलभ्यन्ते। तत्र विहितानां प्रतिषेधा यदि प्रत्यक्षश्रुतौ कुत्राप्युपलभ्येत भवेयुस्तान्यप्रमाणानीति। न तु चातुराश्रम्यप्रतिषेधः कुत्रापि साक्षाच्छ्रुतावुपलभ्यते। तस्मात् स्मृत्यादिविहितं चातुराश्रम्यं श्रुत्याऽप्रतिषिद्धं न शक्यं परित्यक्तुमित्यर्थः।

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति।
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।
( वाजसनेयिसंहिता ३१।१८। तैत्तिरीयारण्यक ३।१२।७ )
अथ ब्राह्मणानि—

"त्रयो धर्मस्कन्धा यज्ञो[1]ऽध्ययनं दानमिति प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एवैते पुण्यलोका भवन्ति। ब्रह्मसंस्थो[2]ऽमृतत्वमेति। (छान्दोग्योपनिषद् २।२३।१)," "एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति" (बृहदारण्यक ४।४।२२)। "अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्[3]भवति। यत्क्रतुर्भवति तत्कर्म कुरुते। यत्कर्म कुरुते तदभिसम्पद्यते[4]" ( बृहदारण्यक ४।४।५ ) इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति "इति नु कामयमानो[5]ऽथाकामयमानो योऽकामो निष्काम[6] आप्तकाम आत्मकामो[7] न तस्य प्राणा उत्क्रामन्ति[8] ब्रह्मैव सन् ब्रह्माप्येती"ति।

तत्र यदुक्तम्[9]—ऋणानुबन्धादपवर्गाभाव-इत्येतदयुक्तमिति। 'ये[10] चत्वारः पथयो देवयाना' ( तैत्तिरीयसंहिता ५।७।२।३ ) इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः ॥ ६० ॥

---

१ यज्ञ इत्यादिना गृहस्थाश्रमो दर्शितः। तप एवेति वानप्रस्थाश्रमः। ब्रह्मचारीति ब्रह्मचर्याश्रमः। एषामाश्रमाणामभ्युदयलक्षणं फलमाह-सर्व एवैत इति।

२ चतुर्थाश्रममाह—ब्रह्मसंस्थ इति।

३ तत्क्रतुरिति। 'क्रतुः' सङ्कल्पः।

४ तदभिसम्पद्यत इति। तत्कर्मानुसार्यवस्थामिमं जन्मेत्यर्थः।

५ कामयमान इति। कामयमानो य आसीत् स एवाथाकामयमानो भवति।

६ अकामयमानः काम परिहरन् तत्परिहारसिद्धौ सोऽकामयमानः तस्य व्याख्यानं—निष्काम इति।

७ आत्मकाम इति। कैवल्योपेतात्मकामस्तत्प्राप्त्या 'आप्तकामो' भवति।

८ न तस्य प्राणा इति। शाश्वतो भवतीत्यर्थः।

९ प्रकृतमुपसंहरति—तत्र यदुक्तमिति।

१० अपरामपि चातुराश्रम्याभिधायिनीं श्रुतिमाह-ये चत्वार इति। एवं च न गार्हस्थ्यमात्रैकाश्रम्यपक्षः साधुरिति निर्गलितोऽर्थः।

फलार्थिनश्चेदं[1] ब्राह्मणं "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च"[2]–इति । कथम्?

**समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥**

'प्राजापत्यामिष्टिं[3] निरूप्य तस्यां सर्ववेदसं हुत्वा आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेत्' इति श्रूयते । तेन[4] विजानीमः –प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयत–इति ।

एवं च ब्राह्मणानि–'सोऽन्यद् व्रतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमिति होवाच–प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणि इति । अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज–इति' (बृहदारण्यकोपनिषद्)॥ ६१॥

**पात्रचयान्तानुपपत्तेश्च[5] फलाभावः ॥ ६२ ॥**

जरामर्ये[6] च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि

---

१ फलार्थिनो गृहस्थस्यैव जरा पर्यन्तमग्निहोत्राद्यनुष्ठानं जरामर्यवाक्येनोच्यत इति गतसूत्रस्य फलितार्थं ह्यवान्तरविधित्सया स्मारयति–फलार्थिन इति ।

२ तत्रोत्तरम्–समारोपणादिति सूत्रम् । आत्मन्यग्नीनां 'समारोपणात्' ऋणानुबन्धनं अपवर्गस्य 'अप्रतिषेधः' प्रतिषेधोऽयुक्त इत्यर्थः ।

३ सूत्रार्थमाह प्राजापत्यामिति । साग्निकस्य चतुर्थाश्रमप्रवेशविधानमेतत् । मनुरप्याह—

प्राजापत्यां निरूप्येष्टिं सार्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् । इति । ६–३८

४ किमनेनेत्यत आह–तेनेति । उक्तायामिष्टौ सर्वस्वदानं तदैव सम्भवति यदा पुरुषः पुत्रधनलोकसम्बन्धिनीभ्य इच्छाभ्यो विनिर्मुक्तः फलार्थित्वादपैति, एवञ्च फलार्थिन एव गार्हस्थ्यं तत्सहचारिणो यागादिधर्माः निवृत्ते च फलार्थित्वे गार्हस्थ्यमपैति अपेते च गार्हस्थ्ये ते धर्मा अपियन्ति तदैव चाग्नीनामात्मनि समारोपणमित्युक्तवाक्यात्सिद्धमित्यर्थः ।

५ स्वपक्षे साधकान्तरमाह–पात्रचयेति सूत्रम् ।

६ सूत्रार्थमाह–जरामर्य इति । साग्निकस्य मरणे तदग्निहोत्रसम्बन्धिसकलयज्ञीयपात्राणि तस्य शरीरेण सहैव दहन्ति इति विधिः । एवं सति जरामर्यमग्निहोत्रमिति *यदि सर्वपुरुषसाधारणं भवेन्न तु फलार्थिगृहस्थमात्रपरम्–तदापि* यज्ञीयसकलपात्रदहनस्य सर्वेषां प्राप्तौ चतुर्थाश्रमस्थस्यापि तथात्वम् ।

कर्माणीति प्रसज्यते । तत्रैषणाव्युत्थानं न श्रूयेत-'एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति' (बृहदारण्यकोपनिषद्) एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्त इति नाविशेषेण कर्तुः प्रयोजकं फलं भवतीति ।

चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः । "तदप्रमाणमिति चेत्" न, प्रमाणेन प्रामाण्याभ्यनुज्ञानात् । प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते 'ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद' इति । तस्मादयुक्तमेतदप्रामाण्यमिति । अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः । द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति ।

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम् । अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति । यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः । तत्रैकेन न सर्वं व्यवस्थाप्यत इति, यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥ ६२ ॥

यत्पुनरेतत् 'क्लेशानुबन्धस्याविच्छेदा'दिति—

## सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते तथापवर्गेऽपीति । एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति ॥ ६३ ॥

---

१ ननु भवत्वेवं का हानिरित्यत आह—तत्रैषणेति । प्रव्रजितस्य चतुर्थाश्रमस्थस्यापि शरीरेण सह यज्ञीयपात्रदहनं यथावश्यकं तर्ह्यामरणं तेनापि सकलानि यज्ञीयपात्रादीन्यात्मनः सकाशे रक्षणीयान्येव प्राप्नुवन्ति । एवं च सति कुतस्तस्य प्रव्रजनात् प्राक् विहितमेषणाभ्यो व्युत्थानं सर्वस्वप्रदानं चेत्येते सर्व एव विषयः प्रकुप्येरन्नित्याशयः ।

२ उक्तैषणाव्युत्थानविधायकं ब्राह्मणवाक्यमुदाहरति—एतद्ध स्मेति ।

३ पूर्वपक्षसूत्रोक्तमृणानुबन्धादपवर्गाभावमपाकृत्य क्लेशानुबन्धादपवर्गाभावं इति मतमपाकरिष्यन् तदनुवदति—यत्पुनरिति ।

यद्यपि 'प्रवृत्त्यनुबन्धा'दिति—

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥**

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय । प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म । तच्च तृष्णाकारितम् । तस्यां प्रहीणायां पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः ।

"कर्मवैफल्यप्रसङ्ग इति चेत्"—न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात् । पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते, न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते । सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्त इति ॥६४

**"न क्लेशसन्ततेः स्वाभाविकत्वात्" ॥ ६५ ॥**

"नोपपद्यते क्लेशानुबन्धविच्छेदः । कस्मात्? क्लेशसन्ततेः स्वाभाविकत्वात् । अनादिरियं क्लेशसन्ततिः । न चानादिः शक्य उच्छेत्तुमिति" ॥६५॥

अत्र कश्चित्परीहारमाह—

**प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥**

यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥ ६६ ॥

अपर आह—

**अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥**

यथाऽनादिरणुश्यामता अथ चाग्निसंयोगादनित्या तथा क्लेशसन्ततिरपीति ।

मतं खलु धर्मो नित्यत्वमनित्यत्वं च । तत्त्वं भावेऽभावे भाक्तमिति ।

---

१ प्रवृत्त्यनुबन्धादपवर्गाभाव इति पूर्वपक्षोक्तं तृतीयहेतुमपाकरिष्यन् अनुवदति—यद्यपीति ।

२ क्लेशाभावमसहमानः पूर्वपक्ष्याह—न क्लेशसन्ततेरिति सूत्रम् ।

३ अभावदृष्टान्तोपादानमसहमानः उक्तामेव शङ्कामपर एकदेशी भावमेव दृष्टान्तयित्वा परिहरति तत्परिहारमवतारयति—अपर इति ।

४ परिहारमाह—अणुश्यामतेति सूत्रेण ।

५ सिद्धान्ती स्वमतेन शङ्कां परिहरिष्यन् प्रथमं तावदेकदेशिमतद्वयं दूषयितुमुपक्रमते । तत्रादौ प्रथममेकदेशिनं दूषयति मतं खल्विति । नित्यत्वानित्यत्वादयो धर्मा भावरूपस्यैव पदार्थस्य सम्भवन्ति नाभावरूपस्य । यत्र क्वाप्युपलभ्यतेऽभावस्य नित्यत्वाद्युक्तिस्सा गौण्येवेति न युक्तमभावदृष्टान्तोपादानमित्यर्थः ।

अनादिरणुश्यामतेति हेत्वभावादयुक्तम् । अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति ॥ ६७ ॥

अथ तु समाधि —

## न, सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति समुच्चय । मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते । कर्म च निकायनिर्वर्तक नैयमिकान् रागद्वेषमोहान्निर्वर्तयति, नियमदर्शनात् । दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुल कश्चिद्द्वेषबहुल कश्चिन्मोहबहुल इति । इतरेतरनिमित्ता

---

१ द्वितीयमेकदेशिन दूषयति–अनादिरिति । अणुश्यामता काया पृथिवीरूपत्वात् लोहितादिवदिति प्रत्युतानित्यत्वसाधनमेवाणुश्यामताया भवति–न भवति यथा कोऽपि हेतुस्तस्य नित्यत्वसाधनमित्यर्थ ।

२ नन्वनुत्पत्तिमत्त्वादेव सिद्ध्यति नित्यत्वमणुश्यामताया इत्यत आह–अनुत्पत्तीति । यद्यदनुत्पत्तिधर्मक तत्सर्वं नित्यमेवत्येतादृशी व्याप्तिर्नास्तीत्यर्थ । अप्रयत्नपूर्वकत्वमात्रेण त्वणुश्यामतादावनादिताव्यवहार न तन्नित्यतयेति हृदयम् ।

३ परम समाधिमाह–न सङ्कल्पेति सूत्रम् । उत्पत्तिमत्त्वादेव रागादीना न नित्यत्वमित्यर्थ ।

४ सूत्र व्याचक्षाण सूत्रस्थचकारेण समुच्चित हेत्वन्तरद्वयं सूचयति–कर्मनिमित्तत्वादिति । 'समुच्चय' इति अनुक्तस्येति शेष ।

५ तत्राद्य हेतु सङ्कल्पनिमित्तत्वादिति विभजते–मिथ्यासङ्कल्पेभ्य इति । यद्यप्यनुभूतविषयप्रार्थना 'सङ्कल्प' तथाऽपि तस्य पूर्वभागोऽनुभवो ग्राह्य — प्रार्थनाया रागत्वात् । तेन मिथ्यानुभव एवात्र सङ्कल्पपदेन विवक्षित । एवं च मिथ्यानुभवादुत्पद्यन्ते रागादयो दोषा इत्यर्थ ।

६ नन्वेकस्मान्मिथ्याज्ञानात्कुतो नानारागादिकार्यवैचित्र्यमित्यत आह–रञ्जनीयेति । भव्यगेयादिषु पाठात् कर्तरि कृत्यप्रत्यय –तेन रञ्जककोपकविमोहकेभ्यो मिथ्याज्ञानेभ्यो यथाक्रम रागद्वेषमोहा उत्पद्यन्त इत्यर्थ, पर्यवसित ।

७ अयमभिप्राय । कर्म च निकायनिर्वर्तक तत्त्वज्ञानकृतान्मिथ्याज्ञानरूपसङ्कल्पविघाताच्च रागाद्युत्पत्तिनिमित्तं भवति । सर्वेषा रागादीना मिथ्याज्ञानमेव निमित्तम् । कर्माणि तु निकायनियमेन रागादीन् प्रवर्तयन्तीति कर्मनिमित्तत्वमुक्तमिति ।

च रागादीनामुत्पत्तिः । मूढो रज्यति, मूढः कुप्यति, रक्तो मुह्यति, कुपितो मुह्यति ।

सर्वमिथ्यासङ्कल्पानां तत्त्वज्ञानादनुत्पत्तिः । कारणानुत्पत्तौ च कार्यानुत्पत्तेरिति,—रागादीनामत्यन्तमनुत्पत्तिरिति ।

अनादिश्च क्लेशसन्ततिरित्ययुक्तम् । सर्व इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयः । न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात् । न चैवं सत्यनुत्पत्तिधर्मकं किञ्चिद्व्ययधर्मकं प्रतिज्ञायत इति । कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति । सुखदुःखसंवित्तिः फलं तु भवतीति ॥६८॥

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्याऽऽद्यमाह्निकम् ।

---

१ ननु यथा रागादयः सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या निवर्तन्ते एवं सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या फलमपि मा भूदित्यत आह—सुखदुःखेति । कर्माशयप्रपञ्चमुच्छेत्तुम् अमूढोऽप्यसक्तोऽप्यद्विष्टोऽपि—मूढ इव सक्त इव द्विष्ट इवतत्फलं भुङ्क्त इति रागाद्यनपेक्षमेव कर्म स्वफलं जनयति । तेनासौ फलोपभोगो न बन्धहेतुः । मूढादीनां तु भवत्येव बन्धहेतुः फलोपभोगः । न च तादृशो रागादिसहायैः कर्मभिः क्रियते न रागादिनिरपेक्षैरित्यवदातम् ।

# अथ चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।

" किं नु खलु भो यावन्तो विषयास्तावत्सु प्रत्येकं तत्त्वज्ञानमुत्पद्यते-अथ कचिदुत्पद्यत इति । कश्चात्र विशेष ? न तावदेकैकत्र यावद्विषयमुत्पद्यते-ज्ञेयानामानन्त्यात् । नापि कचिदुत्पद्यते-यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्ग । न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोह शक्य प्रतिषेद्धुमिति । "

मिथ्याज्ञान वै खलु मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रम् । तच्च मिथ्याज्ञान यत्र विषये प्रवर्तमान ससारबीज भवति स विषयस्तत्त्वतो ज्ञेय इति ।

" किं पुनस्तन्मि[२]थ्याज्ञानम् ? "

---

१ तदेव सशयप्रमाणप्रमेयाणि परीक्षितानि प्रयोजनादयोऽपि 'यत्र सशय स्तत्रैवमुत्तरोत्तरप्रसङ्ग' (सू० २।१।७) इत्यतिदेशेन परीक्षिता इति षोडशापि प्रमाणादय परीक्षिता । तेषां तत्त्वज्ञान निःश्रेयसाधिगमहेतुरित्युक्तम् (सू० १।१।१) । तत्रापि प्रमेयतत्त्वज्ञान साक्षान्निःश्रेयसहेतुरितरेषां तु तत्त्वज्ञानाङ्गतयेत्युक्तम् । इदमिदानी परीक्ष्यते-किं प्रत्येकमात्मादीना तत्त्वज्ञान निःश्रेयसाधिगमहेतुरुत कस्यचिदेषामेकदेशस्येति तात्पर्यम् ।

तत्र परिशुद्धि । एवं प्रथमाह्निके चतुर्दशभि प्रकरणै प्रमेयषट्क निरूपितम् । इदानीं तस्य धर्मस्तत्त्वज्ञान परीक्षणीयम्-किंलक्षणम्-किं विषय-कथमुत्पद्यते-कथ परिपाल्यते-कथ विवर्धते चेति तत्त्वज्ञानपरीक्षैवाह्निकार्थं । तत्र यस्मिन्विषये यथोत्पद्यते तत्त्वज्ञान तत्क्रमेण प्रतिपादनमिति ।

वर्धमानोपाध्यायाश्च न्यायनिबन्धप्रकाशे-तत्त्वज्ञानस्यानुद्दिष्टस्यालक्षितस्य कथ परीक्षा प्रवर्तते कथ चाह्निकद्वयस्य समानविषयत्व येनैतयोरेकाध्यायावयवत्वमित्याशङ्क्य तत्त्वज्ञानमुद्दिष्टमाद्य सूत्रे लक्षित च द्वितीये सूत्रे-कार्यरूपप्रमेयपरीक्षैव चतुर्थाध्यायविषयस्तत्त्वज्ञानमपि कार्यरूपमेवेत्यनयोरेव समानविषयतेत्युक्तवन्त । तथा च तत्त्वज्ञानस्यापवर्गहेतुत्वादपवर्गात्प्रागेव तस्य परीक्षोचितेत्याशङ्क्य-तत्त्वज्ञानस्य परीक्षणात्प्राक् येषां तत्त्वज्ञानमपेक्षित तेषां सर्वेषां प्रमेयाणां परीक्षणमुचितमपवर्गश्च प्रमेयविशेष एवातो युक्तमेव तस्य परीक्षण प्रमेयेष्विति समाहितवन्त ।

२ पृच्छति-किं पुनरिति । सन्ति खल्वस्मिन् विषये वादिनां विप्रतिपत्तय विधूतविविधनामरूपप्रपञ्चोपप्लवविशुद्धचिदानन्दघनाद्वैतब्रह्मसाक्षात्कारस्तत्त्वज्ञान-तद्विरुद्धमेव मिथ्याज्ञानमिति वेदान्तिन । सत्त्वपुरुषान्यताख्यातिरेव तत्त्वज्ञान-तद्विरोधि मिथ्याज्ञानमिति साङ्ख्या । धर्मपुद्गलनैरात्म्यज्ञानमेव तत्त्वज्ञान तद्विरुद्ध मिथ्याज्ञानमिति केचिद्बौद्धा । शरीरेन्द्रियाद्यनित्यव्यतिरिक्तनित्यात्मदर्शन तत्त्वज्ञान तद्विरुद्ध मिथ्याज्ञानमिति वृद्धा । तदेव विप्रतिपत्तेरेवायम्प्रश्न इत्यवधेयम् ।

अनात्मन्यात्मग्रहः—अहमस्मीति मोहोऽहङ्कार इति । अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति ।

"किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः ?"

शरीरेन्द्रियमनोवेदनाबुद्धयः ।

"कथं तद्विषयोऽहङ्कारः संसारबीजं भवति ?"

अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदेनात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते, तदुपाददानो जन्ममरणाय यतते, तेनावियोगान्नात्यन्तं दुःखाद्विमुच्यत इति । यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति, स दुःखं परिजानाति । परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत् । एवं दोषान् कर्म च दुःखहेतुरिति पश्यति । न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति । प्रहीणेषु च दोषेषु 'न प्रवृत्तिः प्रतिसन्धानाये'त्युक्तम्[2] ।

---

१ न्यायसिद्धान्तेनोत्तरम्—अनात्मनीति । इदमत्राकूतम् । न तावद् वेदान्ताभिमतमद्वैतानन्दघनात्मज्ञानं तत्त्वज्ञानम्, भेदस्य प्रत्यक्षसिद्धस्यासति बाधकेऽपह्नोतुमशक्यत्वात् । न च प्रकाशानन्दावात्मधर्मातिरिक्तावात्मस्वभावौ भवितुमर्हतः । "सत्यं विज्ञानमानन्दं ब्रह्मेति" श्रुतिरानन्दचैतन्यशब्दयभिप्राया भेद एव च तद्वत्तया कथंचित् सामानाधिकरण्यमुपपद्यते । अभेदे त्वानन्दविज्ञानयोस्तत्पदयोः पर्यायतया सह प्रयोगानुपपत्तिः । न च प्रकृष्टप्रकाशः सवितेत्यत्र प्रकृष्टप्रकाशयोरभेदोऽप्रकाशस्यापि प्रकर्षसम्भवात्, अप्रकृष्टस्यापि खद्योतादेः प्रकाशसम्भवात् ।

नापि साङ्ख्यसिद्धान्तो युक्तिसहः । सत्त्वपुरुषान्यताख्यातिर्हि सत्त्वस्य प्रकृतेरेवासम्भवादयुक्ता । सत्कार्यवादमूलत्वात्प्रकृतिसाधनस्य तद्वादनिराकरणेनैव सा निराकृता वदितव्या ।

धर्मपुद्गलनैरात्म्ये तु क्षणभङ्गभङ्गे नित्यात्मसद्भावकथनेनैव निराकृते । तस्मात्सुष्ठूक्तमनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहङ्कार एव मिथ्याज्ञानमिति । अस्मादेव च कारणात्सर्वस्यैवमात्माशीः कृमेरपि—'मा न भूवम् भूयासमिति' । सोऽयमीदृशोऽभिनिवेशः शरीरादीनामात्मत्वाध्यवसायो भवति नात्मतत्त्वविदुषः । स खल्वहिनिल्वयिनीमिवाहिस्ततो व्यतिरिक्तं शरीरादि पश्यन्न तत्र स्निह्यति स्नेहविरहाच्च तप्यते नाप्यनुशोचनीत्यादि तात्पर्यं स्पष्टम् ।

२ उक्तमिति । चतुर्थाध्यायद्वितीयाह्निकस्य चतुःषष्टितमसूत्र इति शेषः ।

प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषाश्च प्रहेयाः। अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानम्।

एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते। एवं च—

**दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥**

शरीरादि दुःखान्तं प्रमेयं दोषनिमित्तं, तद्विषयत्वान्मिथ्याज्ञानस्य। तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं निवर्तयति, समानविषये तयोर्विरोधात्। एवं तत्त्वज्ञानाद् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति। स चायं शास्त्रार्थसङ्ग्रहोऽनूद्यते नापूर्वो विधीयत इति ॥ १ ॥

प्रसङ्ख्यानानुपूर्वी[1] तु खलु—

**दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥ २ ॥**

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते। ते मिथ्या सङ्कल्प्यमाना रागद्वेषमोहान् प्रवर्तयन्ति। तान् पूर्वं प्रसञ्चक्षीत। तांश्च प्रसञ्चक्षाणस्य रूपादिविषयो मिथ्यासङ्कल्पो निवर्तते। तन्निवृत्तावध्यात्मं शरीरादि प्रसञ्चक्षीत। तत्प्रसङ्ख्यानादध्यात्मविषयोऽहङ्कारो निवर्तते। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन्मुक्त इत्युच्यते ॥ २ ॥

अतः परं काचित्संज्ञा हेया काचिद्भावयितव्येत्युपदिश्यते, नार्थनिराकरणमर्थोपादानं वा।

कथमिति?—

**तन्निमित्तं[2] त्ववयव्यभिमानः ॥ ३ ॥**

तेषां[3] दोषाणां निमित्तं त्ववयव्यभिमानः। सा च[4] खलु स्त्रीसंज्ञा

---

१ शरीरादिष्वनात्मस्वात्मबुद्धिर्निवर्तनीयेत्युक्तम्—तत्रादौ कस्मिन्नात्मबुद्धिर्निवर्तनीयेत्यपेक्षायां क्रमप्रदर्शनमवतारयति—प्रसङ्ख्यानेति। 'प्रसङ्ख्यानस्य' समाधिरूपस्य तत्त्वध्यानस्य 'आनुपूर्वी' क्रमः—अधुना प्रदर्श्यत इति शेषः।

२ उत्तरम्—तन्निमित्तमिति सूत्रम्। 'अवयविनि' नार्यादिशरीरे योऽभिमानः स एव दोषाणां निमित्तमित्यर्थः।

३ सूत्रार्थमाह—तेषामिति।

४ सूत्रार्थं दृष्टान्तेन स्पष्टयति—सा चेति।

सपरिष्कारा, पुरुषस्य पुरुषसञ्ज्ञा च स्त्रियाः सपरिष्कारा–निमित्तसञ्ज्ञा अनुव्यञ्जनसञ्ज्ञा च । निमित्तसञ्ज्ञा–रसनाश्रोत्रम्, दन्तौष्ठम्, चक्षुर्नासिकम् । अनुव्यञ्जनसञ्ज्ञा–इत्थं दन्ता इत्थमोष्ठावित्ति । सेयं संज्ञा कामं वर्धयति तदनुषक्तांश्च दोषान् विवर्जनीयान्, वर्जनं त्वस्याः । भेदेनावयवसञ्ज्ञा–केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसञ्ज्ञा । तामशुभसञ्ज्ञेत्याचक्षते । तामस्य भावयतः कामरागः प्रहीयते ।

---

१ यथा स्त्रीविषये पुरुषस्य ‘ इयं स्त्री ’ इति भावना भवति–सा च भावना तस्य बन्धनकारणं भवतीत्याह–सपरिष्कारेति ।

२ यथा स्त्रीविषये पुरुषस्य तथैव पुरुषविषयेऽपि स्त्रियाः अपीत्याह–पुरुषसञ्ज्ञेति ।

३ न तु केवलमियं स्त्री–अयम्पुरुष इत्येतावन्मात्रमेव बन्धनकारणं भवत्यपि तु तत्तद्विषये स्वरूपान्तरभावनैवेति प्रदर्शयितुं कामुकविषये भावनाविशेषद्वयं सूचयति–निमित्तेति । ‘ निमित्तसञ्ज्ञाऽनुव्यञ्जनसञ्ज्ञा ’ ( इत्युभयरूपा ) स्त्रीसञ्ज्ञा पुरुषस्य सपरिष्कारा ’ ( भवति ) ‘ पुरुषसञ्ज्ञा च स्त्रियाः सपरिष्कारा ’ ( भवति ) इत्यन्वयः ।

४ कामुकविषयां स्त्रीसञ्ज्ञां विशिनष्टि–निमित्तसञ्ज्ञा रसनेति । ‘ निमित्तं ’ दन्तत्वादि तद्विशिष्टा ‘ सञ्ज्ञा ’ विषयाः प्रियायाः कामुको रसनाघ्रनासिकादीनवयवान् केवलान् सम्मुग्ध इव भावयति । सैव भावनाभिप्रेता ।

५ अनुव्यञ्जनसञ्ज्ञां विशिनष्टि–अनुव्यञ्जनसञ्ज्ञा इत्थमिति । ‘ व्यञ्जनानि ’ अवयविनोऽवयवाः ( तैस्सहैव तस्योपलम्भात् ) तेषां–‘ अनुव्यञ्जनम् ’ तत्सादृश्यम्–तेन तदारोपः —‘ इत्थं दन्ता इत्थमोष्ठौ ’ इति रूपकादिद्वारेण कामुकः प्रियाया अङ्गानि भावयति । सैव भावनाऽत्राभिप्रेता ।

६ उक्तसञ्ज्ञाद्वयस्य फलमाह–सेयमिति । प्रियाया दन्तोष्ठादीनवयवान् तत्तद्रूपेणैव भावयन्नथ च तानेव दाडिमीबीजबिम्बादिरूपेण भावयन् कामुकस्तस्यामासक्तो भवतीत्यर्थः ।

७ स्त्रीविषये आसक्तिजनकसञ्ज्ञाद्वयं प्रदर्श्य तस्यैव स्त्रियाः सञ्ज्ञान्तरेण भावनया तस्यां विरक्तिमपि जनयतीति प्रदर्शयितुं तदेव सञ्ज्ञान्तरमाह–वर्जनमिति । ‘अस्याः ’ स्त्रियाः ‘ वर्जनम् ’–वर्जयतीति वर्जनम्–परित्यागोपायः तस्या एव ‘अवयवसञ्ज्ञा ’ भवतीत्यर्थः ।

८ का चेयमवयवसञ्ज्ञेति विशदयति–केशेति ।

९ उच्चार इति–उत्सर्गो मूत्रपुरीषादि ।

सत्येन च द्विविधे[1] विषये काचित्संज्ञा भावनीया काचित्परिवर्जनीयेत्यु पदिश्यते। यथा विषसम्पृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञा प्रहाणायेति ॥ ३ ॥

( २ ) प्रासङ्गिकमवयवावयविप्रकरणम्।

अथेदानीम[2]र्थं निराकरिष्यताऽवयविनिराकरणमुपपाद्यते—

" विद्याऽविद्याद्वैविध्यात् संशयः " ॥ ४ ॥

" सदसतोरुपलम्भाद्विद्या द्विविधा। सदसतोरनुपलम्भादविद्यापि द्विविधा। उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात्संशय। अनुपलभ्यमाने चाविद्याद्वैविध्यात्संशय। सोऽयमवयवी यद्युपलभ्यते, अथापि नोपलभ्यते, न कथञ्चन संशयान्मुच्यत इति " ॥ ४ ॥

तद[3]संशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

तस्मिन्ननुपपन्न संशय। कस्मात्? पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ॥ ५ ॥

" वृत्त्यनु[4]पपत्तेरपि तर्हि न संशयः " ॥ ६ ॥

" वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्ति। नास्त्यवयवीति " ॥ ६ ॥

---

१ परिशुद्धिकृतस्त्वाह —वस्तुतस्तु मुमुक्षो सर्वं हेयमेव (नापाद्य किञ्चिदपि) —हेये चापादेयबुद्धिविपर्यय एव—तथाऽपि द्विविध एवासाविति मुमुक्षुममुक्षुपुरुष भेदाभिप्रायेणोक्तमिति द्रष्टव्यम्।

२ तदेव स्वमतेन प्रसंख्यानोपदेशमुपवर्ण्य पराभिमत प्रसंख्यान निराकर्तुमुपन्यस्यति—अथेदानीमिति। ' अथम् निराकरिष्यता ' विज्ञानवादिना ' अवयविनिराकरण उपपाद्यते '। निमित्तानुव्यञ्जनसंज्ञयोरवयव्येव विषय —ते एते सञ्ज वर्जितु मनुभसंज्ञोपादेयेषूपदेश इति व्यवस्थापितम्—तत्राथमात्रस्याभावात् कुतो निमित्तानुव्यञ्जनसञ्ज—इति तन्निराकरणाय प्रथममवयवी निराक्रियते, पश्चात्परमाणुस्ततश्च ज्ञान मात्रमर्थरहित सिद्ध भवतीत्यभिप्रायो विज्ञानवादिन।

३ तत्र सिद्धान्ती वक्ष्यमाणमवयविनिराकरणहेतुमप्यथाधिराकरिष्यामस्तावद् द्विवादेन तावत्संशयमेव निराकरोति—तदसंशय इति सूत्रम्। 'तस्मिन् ' अवयविनि ' असंशय ' नास्त्येव संशय —कस्मात् ' पूर्वहेतुप्रसिद्धत्वात् ' पूर्वोक्तहेतुभिरवयविन साधितत्वादित्यर्थ।

४ पूर्वपक्षी स्वपक्षमिदानीं प्रतिवादिदृष्ट्येवाह—वृत्त्यनुपपत्तेरिति। अवयविनि नास्त्येव संशय इत्ययमस्माकमप्यनुमति —अवयविन वृत्त्यनुपपत्त यस्मात्तत्सत्त्वं नैवोपपद्यते तस्मात् तत्र ' न संशय ' इत्यर्थ।

तद्विभजते—

" कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः " ॥ ७ ॥

" एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्त्तते। तयोः परिमाणभेदादवयवान्तरसम्बन्धाभावप्रसङ्गाच्च। नाप्यवयव्येकदेशेन, न ह्यस्यान्येऽवयवा एकदेशभूताः सन्तीति " ॥ ७ ॥

अथावयवेष्वेवावयवी वर्त्तते—

" तेषु चावृत्तेरवयव्यभावः " ॥ ८ ॥

" न तावत्प्रत्यवयवं वर्त्तते, तयोः परिमाणभेदात्, द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात्। नाप्येकदेशेन, सर्वेष्वन्यावयवाभावात्। तदेवं न युक्तः संशयः नास्त्यवयवीति " ॥ ८ ॥

" पृथक् चावयवेभ्योऽवृत्तेः " ॥ ९ ॥

" अवयव्यभाव इति वर्तते। न चायं पृथगवयवेभ्यो वर्तते, अग्रहणात् नित्यत्वप्रसङ्गाच्च। तस्मान्नास्त्यवयवीति " ॥ ९ ॥

" न चावयव्यवयवाः " ॥ १० ॥

" न चावयवाना धर्मोऽवयवी, कस्मात्? धर्ममात्रस्य धर्मिभिरवयवैः पूर्ववत् सम्बन्धानुपपत्तेः। पृथक् चावयवेभ्यो धर्मिभ्यो धर्मस्याग्रहणादिति समानम् " ॥ १० ॥

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥११॥

---

१ सूत्रव्यास्यार्थत्रयमुक्तं वृत्तिकृता। तद्यथा-(१) नन्वास्तामवृत्तिरेवावयवीति शङ्कायां पूर्वपक्षिसूत्रमिदम्—अवयवेभ्यः पृथगवयवी नास्त्येवेति शेषः। अवयव्यभाव इत्यष्टमसूत्रादनुवर्त्तते। अवयवेषु पृथग्भावेऽवयविनो नित्यत्वप्रसङ्गः। नास्ति तु नित्यः। अतो नास्त्यवयवीति। (२) कृत्स्नैकदेशाभ्यामवयवी न वर्त्तते किन्तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिसूत्रमेतत्। अवयवेभ्यः पृथक् अवयवी नास्ति, कुतः? अवृत्तेः, अवृत्तित्वप्रसङ्गात्। तथा सति नित्यः स्यादित्यर्थः। (३) कश्चित्तु अवयवातिरिक्तोऽवयवी वर्त्ततामित्यत्र पूर्वपक्षिणः सूत्रमिदम्। पूर्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेरित्यर्थः।

२ यस्तु मन्यते—' अवयवाना धर्ममात्रमवयवी ' न त्ववयवेभ्योऽत्यन्त भिन्नोऽभिन्नो वा इति—तम्प्रत्याह पूर्वपक्षी—न चेति सूत्रम्।

३ अत्र पूर्वपक्षस्य द्वौ भागौ—अवयवानामवयविनि वृत्त्यभाव इति प्रथमः। स

किं प्रत्यवयवं कृत्स्नोऽवयवी वर्त्तते अथैकदेशेनेति, नोपपद्यते प्रश्नः, कस्मात्? 'एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेः'। कृत्स्नमित्यनेकस्याशेषाभिधानम्, एकदेश इति नानात्वे कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति ॥ ११ ॥

अन्यावयवाभावान्नैकदेशेन वर्त्तत इत्यहेतुः —

अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥ १२ ॥

अवयवान्तराभावादिति–यद्यप्येकदेशोऽवयवान्तरभूतः स्यात्तथाप्यवयवेऽवयवान्तरं वर्त्तेत नावयवीति। अन्योऽवयवीति अन्यावयवभावेऽप्यवृत्तेः, अवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः।

"वृत्तिः[2] कथमिति" चेत्? एकस्यानेकत्राश्रयाश्रितसम्बन्धलक्षणा प्राप्तिः। "आश्रयाश्रितभावः कथमिति" चेत्? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स आश्रयः। न कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते। विपर्ययस्तु कारणद्रव्येष्विति।

"नित्येषु कथमिति" चेत्? अनित्येषु दर्शनात्सिद्धम्। "नित्येषु द्रव्येषु कथमाश्रयाश्रितभाव इति" चेत्? अनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति[3]।

---

धानभ्युपगमादत्र निरस्तः। न कोऽपि नैयायिकः कारणस्यावयवस्य कार्येऽवयविनि समवायमभ्युपगच्छति। अवयविनोऽवयवेषु वृत्त्यभाव इत्यपरः। तमत्र द्वितीयं पूर्वपक्षभागमुपलक्ष्य सिद्धान्तवादी तन्निरस्यति–एकस्मिन्निति सूत्रम्। 'एकस्मिन्' अवयविनि 'भेदाभावात्' भेदघटितशब्दप्रयोगस्य अनुपपत्तेः 'अप्रश्नः' पूर्वपक्षिणोपन्यस्तस्य प्रश्नस्य नावकाश इत्यर्थः।

१ अष्टमसूत्रभाष्ये यदुक्तम्–नाप्येकदेशेन वर्ततेऽवयवी सर्वत्रान्यावयवाभावादिति–तन्निरस्यति–अन्यावयवेति। एकदेशेन चावयवी न स्वावयवेषु वर्त्तत इत्यत्र प्रतिज्ञाय 'अवयवान्तराभावात्' इति अहेतुरित्यर्थः।

२ वृत्तिरिति–वृत्तिरिति। यदि न कार्त्स्न्येन न चैकदेशेनावयविनोऽवयवेषु वृत्तिस्तर्हि किम्प्रकारिका तस्य तेषु वृत्तिरिति प्रश्नार्थः।

३ यत्र यदाश्रितं तत्रैव तस्य वृत्तिस्तस्य तदाश्रय इत्यनित्येषु द्रव्येषु गुणेषु च दृष्ट्वा नित्येष्वप्यवसेयः आश्रयानुमानेन इत्याशयः।

तस्मादवयव्यभिमानः[1] प्रतिपिध्यते निःश्रेयसकामस्य, नावयवी। यथा रूपादिषु मिथ्यासङ्कल्पो न रूपादय इति ॥ १२ ॥

'सर्वाग्रहणमवयव्यसिद्धे'रिति[2] प्रत्यवस्थितोऽप्येतदाह—

**"केशसमूहे[3] तैमिरिकोपलब्धिवत्तदुपलब्धिः" ॥ १३ ॥**

"यथैकैकः केशस्तैमिरिकेण नोपलभ्यते, केशसमूहस्तूपलभ्यते तथैकैकोऽणुर्नोपलभ्यते। अणुसमूहस्तूपलभ्यते। तदिदमणुसमूहविषयं ग्रहणमिति" ॥ १३ ॥

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥**

यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति। चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति, निकृष्यमाणं च न स्वविषयात् प्रच्यवते। सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति, गृह्णाति च केशसमूहम्। उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते। परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते, समुदितास्तु गृह्यन्ते, इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत। न जात्वर्थान्तरमणुभ्यो गृह्यत इति। ते खल्विमे परमाणवः सन्निहिता गृह्यमाणा अतीन्द्रियत्वं जहति। वियुक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्त इति। सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते द्रव्यान्तरं यद्ग्रहणस्य विषय इति।

"सञ्चयमात्रं विषय इति चेत्?"। न। सञ्चयस्य संयोगभावात्तस्य चातीन्द्रियाश्रयस्याग्रहणादयुक्तम्। सञ्चयः खल्वनेकस्य संयोगः। स च गृह्य-

---

१ प्रकरणार्थमुपसंहरति—तस्मादिति। यस्मादवयवी सर्वथा अस्त्येवेति सिद्धमतो यत्तृतीयसूत्रे प्रतिपिध्यते स 'अवयविष्वभिमानो' मिथ्याज्ञानमेव, न त्ववयव्येवेति।

२ अवयविनिराकरणवादिनो हेत्वन्तरमवतारयति—सर्वाग्रहणेति। 'सर्वाग्रहणमवयव्यसिद्धे'रित्यस्मिन् सूत्रे द्वितीयाध्याये यद्यप्यवयविनिराकरणवादी प्रत्यवस्थितः परास्तस्तथाऽप्यत्रापि प्रकरणे पञ्चमसूत्रगतपूर्वहेतुपदेन द्वितीयाध्यायार्थे स्मारितः परः पुनस्तमेवार्थमाक्षिपतीत्यर्थः।

३ अवयव्यसिद्धौ सर्वाग्रहणप्रसङ्गो यो द्वितीयाध्याये उद्भावितः सिद्धान्तिना तस्य प्रसङ्गस्य वारणमाह—केशसमूह इति सूत्रम्।

माणाश्रयो गृह्यते, नातीन्द्रियाश्रय । भवति हीदमनेन संयुक्तमिति । तस्माद् युक्तमेतदिति । गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणाद्यनुपलब्धिकारणमुपलभ्यते । तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम् । यथा नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धादीनामिति ॥ १४ ॥

अवयवावयविप्रसङ्गश्चैवमा प्रलयात् ॥ १५ ॥[1]

य खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभाव सोऽयमवयवस्यावयवेषु प्रसज्यमान सर्वप्रलयाय वा कल्पेत, निरवयवाद्वा परमाणुतो निवर्त्तेत । उभयथा चोपलब्धिविषयस्याभाव । तदभावादुपलब्ध्यभाव । उपलब्ध्याश्रयश्चाय वृत्तिप्रतिषेध । स आश्रय व्याघ्नन्नात्मघाताय कल्पत इति ॥ १५ ॥

अथापि[2]—

न प्रलयोऽणुसद्भावात् ॥ १६ ॥[3]

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभाव प्रसज्यमानो निरवयवात्परमाणोर्निवर्त्तते, न सर्वप्रलयाय कल्पते । निरवयवत्व परमाणो

---

१ अवयव्यभावपक्षे दोषान्तरमाह–अवयवावयवीति सूत्रम् । अवयवावयविविषये योऽय वृत्तिविकल्प पूर्वपक्षिणोद्भावितस्तेन सर्वाभाव एव स्यात्तथा चाश्रयव्याघातादेव स विकल्पोऽयुक्त इत्यर्थ ।

अत्र तात्पर्यकारा –अत्र त्रय पक्षा सम्भवन्ति । योऽयमवयवेष्ववयविवृत्तिविकल्पानुपपत्त्याऽवयविनोऽभावप्रसङ्ग आपाद्यते स आ प्रलयाद्वा निवर्त्तते–परमाणोर्वा–न क्वचिदपि वा निवर्त्तते–इति । तत्र प्रथमद्वितीयविकल्पावाश्रित्येद सूत्रम् । यथैव वृत्तिविकल्प स्थूले घटादौ एव तदवयवेषु तदवयवेष्वपीति तदभावात्प्रलये स्वव तिष्ठते । न च प्रलय सर्वोपाख्याविरहितो दर्शनविषय सम्भवतीति । दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते । उपलक्षण चेद्–आ प्रलयादिति । आ परमाणोरित्यपि द्रष्टव्यम् । परमाणूनामतीन्द्रियत्वेन दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य तदवस्थैव । तदिदमुक्तम्–निरवयवाद्वा परमाणुतो निवर्त्तेतेति भाष्ये ।

वृत्तिकृतस्तु एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयवेऽवयविनि च प्रसक्त 'आ प्रलयात्'–प्रलयोऽभावस्तत्पर्यन्त तथा च सर्वाभाव एव स्यात् । न कस्यापि ग्रहणम् । तस्मात् साधूक्त–सर्वाग्रहणमवयव्यसिद्धेरिति ।

२ पूर्वपक्षप्रतिषेधे हेत्वन्तरमवतारयति–अथापीति । अपि चार्थे ।

३ प्रलयमभ्युपेत्यैतदुक्तमा प्रलयादिति–वस्तुतस्तु 'प्रलय '–सर्वाभावो–नास्त्येव अणो सर्वदा सत्त्वादित्याह–न प्रलय इति सूत्रम् ।

विभागैरल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्। लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति। स चायमल्पतरप्रसङ्गो यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्त्तते। यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे इति ॥ १६ ॥

परं[1] वा त्रुटेः ॥ १७ ॥

अवयवविभागस्यानवस्थानाद्द्रव्याणामसङ्ख्येयत्वात् त्रुटित्वनिवृत्तिरिति ॥ १७ ॥

( ३ ) निरवयवत्वप्रकरणम्[3]–औपोद्घातिकम्।

अथेदानीमानुपलम्भिकः[4] सर्वं नास्तीति[5] मन्यमान आह—

"आकाशव्यतिभेदात् तदनुपपत्तिः"[6] ॥ १८ ॥

---

१ अथानन्तोऽयं विभागः कस्मान्न भवति कस्माच्च परमाणुपर्यन्त एवायमित्यत आह–परमिति सूत्रम्। त्रुटिस्त्रसरेणुरिति तात्पर्यकृतः। त्र्यणुक एवेत्यन्ये। त्रुटेः परं यदतिसूक्ष्मं स एव परमाणुरित्यर्थः।

२ सूत्रार्थमाह–अवयवविभागस्येति। त्रुटिस्त्रसरेणुरित्यनर्थान्तरमित्यत्र प्रमाणं जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम्–यदि त्रुटेः परं द्वित्रिपदकोऽवयवविभागो न विरमेत् ततोऽवयवविभागस्यानवस्थानात् सर्वद्रव्येष्ववयवानामसङ्ख्येयत्वात् त्रुटेस्त्रुटित्वमव्यापेयात् त्रुटिरपि च सुमेरुणा तुल्यपरिमाणः स्यात्–उभयोरनन्तावयववत्त्वात्।

३ एवमवयविप्रकरणं समाप्य तदुपोद्घातेन निरवयवमपि वस्तु वस्तुतोऽस्ति साधयितुं निरवयवपरीक्षाप्रकरणमारभ्यत इति परिशुद्धिकृतः। अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावनेति मतनिराकरणाय निरवयवप्रकरणमिति वृत्तिकृतः।

४ तत्र सर्वशून्यवादिनः पूर्वपक्षमवतारयति अथेदानीमिति। आनुपलम्भिकोऽत्र पूर्वपक्षमाहेत्यर्थः।

५ कः सामान्यानुपलम्भिक इत्यत आह–सर्वं नास्तीति। सर्वशून्यवादीति यावत्। चतुर्थाध्याये तावज्जगतः शून्यतोपादानता निराकृता–अधुना तु सर्वशून्यता निराक्रियत इति विवेकः।

६ तत्र पूर्वपक्षसूत्रम् आकाशेति। सावयवत्वं च परमाणोः वृत्तिविकल्पात्तदभाव' इति पूर्वपक्षसूत्रोक्तदिशा तस्याभाव एवेति शून्यतैव तत्त्वं भावानाम्–अनाश्रितोऽपि विकल्पो लोकप्रतीत्यनुसारेण कल्पनामात्रनिमित्तस्तात्त्विकीं शून्यतां गमयति, मिथ्याज्ञानानामपि तत्त्वावगमहेतुत्वदर्शनात्। यथा रेखागवयो गवयस्य प्रतिपत्तिहेतुरित्यादि पूर्वपक्षहृदयम्।

"तस्याणोर्निरवयवस्य नित्यस्यानुपपत्ति । कस्मात्? आकाशव्यतिभेदात् । अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्न । व्यतिभेदात्सावयव । सावयवत्वादनित्य इति ॥ १८ ॥

"आकाशासर्वगतत्व वा" ॥ १९ ॥

"अथैतन्नेष्यते—परमाणोरन्तर्नास्त्याकाशम्—इत्यसर्वगतत्व प्रसज्यत इति" ॥ १९ ॥

अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तद-भावः ॥ २० ॥

अन्त'रिति—पिहित कारणान्तरै कारणमुच्यते । बहि रिति च—व्यवधायकमव्यवहित कारणमेवोच्यते । तदेतत्कार्यद्रव्यस्य सम्भवति, नाणोर कार्यत्वात् । अकार्ये हि परमाणावन्तर्बहिरित्यस्याभाव । यत्र चास्य भावोऽणुकार्यं तत्, न परमाणु । यतो हि नाल्पतरमस्ति स परमाणुरिति ॥ २० ॥

शब्दसयोगविभवाच्च सर्वगतम् ॥ २१ ॥

यत्र क्वचिदुत्पन्ना शब्दा विभवन्त्याकाशे तदाश्रया भवन्ति । मनोभि परमाणुभिस्तत्कार्यैश्च सयोगा विभवन्त्याकाश । नासयुक्तमाकाशेन किञ्चिन्मूर्तद्रव्यमुपलभ्यते । तस्मान्नासर्वगतमिति ॥ २१ ॥

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्मा ॥ २२ ॥

ससर्पता प्रतिघातिना द्रव्येण न व्यूह्यते—यथा काष्ठेनोदकम् । कस्मात्? निरवयवत्वात् । ससर्पच्च प्रतिघाति द्रव्य न विष्टभ्नाति—नास्य क्रियाहेतु गुण

---

१ पूर्वपक्ष दूषयति सिद्धान्ती—अन्तर्बहिरिति सूत्रम् । अन्त शब्दो बहि शब्दश्चावयवाभिधायकौ । अत कार्यद्रव्यस्य अवष्टम्भि कारणान्तरम् कारणविशेषभूतम् अवयवमन्तरभिदधाति ततश्चाकार्ये परमाणौ न तयो सम्भव इत्यर्थ ।

२ शब्दसयोगेति सूत्रम् । सर्वगतमाकाशम् कस्मात्— शब्दसयोगविभवात्' शब्दश्च सयोगश्च तयो विभव विभुत्व मात्रिकत्वम् तस्मादित्यर्थ । अथ वा आकाशगुणस्य शब्दस्य ये सयोगास्तेषा विभुत्वादाकाश सर्वगतमित्यर्थ ।

सर्वसयोगशब्दविभवाच्च सर्वगत मिति सूत्रपाठोऽत्र वार्तिककारसम्मत । तदर्थश्च यस्मात्सर्वमूर्तसम्बन्धि सयोगा विभवन्त्याकाश तदाश्रया भवन्ति—शब्दा स्वकारणसन्निधानादुपजायमाना सर्व एवाकाशमाश्रयन्त तस्मात् सर्वगतमाकाशमिति ।

प्रतिजानाति । कस्मात्? अस्पर्शत्वात् । विपर्यये हि विष्टम्भो दृष्ट इति-स भवान् सावयवे स्पर्शवति द्रव्ये दृष्ट धर्मं विपरीते नाशङ्कितुमर्हति ।

अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध । सावयवत्वे चाणोरण्वयवोऽणुतर इति प्रसज्यते । कस्मात्? कार्यकारणद्रव्ययो परिमाणभेददर्शनात् । तस्मादण्ववयवस्याणुतरत्वम् । यस्तु सावयवोऽणुकार्यं तदिति । तस्मादणुकार्यमिद प्रतिषिध्यत इति ।

कारणविभागाच्च कार्यस्यानित्यत्व नाकाशव्यतिभेदात्[1] । लोष्टस्यावयवविभागादनित्यत्व नाकाशसमावेशादिति ॥ २२ ॥

"मूर्त्तिमता च संस्थानोपपत्तेरवयवसद्भावः" ॥ २३ ॥[2]

"परिच्छिन्नाना हि स्पर्शवता सस्थान त्रिकोण चतुरस्रं सम परिमण्डल मित्युपपद्यते । यत्तत्सस्थान सोऽवयवसन्निवेश । परिमण्डलाश्चाणवस्तस्मात्सावयवा इति" ॥ २३ ॥

"संयोगोपपत्तेश्च" ॥ २४ ॥[3]

---

१ आकाशव्यतिभेदादिति परोक्त हेतु दूषयति-कारणेति । कार्यस्य विनाश कारणाना तदवयवाना विभागादेव भवति नाकाशव्यतिभेदात् । तथा च यदि पर माणोर्विनाशोऽनित्यत्व वा स्यात् तदारम्भकावयवविभागादेव स्यात् नाकाशव्यतिभेदादित्यर्थ ।

२ पुन शून्यतावादी प्रत्यवतिष्ठते-मूर्तिमतामिति सूत्रम् । चशब्दस्त्वर्थं सिद्धान्त निवर्तयति । परमाणो. 'अवयवसद्भाव'-कस्मात्-'मूर्त्तिमता' (तेषा) 'सस्थानोपपत्ते' इति सम्बन्ध । मूर्तिमतामिति पद पञ्चम्यन्तमपि हेतु पदतया नतव्यम् । तथा च सावयवा परमाणव मूर्त्तिमत्वात् 'सस्थानवत्वाच्च' इत्यर्थ पर्यवसित । वृत्तिकृतस्तु मूर्त्तिमतामित्येतत् सस्थानवत्व हेतुमभिप्रयन्ति-मूर्त्तिमत्वादेव सस्थानवत्व परमाणूनामित्यर्थ ।

३ परमाणो सावयवत्वे हेत्वन्तरमाह पर -सयोगेति । सावयवा परमाणव-कस्मात्-सयोगोपपत्तेरिति सम्बन्ध ।

अत्र वार्त्तिकम्-"नन्विद सूत्र सस्थानवत्वादित्यनेनैव चरितार्थम्-सयोग विशेषस्य सस्थानवत्वेनाभिधानात्"। न चरितार्थम्-अवयवसयोगविशेषस्य सस्थानवत्वेनाभिधानात्-सयोगमात्र च सयोगशब्देनाभिधीयत इति न दोष (पौनरुक्त्यम्) । पौनरुक्त्यमेवापाकुर्वन्मूर्त्तसस्थानयोर्भेद स्पष्टीकरोति । तत्र मूर्त्तिर्नामाव्यापिद्रव्यस्य षड्विध परिमाणम्-अणु महद्दीर्घं ह्रस्व परमह्रस्व परमाण्विति । (सस्थान) नाम प्रचयाख्य सयोग । 'सयोगो'ऽप्राप्तिपूर्विका प्राप्तिरिति

"मध्ये सन्नणु पूर्वापराभ्यामणुभ्या संयुक्तस्तयोर्व्यवधान कुरुते। व्यवधानेनानुमीयते-पूर्वभागेन पूर्वेणाणुना सयुज्यते परभागेन परेणाणुना सयुज्यते। यौ तौ पूर्वापरौ भागौ तावस्यावयवौ। एव सर्वत सयुज्यमानस्य सर्वतो भागा अवयवा इति"।

यत्तावत्[1]-मूर्तिमता सस्थानोपपत्तेरवयवसद्भाव-इति, अत्रोक्तम्[2], किमुक्तम्[3]? विभागे[4]ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्ते, अण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति।

यत्पुनरेतत्[5]-"सयोगोपपत्तेश्चेति" स्पर्शवत्त्वा[6]द्व्यवधानम्, आश्रयस्य चाव्याप्त्या भागभक्ति, उक्तं[7] चात्र। स्पर्शवानणु[8]-स्पर्शवतोरण्वो प्रतिघाताद्व्यवधायको न सावयवत्वात्।

"स्पर्शवत्त्वाच्च[9] व्यवधाने सत्यणुसयोगो नाश्रय व्याप्नोतीति

---

१ तदेव सर्वशून्यतामत प्रासङ्गिकमुपपाद्य तदपाकर्तुं उत्सूत्रमेवोपक्रमते भाष्यकार-यत्तावदिति। त्रयोविंशसूत्रोक्तस्य परमाणुसावयवत्वसाधकहेतोरनुवाद।

२ तदपाकरिष्यन् पूर्वोक्तमेव स्मारयति-अत्रोक्तमिति।

३ विस्मरणशील पर पृच्छति-किमुक्तमिति।

४ यदुक्त तत् स्मारयति-विभाग इति। अण्ववयवस्येति च। पूर्वं तावत् षोडशसूत्रभाष्यस्थमपर च द्वाविंशसूत्रभाष्यस्थमिति।

अत्र वार्त्तिककारोऽपरमपि दूषणमाह। तद्यथा-'सावयव परमाणुरिति प्रतिज्ञापदे व्याहते। सावयवत्व नाम-समानजातीयारब्ध समानजातीयाश्रितमिति। अवयवश्च तस्याधार इति। एव सावयव परमाणुरिति ब्रुवता कार्यविशेष परमाणुश्चेत्युक्त भवति। कार्यविशेषश्च परमाणुरिति व्याहतम्'-इत्यादि तत एवानुसन्धेयम्।

५ चतुर्विंशसूत्रोक्त पराभिमत हेतुमनुवदति-यत् पुनरेतदिति।

६ तस्याशय विवृणोति स्पर्शवत्त्वादिति। यदा परमाणुत्रयेणैकमवयव्यारब्ध तदा मध्यवर्तिना परमाणुना पूर्वापरयो परमाण्वोर्व्यवधान परमाणो स्पर्शवत्त्व एव सम्भवति। सयोगश्च स्वाश्रय न व्याप्नोतीति सयोगवत्त्वादेव परमाणोर्भागा सन्तीति सिद्धम्भवतीत्यर्थ।

७ एतत्परिहारमपि द्वाविंशसूत्रभाष्योक्तमेव स्मारयति। उक्त चात्रेति।

८ परिहारस्याशय विवृणोति-स्पर्शवानिति।

९ उक्त परिहार दूषयति पर-स्पर्शवत्त्वादिति।

भागभक्तिर्भवति भागवानिरवयवमिति"। उक्तं चात्र[2]—विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्'—'तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध' इति ॥ २४ ॥

"मूर्त्तिमतां[3] च संस्थानोपपत्तेः", "संयोगोपपत्तेश्च" परमाणूनां सावयवत्वमिति हेत्वो —

## अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

यावन्मूर्तिमद्यावच्च संयुज्यते तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू। सा चानवस्था नोपपद्यते। सत्यामनवस्थायां सत्यौ हेतू स्याताम्। तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति।

विभागस्य च विभज्यमानहानिर्नोपपद्यते तस्मात्प्रलयान्तता नोपपद्यत इति।

अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदानां गुरुत्वस्य चाग्रहणं, समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति ॥ २५ ॥

( ४ ) बाह्यार्थभङ्गनिराकरणप्रकरणम्[5]–प्रासङ्गिकम्।

---

१ भागभक्तिरिति। पूर्वापरभागाभ्यां विभाग इत्यर्थः। पूर्वेण भागेन पूर्वपरमाणुना संयुज्यतेऽपरेण चापरपरमाणुनेति प्राप्तम्परमाणोस्सावयवत्वमित्याशयः।

२ पराङ्गीकृतं दूषणमपाकुर्वन् पूर्वोक्तमेव स्मारयति—उक्तं चात्रेति। 'विभागेऽल्पतरेति' षोडशसूत्रभाष्यस्थं वाक्यं, 'तदवयवस्येति' द्वाविंशसूत्रभाष्यस्थम्।

३ एवं त्रयोविंशचतुर्विंशसूत्रोक्तस्यासूत्रमेव परिहारमुक्त्वा सौत्रं परिहारमुपक्रमयितुं परोक्तौ हेतू अनुवदति मूर्त्तिमतामिति।

४ परमाणुसावयवत्वसाधकहेतुनिराकरणपरं सूत्रम्—अनवस्थेति। पूर्वपक्षयुक्त्या परमाणुनिरवयवत्वप्रतिषेधो न युक्तः—कस्मात्? यस्मादुक्तौ हेतू अनवस्थां प्रवर्तयतः—अनवस्था चानुपपन्नेत्यर्थः।

५ एवं तावद् द्वाभ्यां प्रकरणाभ्यां सावयवं निरवयवं चार्थं प्रसाध्य तत्प्रसङ्गागतबाह्यार्थापह्नवनिराकरणार्थं प्रकरणान्तरमिदमारब्धव्यं भवति। यदि बाह्योऽर्थो नैवास्ति तर्हि नास्त्येवावकाशोऽवयवावयविव्यवस्थायाः इत्यस्याः सामञ्जस्यार्थं बाह्यार्थनिराकरणमपाकरणीयम्।

" यदिदं भवान्बुद्धीराश्रित्य बुद्धिविषया सन्तीति मन्यते मिथ्याबुद्धय एता । यदि हि तत्त्वबुद्धय स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धि-विषयाणामुपलभ्येत—

" बुद्ध्या विवेचनात्तु भावाना याथात्म्यानुपलब्धिस्तन्त्वप-कर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः " ॥ २६ ॥

" यथाऽय तन्तुरय तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तर किञ्चिदुपलभ्यते यत्पटबुद्धेर्विषय स्यात् । याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति । एव सर्वत्रेति " ॥ २६ ॥

व्याहतत्वादहेतुः ॥ २७ ॥

यदि बुद्ध्या विवेचन भावाना, न सर्वभावाना याथात्म्यानुपलब्धि । अथ सर्वभावाना याथात्म्यानुपलब्धिर्न बुद्ध्या विवेचनम् । भावानाम् बुद्ध्या विवेचन याथात्म्यानुपलब्धिश्चेति व्याहन्यते । तदुक्तम्—' अवयवावयविप्रसङ्ग श्चैवमा प्रलयात् '—इति ॥ २७ ॥

तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

---

१ अत्र प्रमेयस्य ज्ञानस्वरूपत्वम् वति सशये पूर्वपक्षमाह विज्ञानवादी-यदिदमिति । बुद्धीनां विषया सन्तीति मत मिथ्येति भाव ।

एवं क्रमेण परमाणुष्वपि बुद्ध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यवस्तु स्थूल वा क्षोदीयो वास्तीति सर्वा एव बुद्धय स्वाकारमबाह्य बाह्यतयाऽऽलम्बमाना मिथ्याभूता इति पूर्वपक्षहृदयम् । तथा चोक्तम्माध्यमिके —

बुद्ध्या विविच्यमानाना स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिता ।

२ पूर्वपक्षहेतु सिद्धान्ती दूषयति—व्याहतत्वादिति सूत्रम् ।

३ प्रकृतविषयक पूर्वमुक्त स्मारयति—तदुक्तमिति । पञ्चदशसूत्र भागित्यर्थं ।

अत्र वार्त्तिककारो दूषणान्तरमप्याह—सर्वभावानामनुपपत्तिरिति ब्रुवाण प्रमाण पर्यनुयोज्य । यदि प्रमाण ब्रवीति व्याहत भवति, प्रमाणस्यापि भाव रूपत्वात् । अथ न ब्रवीति अर्थोऽस्य प्रमाणाभावादेव न सिध्यतीति ।

४ यत् पुनरेतत्—"यदि व्यतिरिक्त पटादि द्रव्य स्यात् तन्तुषु बुद्ध्या विविच्य-मानेषु पृथगुपलभ्येत "—इति तत्र समाधत्त-तदाश्रयत्वादिति सूत्रम् । यत् पटस्त न्तुभ्यः पृथङ् न गृह्यते तत्र कारण तन्तुपटयोराश्रयाश्रितभाव एवेत्यथ ।

कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः पृथङ् नोपलभ्यते। विपर्यये पृथग्ग्रहणात्। यत्राश्रयाश्रितभावो नास्ति तत्र पृथग्ग्रहणमिति। बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु, यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २८ ॥

प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः। यदस्ति यथा च, यन्नास्ति यथा च, तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति। या च प्रमाणत उपलब्धिस्तद्बुद्ध्या विवेचनं भावानाम्। तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः। परीक्षमाणो हि बुद्ध्याऽध्यवस्यति–इदमस्तीदं नास्ति–इति। तत्र न सर्वभावानुपपत्तिः ॥ २९ ॥

प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

एवं च सति सर्वं नास्तीति नोपपद्यते। "कस्मात्?" 'प्रमाणानुपपत्त्युपपत्तिभ्याम्'। यदि सर्वं नास्तीति प्रमाणमुपपद्यते, सर्वं नास्तीत्येतद्व्याहन्यते। अथ प्रमाणं नोपपद्यते सर्वं नास्तीत्यस्य कथं सिद्धिः। अथ प्रमाणमन्तरेण सिद्धिः सर्वमस्तीत्यस्य कथं न सिद्धिः ॥ ३० ॥

"स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः" ॥ ३१ ॥

१ बुद्ध्या विविच्यमानानामेवाभावानामणूनां [illegible] गृह्यते पृथक्त्वात्–पृथक्त्वमिति। यत्र [illegible] इन्द्रियार्थो तत्र पृथग्ग्रहणं [illegible] अतीन्द्रियेष्वण्वादिषु आनुमानिकम् [illegible] पृथग्ग्रहणमिति [illegible]।

२ अत [illegible] इति [illegible] बुद्ध्या [illegible] विविच्यमानस्य याथात्म्येन पृथग्ग्रहण [illegible] इति सूत्रम्। 'प्रमाणतः' [illegible] 'अर्थस्य' [illegible] 'प्रतिपत्तेः' [illegible]।

३ [illegible]–प्रमाणेति सूत्रम्। [illegible] इति शेषः।

[illegible] 'उपपत्तेः' [illegible]। अथ तत्र प्रमाणं [illegible]।

४ [illegible]

" मायागन्धर्वनगरमृगतृष्णिकावद्वा " ॥ ३२ ॥

" यथा स्वप्ने न विषया. सन्त्यथ चाभिमानो भवति, एवं न प्रमाणानि प्रमेयाणि च सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति "॥३१॥॥३२॥

हेत्वभावादसिद्धिः ॥ ३३ ॥

स्वप्नान्ते विषयाभिमानवत्प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्तीति 'हेत्वभावादसिद्धि'। स्वप्नान्ते चासन्तो विषया उपलभ्यन्त इत्यत्रापि हेत्वभाव ।

"प्रतिबोधेऽनुपलम्भादिति चेत् ?" प्रतिबोधविषयोपलम्भादप्रतिषेध । यदि प्रतिबोधेऽनुपलम्भात्स्वप्ने विषया न सन्तीति, तर्हि य इमे प्रतिबुद्धेन विषया उपलभ्यन्ते, उपलम्भात्सन्तीति ।

विपर्यये हि हेतुसामर्थ्यम् । उपलम्भात् सद्भावे सत्यनुपलम्भादभाव· सिद्ध्यति । उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति । यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति तत्र भावेनाभाव समर्थ्यत इति ।

स्वप्नान्तविकल्पे च हेतुवचनम् । स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्य । कश्चित्स्वप्नो भयोपसंहित, कश्चित्प्रमोदोपसंहित·, कश्चिदुभयविपरीत, कदाचित्स्वप्नमेव न पश्यतीति । निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विकल्पोपपत्ति· ॥ ३३ ॥

स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

---

जागरितप्रत्ययविषयाणां सत्त्वमेव भवदीयप्रतिज्ञाविरुद्ध साधयतीत्यर्थः । एतदुक्तम्भवति । स्वप्नज्ञानस्यायाथार्थ्यमिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्यय एवास्य बाधको वक्तव्यः । न चासावसमीचीनस्तद्बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययस्याभ्युपगन्तव्यमिति । तथा च जागरितान्ते विषयोपलब्धिवदित्यनुपपन्नम् ।

१ परोक्तौ दूषणान्तरमाह–स्वप्नान्तविकल्प इति ।

२ हेतुवचनमिति । हेतुर्वाच्य इत्यर्थ ।

३ स्वार्थं वर्णयति–स्वप्नविषयेति । स्वप्नज्ञानानि विचित्राणि भवन्ति । तत्र वैचित्र्ये को हेतुरिति वक्तव्यम् ।

४ स्वप्नज्ञानस्यापि सद्विषयत्वमेवेत्यत्र साधकमाह–स्मृतिसङ्कल्पवदिति सूत्रम् ।

पूर्वोपलब्धविषय । यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते, तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पत इति । एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन । यः सुप्तः स्वप्नं पश्यति स एव जाग्रत्स्वप्नदर्शनानि प्रतिसन्धत्ते–इदमद्राक्षम्–इति । तत्र जाग्रद्बुद्धिवृत्तिवशात्स्वप्नविषयाभिमानो मिथ्येति व्यवसायः । सति च प्रतिसन्धाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः–स्वप्नविषयाभिमानो मिथ्येति ।

उभयाविशेषे तु साधनानर्थक्यम् । यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानात् ।

अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः । अपुरुषे स्थाणौ पुरुष इति व्यवसायः स प्रधानाश्रयः । न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति । एवं स्वप्नविषयस्य व्यवसायो–हस्तिनमद्राक्षं पर्वतमद्राक्षमिति–प्रधानाश्रयो भवितुमर्हति ॥ ३४ ॥

एवं[2] च सति–

मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे[3] ॥ ३५ ॥

स्थाणौ[4] पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिः–अतस्मिंस्तदिति ज्ञानम् । स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम् । तत्त्वज्ञानेन च मिथ्यो

---

१ सूत्रशेषं पूरयति–पूर्वेति । तथा च 'स्मृतिसङ्कल्पवत् स्वप्नविषयाभिमानोऽपि पूर्वोपलब्धविषय एवेति' सूत्रस्वरूपम् । विपरीकुरुत इत्युभयवादिसम्मतम् । ततश्चानयोर्विषयौ न प्रतिषेद्धुं शक्येते ।

२ ननु भ्रमस्यापि सद्विषयकत्वे तत्प्रतिरोधः कथं स्यादित्याशङ्कायां उत्तरमुपक्रमते–एवं चेति । मिथ्याज्ञानस्य तत्त्वज्ञानापेक्षत्वे सतीत्यर्थः ।

३ भ्रमज्ञानस्य प्रतिरोधप्रकारमाह–मिथ्योपलब्धेरिति सूत्रम् ।

४ सूत्रार्थमाह–स्थाणाविति । इदमत्राकूतम्–मिथ्योपलब्धीनां बाह्यानालम्बनत्वमास्थाय तत्त्वबुद्धीनां बाह्यानालम्बनत्वं साधनीयम् । तासां बाह्यानालम्बनत्वं च बाधकाधीनम् । बाधकं चात्र रजतादिभ्रमे समारोपितरजताद्यभिमानमेव निवर्तयति न तु पुरोऽवस्थितमर्थसामान्यमपि शुक्लभास्वरम् । तस्माच्च बाधकानुरोधादपि मिथ्याज्ञानं बाह्यानालम्बनमिति स्वप्नवदिति दृष्टान्तः साध्यविकल इति ।

पलब्धिर्निवर्त्तते, तार्थः स्थाणुपुरुषसामान्यलक्षणः । यथा प्रतिबोधे या ज्ञानवृत्ति-

[illegible]

[illegible]

स्यतेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति ।

उपादानवच्च मायादिषु मिथ्याज्ञानम्[1] । प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवान्परस्य मिथ्याध्यवसायं करोति सा माया । नीहारप्रभृतीनां

[illegible]

[illegible]

अन्तिकस्थस्य विपर्यये तदभावात् । क्वचित् कदाचित् कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम् । दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु, सुप्तप्रतिबुद्धयोश्च स्वप्नविषये । तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यत इति[2] ॥ ३५ ॥

[illegible] ॥ ३६ ॥

[illegible] मित्तोपलम्भात् सद्भावोपलम्भाच्च । उपलभ्यते हि मिथ्याबुद्धिनिमित्तम् । मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात् । तस्मान्मिथ्याबुद्धिरप्यस्तीति ॥ ३६ ॥

---

१ स्वप्नज्ञानस्य सदाश्रयत्वमुपपाद्य मायाज्ञानस्यापि सदाश्रयत्वमुपपादयति—उपादानवदिति । मायादिष्वपि यन्मिथ्याज्ञानं तस्यापि उपादानं कारणं सदेवेत्यर्थः ।

२ उपसंहरति—तदेतदिति । यद्यत्यन्तमेव निरात्मकमसदेव सर्वथा सर्वमभविष्यत्तर्हीदृग्बुद्धिद्वैतं न भवेदित्यर्थः ।

३ बाह्यमात्रापलापिनं विज्ञानवादिनं निरस्य सर्वशून्यवादिनं निराकर्तुमुपक्रमते-माध्यमिको हि सर्वशून्यवादी मिथ्याबुद्धिदृष्टान्तेन बाह्यापह्नवं कृत्वा तेनैव दृष्टान्तेन विज्ञानस्याप्यभावं प्रसाध्य भावानां सर्वथा विचारासहत्वं व्यवस्थापयति-तत्प्रत्याह-बुद्धेश्चेति सूत्रम् । 'बुद्धेः' ज्ञानस्यापि 'एवम्' अप्रतिषेध एव-कुतः-'निमित्तसद्भावोपलम्भात्' । यस्मात्तस्य निमित्तं सद्भावश्चोपलभ्यते तस्मादित्यर्थः ।

सोऽयं माध्यमिकः सर्वैरनुभूयमानां मिथ्याबुद्धिं नैवापह्नोतुमर्हति-मिथ्याबुद्धिं च प्रतिपद्यमानेन तदाश्रयभूतो बाह्योऽप्यर्थोऽभ्युपगन्तव्य इति हृदयम् ।

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥**

तत्त्वं स्थाणुरिति-प्रधान पुरुष इति-तत्त्वप्रधानयोरलोपाद्भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात्। एवं पताकायां बलाकेति, लोष्टे कपोत इति। न तु समाने विषये मिथ्याबुद्धीनां समावेशः, सामान्यग्रहणव्यवस्थानात्। यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते।

गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात्तत्त्वबुद्धय एव भवन्ति। तस्मादयुक्तमेतत्-प्रमाण-प्रमेयबुद्धयो मिथ्येति ॥ ३७ ॥

(५) तत्त्वज्ञानविवृद्धिप्रकरणम्।

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्। "अथ कथं तत्त्वज्ञानमुत्पद्यत इति ?"—

१ ज्ञानमात्रस्यासद्विषयत्वस्य सद्विषयकत्वाभावस्य वा साधनाय मिथ्याज्ञानदृष्टान्तो न कल्पत इत्याह-तत्त्वेति सूत्रम्। 'तत्त्वं' धर्मिस्वरूपम् (स्थाणु) 'प्रधानम्' आरोप्यम् (पुरुष)-तयोर्भेदोऽस्ति यस्मात् तस्मात् 'मिथ्याबुद्धे द्वैविध्योपपत्ति'। धर्मिस्वरूपविषये प्रमात्वमारोप्यांशे चाप्रमात्वमित्यर्थः। प्रमाप्रमारूपत्वान्मिथ्याज्ञानस्य तद्दृष्टान्तेन ज्ञानानामत्यन्तासद्विषयकत्वं न साधयितुं शक्यमिति हृदयम्।

२ एवं प्रासङ्गिकं बाह्यार्थप्रकरणं समर्थितम्। पूर्वस्मिन्नाह्निकादौ दोषनिमित्तता-प्रकरणे तत्त्वज्ञानोत्पत्तये क्रमविशेषश्च दर्शित। न चैतावता कृतार्थता। तस्य साक्षात्कारमोहोन्मूलनासमर्थत्वात्। अतस्तथाविधतत्त्वज्ञानसमुत्पादपर्यन्तमेतद्विवर्तनीयमिति तदर्थमिदं पञ्चमप्रकरणमिति परिशुद्धिकृत।

"ननु शास्त्राधीनं ज्ञानं क्षणिकम्। अतस्तन्नाशे पुनर्मिथ्याज्ञानं स्यादेव। न हि तादृशं किञ्चिदपि ज्ञानं सवासनमिथ्याज्ञानसमुन्मूलक्षमम्" इतीमां शङ्कामुद्दिश्य तत्त्वज्ञानविवृद्धिप्रकरणमारम्भणीयमाप्नोति। 'तत्त्वज्ञानविवृद्धि' तत्त्वज्ञानवासना तस्यां सत्यां भवत्येव मिथ्याज्ञानस्यात्यन्तिको नाश —इति वृत्तिकारा।

३ प्रकरणार्थमवतारयितुं पूर्वोक्तं स्मारयति-दोषनिमित्तानामिति।

४ तत्र शङ्कते पूर्वपक्षी—अथ कथमिति। न तावदागमत उपपत्तितो वा तत्त्वज्ञानमहङ्कारनिवृत्तिं कर्तुमुत्सहते, दोषनिमित्तेषु च सत्स्वपज्ञानानामपि पूर्ववदहङ्कारदोषानुवृत्ते। साक्षात्कारस्तु तत्त्वज्ञानस्योपायाभावादयुक्त एवेति प्राश्निकस्य हृदयम्।

समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्त्वबुभुत्साविशिष्टः । सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते । तदभ्यासवशात्तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

यदुक्तं[2]—" सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते "—इत्येतत्

" न[3], अर्थविशेषप्राबल्यात् " ॥ ३९ ॥

" अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद्युक्तम् । कस्मात्? अर्थविशेषप्राबल्यात् । अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा, यथा स्तनयित्नुशब्दप्रभृतिषु । तत्र समाधिविशेषो नोपपद्यते " ॥ ३९ ॥

" क्षुदादिभिः प्रवर्त्तनाच्च " ॥ ४० ॥

" क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्त्तन्ते । तस्मादैकाग्र्यानुपपत्तिरिति " ॥ ४० ॥

अस्त्वेतत्[4]समाधिं विहाय व्युत्थानं, व्युत्थाननिमित्तं समाधिप्रत्यनीकं च, सति त्वेतस्मिन्—

पूर्वकृत[5]फलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतो—जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः । फलानुबन्धो योगाभ्याससामर्थ्यम् । निष्फले ह्यभ्यासे नाभ्यासमाद्रियेरन् । दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥ ४१ ॥

---

१ अस्योत्तर–समाधीति सूत्रं तत्त्वज्ञानविवृद्धौ हेतुमाह ।

२ आक्षेपसूत्रमवतारयति–यदुक्तमिति । यदुक्तं सिद्धान्तिना तत् 'एतत्' नेति सूत्रेण सम्बन्धः ।

३ तत्राक्षेपसूत्रम्–नार्थेति । यदुक्तं तत्र–कस्मात्—' अर्थविशेषप्राबल्यात् ' । अर्थविशेषाणामप्राबल्यात् प्रबलैरिन्द्रियविषयैरपहृतमनसो धारणा नैव सम्भवति, तथा च समाध्यभ्यासाभावात् न तत्त्वसाक्षात्कार इति सूत्रार्थः ।

४ समाधानसूत्रमवतारयति–अस्त्वेतदिति । समाधिहानिस्तन्निमित्तको विक्षेपो भवतीत्येतत्र प्रतिपिपद्यते सत्स्वप्येतेषु ' तदुत्पत्तिः ' इति सूत्रेण सम्बन्धः ।

५ सिद्धान्तमाह–पूर्वकृतेति । ' पूर्वकृतः ' पूर्वशरीराभ्यस्तः समाधिः–तस्य फलम्, धर्मोत्थः संस्कारविशेषः, तस्य ' अनुबन्धः ' स्थेमा–तस्मात्–' तस्य ' समाध्युत्कर्षस्य ' उत्पत्तिः ' भवत्येवेति शेषः ।

प्रत्यनीकपरिहारार्थं च—

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥**

योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्तते। प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति। दृष्टश्च समाधिनाऽर्थविशेषप्राबल्याभिभवः—नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूत्—इत्याह लौकिक इति ॥ ४२ ॥

"यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते—"

**"अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥**

"मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति" ॥ ४३ ॥

**न, निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥**

कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यम्भावी बुद्धीनामुत्पादः। न च प्रबलोऽपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति। तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४४ ॥

**तदभावश्चापवर्गे ॥ ४५ ॥**

तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे। तत्र यदुक्तम्—अपवर्गेऽप्येवं प्रसङ्ग इति—तदयुक्तम्। तस्मात्सर्वदुःखविमोक्षोऽप-

---

१ ननु भवतु समाध्यभ्यासेन तदुत्कर्षः, रागादयस्तु तत्प्रत्यनीका वर्तन्त एव। ते च प्रतिबध्नन्त्येव समाध्युत्कर्षमित्यत आह—प्रत्यनीकेति। प्रत्यनीकानां निवारणायैव 'योगाभ्यासोपदेश' इति सूत्रेण सम्बन्धः।

२ ननु भवदुक्तेरयमाशयः प्रतिभाति यत्प्रबलतोऽनिच्छतोऽप्युत्पद्यन्त एव बुद्धयः केवलमबलेन समाधिना तास्तिरस्कृता एव वर्तमानाः पुरुषस्य विक्षेपं न जनयन्तीति। एवं सत्यभ्यनुज्ञायत एव भवताऽप्यनिच्छतोऽपि बुद्ध्युत्पत्तिः—तथा च सत्यपवर्गेऽप्यर्थविशेषस्य प्राबल्यादुत्पद्येरन्नेव बुद्धयः, इत्यपवर्गानुपपत्तिरेवेति शङ्कते पूर्वपक्षी—यद्यर्थेति।

[illegible] यदुक्तं पूर्वपक्षिणा तन्न—कस्मात्—[illegible] विपर्ययज्ञानोत्पत्तिरवश्यम्भाविनीति सम्बन्धः। सत्येव चेष्टाद्याश्रये शरीरे बाह्यविषया ज्ञानकरणं भवन्ति नान्यथेति सूत्राशयः।

